॥ श्रीः ॥

# सुदर्शनसुरद्रुमः

श्रीमन्महीशूरमहाराजाधिराजमहास्थानसभाभूषणैः

शेषार्यवंशमुक्ताफलैः श्रीयादवाद्रिनिवासरसिकैः

पण्डितमण्डलीसार्वभौमैः

**श्री ॥ उ ॥ म. अ. अनन्तार्यवर्यैः**

विरचितः ।

---

विद्वद्वरैः परिशोध्य

---

म. अ. अनन्तार्येण

प्र. भ. तो. नरसिंहार्येण च

कल्याणपुर-विचारदर्पण मुद्राक्षरशालायामङ्कयित्वा

प्राकाश्यं नीतः ॥




---

१८९९

---

मूल्य रू. २—०—०

॥ श्रीः ॥

# सुदर्शनसुरद्रुमः.



भव्योल्लासाय भूयाद्विनमदमरराड्दिव्यकोटीरकोटी-
रत्नाग्रप्रत्नमुक्तामणिगणविलसत्कान्तिकिञ्जल्कजुष्टम् ।
पादाब्जं श्रव्यनव्येतरफणितिसतीदिव्यसीमन्तसीमा-
सन्धार्यं श्रीपतेश्श्रीयदुशिखरिशिखारत्नदीपस्य विष्णोः ॥ १ ॥

चिरन्तनसरस्वतीचिकुरमल्लिकातल्लज-
प्रफुल्लनवमञ्जरीप्रविगलन्मधूलीझरी ।
कला कलयतां मुदं कमलनेत्रवक्षस्स्थली-
कपोपलतटीकनत्कनकरेखिका काचन ॥ २ ॥

पूर्वाचार्यपरम्परां प्रतिपदं वन्दे मुकुन्दे रतां
यस्याः प्राथमिको रमाप्रियसखो नाथादयो मध्यमाः ।
श्रीमच्छिन्द्रुलदेशिकस्तु चरमो येनाहमध्यापितः
शास्त्रं यत्पदसंश्रयात्प्रकथनो यद्देवतो यत्सुतः ॥ ३ ॥

जयन्तु जगतां श्लाघ्या जराजन्मनिरासकाः ।
पुरन्दरस्य यमिनां पदपङ्कजरेणवः ॥ ४ ॥

शेषार्यवंशवार्धीन्दुरनन्ताचार्यकोविदः ।
करोति विदुषां प्रीत्यै सुदर्शनसुरद्रुमम् ॥ ५ ॥

रङ्गाचार्यमनीषिणां निवसता गोवर्धने वर्धने
प्राज्ञानां करुणावशाद्विल्लसिलामाज्ञां पुरस्कुर्वता ।
मन्दोदीरितफल्गुदूषणवचोनिर्मूलनेच्छावता
ग्रन्थोऽयं रचितः फलं च गमितः श्रीपार्थसूतार्पणात् ॥६॥

---

इह तावत्प्रत्यक्षानुमानशब्दैस्तप्तमुद्राधारणस्य धर्मत्वं व्यवस्थाप्यते ॥

तत्र तप्तमुद्राधारणस्य धर्मत्वग्राहकं प्रत्यक्षं नेन्द्रियजन्यं, तादृशस्य प्रत्यक्षस्य धर्मत्वाविषयकत्वात् । किन्त्वीश्वरयोगिप्रभृतीनां प्रत्यक्षं, अस्मदादीनामपि तप्तमुद्राधारणांशे लौकिकं धर्मत्वांशेऽलौकिकं प्रत्यक्षं च, तद्ग्राहकम् ॥

न च—तादृशालौकिकप्रत्यक्षस्य श्रुतिस्मृत्यादिजन्यशाब्दबोध-गृहीतग्राहितया न प्रामाण्यसम्भवः, अज्ञाताबाधितार्थग्राहिताया एव प्रामाण्यरूपत्वादिति—वाच्यम् ; तथा सति स्मृत्यादीनामप्य-प्रामाण्यापत्तेः । एवं—तप्तमुद्राधारणं धर्मः, अलौकिकाविगीतशिष्टाचार-विषयत्वात्, दर्शादिवत्—इत्यनुमानं च तद्ग्राहकम् ॥

यत्तु—तप्तचक्रादिधारणं धर्म इत्यत्र न प्रत्यक्षं प्रमाणं, धर्मस्य प्रत्यक्षागोचरत्वात्; नाप्यनुमानं, श्रुत्यनुपजीविनोऽनुमानस्य धर्म-प्रमाणत्वायोगात्—इति ॥

अत्रोच्यते ॥ तप्तचक्रादिधारणविशेष्यकधर्मत्वप्रकारकप्रत्यक्षत्वा-वच्छेदेन प्रमात्वाभावस्साध्यते, उत प्रमात्मकप्रत्यक्षसामान्ये तद्विशे-ष्यकतत्प्रकारकत्वाभावः, प्रत्यक्षत्वावच्छेदेन चक्रादिधारणनिष्ठ-विशेष्यतानिरूपितधर्मत्वनिष्ठप्रमान्यनिरूपितप्रकारताकत्वाभावो वा ?

**नाद्यः**—तादृशप्रत्यक्षस्य भवन्मतेऽसिद्धत्वेन पक्षस्योभयवाद्यसिद्धत्वापत्तेः । अनात्मकतादृशप्रत्यक्षस्य प्रसिद्धावपि न निस्तारः; तादृशप्रत्यक्षस्यापि धर्मिनावच्छेदकांशे प्रमात्वसम्भवेन प्रमात्वसामान्याभावसाधने बाधात्, धर्मत्वनिष्ठविशेष्यतानिरूपितधर्मत्वप्रकारताकत्वाभावसाधनेऽपि तप्तमुद्राधारणं सन्ध्यावन्दनं च धर्म इति समूहालम्बनप्रत्यक्षे बाधात् । सामानाधिकरण्येन साध्यतास्वीकारे च तादृशप्रत्यक्षसामान्यस्य प्रामाण्यानिराकरणादसङ्गतिः; सामानाधिकरण्येन प्रमात्वाभावसिद्धावपि प्रत्यक्षविशेषस्य प्रामाण्यसम्भवाविरोधात्, धर्मस्य प्रत्यक्षागोचरत्वादिति हेत्वसङ्गतेश्च, तप्तचक्रादिधारणनिष्ठधर्मतायाः प्रमात्मकप्रत्यक्षागोचरत्वादितिहेत्वर्थत्वे च साध्याविशेषात् ॥

**न द्वितीयः**—अन्यांशे प्रमात्मकप्रत्यक्षे बाधात् तदंशे प्रमात्मकप्रत्यक्षस्य चाप्रसिद्धेः, महानसीयवह्निमति वह्न्यभावसाधनवत्तदंशे प्रमात्मकप्रत्यक्षे तद्विशेष्यकतत्प्रकारकत्वाभावसाधनासम्भवात् भ्रमान्यप्रत्यक्षत्वावच्छेदेन तत्साधनेऽप्यन्यांशे भ्रमात्मकप्रत्यक्षस्य प्रामाण्यानिराकरणादसङ्गतिः ॥

**नापि तृतीयः**—ईश्वरयोगिप्रत्यक्षादौ बाधात्, इन्द्रियजन्यप्रत्यक्षत्वावच्छेदेन तत्साधनेऽप्यन्यांशे लौकिकप्रत्यक्षमादाय बाधात् अलौकिकान्यप्रत्यक्षत्वावच्छेदेन तत्साधनेऽन्यांशेऽलौकिकप्रत्यक्षस्य प्रामाण्यानिराकरणादसङ्गतिः । तदंशे अलौकिकान्यत्वनिवेशेऽपि न निस्तारः, तदंशे लौकिकालौकिकोभयात्मकप्रत्यक्षस्य प्रामाण्यानिराकरणात् ॥

न च—ईश्वरयोगिप्रत्यक्षादेस्तप्तमुद्राधारणांशे धर्मत्वावगाहित्वस्य अस्माभिरनभ्युपगमान्न दोषः; प्रतिवादिरीत्या बाधस्य दोषत्वे अनुमानमात्रोच्छेदादिति—वाच्यम् । एवमपि साध्याप्रसिद्धेर्दुर्वार-

त्वात्, तादृशभ्रमान्यनिरूपितप्रकारताया अप्रसिद्धत्वात्, प्रत्यक्षत्वसामानाधिकरण्येन तत्साधने च सिद्धसाधनं; धर्मस्य प्रत्यक्षागोचरत्वादिति हेतुरप्ययुक्तः, व्यधिकरणत्वात्। धर्मत्वाविषयकत्वादिति हेतुकरणेऽपि प्रतिवादिरीत्या असिद्धिः; तप्तमुद्राधारणगतधर्मत्वं प्रत्यक्षग्राह्यमिति वदन्तं प्रत्येवानुमानप्रयोगात् तादृशधर्मत्वस्य प्रत्यक्षग्राह्यतामनभ्युपगच्छन्तं प्रत्यनुमानप्रयोगे त्वनुमानवैफल्यात् सिषाधयिषया न्यायप्रयोगस्य चासाम्प्रदायिकत्वात्। नापीत्याद्यप्ययुक्तं; अनुमानप्रामाण्यस्य पूर्वमुक्तत्वात्, अनुमानविशेषस्य प्रमाणत्वाभावेन तत्सामान्यस्य प्रमाणत्वाभावसाधनायोगाच्च॥ न च—श्रुतेरभावस्य वक्ष्यमाणतया तदुपजीव्यनुमानस्यासम्भवात्, तदनुपजीव्यनुमानस्य च प्रमाणत्वायोगादनुमानसामान्यस्य तदंशेऽप्रामाण्यं युक्तमिति—वाच्यम्; वक्ष्यमाणरीत्या श्रुतेरभावस्यासिद्धेः॥ न च श्रुतिसद्भावेऽपि तदुपजीव्यनुमानस्यानुवादित्वादप्रामाण्यमिति वाच्यम्; तथा सति स्मृत्यादेरप्यप्रामाण्यापत्तेः॥ —इति॥

एवमेव प्रत्यक्षानुमानादिपदानां कारणपरत्वेऽप्युक्तरीत्यैव दोषो बोध्य इति दिक्॥

तत्र प्रमाणभूतशब्दस्तावत् श्रुतिस्मृतिपुराणपाञ्चरात्राणि। तत्र श्रुतिरपि पठ्यमानश्रुतिः खिलश्रुतिश्चेति द्विविधा। तत्र पठ्यमानश्रुतिः प्रथममुदाह्रियते॥

**शतपथे तावत्—**

"अथ कात्यायनः पप्रच्छ। याज्ञवल्क्य इति होवाच— परं ब्रह्मेत्येको देवो विश्वतश्चक्षुरुत विश्वात्मा विश्वतोबाहुरुत एष पुरुषोऽन्तर्यामोऽन्तर्यामस्स विश्वतोमुखस्सर्वात्मा विश्वतस्पादिति। नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत इति। सं बाहुभ्यां नमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः। पुरुषोऽन्तर्यामोऽ

न्तर्यामः । स आदित्यतेजो भवति, स आदित्यलोको भवति, स विष्णुरेव भवति, स विष्णुलोको भवति । तप्तं चक्रं द्विभुजे धार्यमित्यग्निहोत्रमेव लोको भवत्यूर्ध्वपुण्ड्रमालिखेत्तस्माद्द्विरेखं भवति । भूःस्वयम्भूर्ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनः पप्रच्छ । याज्ञवल्क्य इति होवाच—ज्ञानं वै पुरुषो ब्रह्मणो जायते ब्राह्मणो भवति, वसिष्ठः कश्यपोऽत्रिर्जमदग्नि र्विश्वामित्रोऽयं व्यास पाराशर्यस्सनकादयो देवास्स ब्रह्मलोको भवति, तप्तं चक्रं द्विभुजे धार्यमिति स विष्णुलोको भवति सोऽनन्तलोको भवति स पुण्यलोको भवति स वै पुण्यो भवति य एवं वेद ॥

"अथ कात्यायनः पप्रच्छ । याज्ञवल्क्य इति होवाच—आदित्यः पुरुषस्स आदित्यः कस्मिन् प्रतिष्ठितश्चाध्यात्मं च प्रतिष्ठितं वेद प्रति तिष्ठति, प्रजया पशुभिरस्मिन् लोकेऽमृतत्वमेति पापं हरति, सुदर्शनं धार्यमित्यूर्ध्वपुण्ड्रं द्विरेखं भवति, ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनः पप्रच्छ । याज्ञवल्क्य इति होवाच—आप एव यस्यायतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणं नारायणं पुरुषं सर्वस्यात्मनः परायणं विष्णुरेव भवति तप्तं चक्रं द्विभुजे धार्यमिति ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनःपप्रच्छ । याज्ञवल्क्य इति होवाच—इदं वै तत्पुरुषस्य परायणो भवति तप्तं चक्रं द्विभुजे धार्यमिति, इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं वै भरद्वाजः, इमावेव विश्वामित्र-जमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निः । इमावेव वसिष्ठकाश्यपा वयमेव वसिष्ठोऽयं काश्यपो वामदेवोऽत्रिर्वाचा ह्यन्नमद्यतेऽ तद्यदत्ति

तस्यैतस्य सर्वस्यात्ता भवति सर्वमस्यान्नं भवति स विष्णुरेव भवति य एवं वेद ॥

"अथ कात्यायन पप्रच्छ । याज्ञवल्क्य इति होवाच-पृच्छामि त्वा परम त पृथिव्या पृच्छामि यत्र पुरुषस्य नाभिः, ब्राह्मणो जायत इति । देवासः पितरो येन विधृतेन बाहुना सुदर्शनेन प्रयतास्स्वर्गं लोकमायन् । येनाङ्किता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्त्यग्निना वै होत्रा तप्तं चक्रं द्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिंगंत्तस्मात् द्विरेख भवति पुनरागमनं न याति ब्रह्मणस्सायुज्यं सलोकता जयति य एवं वेद ॥ ※ ॥

"अथ कात्यायनेति होवाच- विष्णुरिन्द्रो वै देवा इन्द्रो वै नारायणान्नु जायते, किंदैवतोऽस्यां विष्णुदैवत इति, स विष्णुः कस्मिन् प्रतिष्ठित इति. .रूपाणि पश्यति, कस्मिन् रूपाणि प्रतिष्ठितानीति, हृदय इति होवाच, तप्तं चक्रं द्विभुजे धार्यमिति, ब्रह्मणस्सायुज्यं सलोकता जयति य एवं वेद ॥

"अथ कात्यायनेति होवाच-परमपुरुषो वै देवा मनो वै ब्रह्म मनोऽनन्तानन्तलोके निवसति तप्तं चक्रं द्विभुजेधार्यमिति ब्राह्मणास्तद्वहन्त्यग्निना वै होत्रा तप्त तनुरित्यापोऽन्तरिक्षं समुद्रं गच्छन्त्यथापो देवास्समुद्रं गच्छन्ति यथाह वै देवा ब्राह्मणाः केशवं प्रति गच्छन्ति ॥

"अथ कात्यायनेति होवाच-पुरुषश्चन्द्रमस्यादित्य कस्मिन् प्रतिष्ठित इत्यादित्यान्तःपुरुषस्य देवस्य देवनादिगुणयुक्तस्य हिरण्यगर्भोपाध्यवच्छिन्नेति ब्राह्मणा भगवन्तो यो वः कामयते मनो वै कामं मनोऽनन्ता मनो वै ब्रह्म मनो वै विष्णुरिति ब्राह्मणा धारयन्त्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनेति होवाच-सर्व तदिदं सर्वात्मनः परायणं नारायणं महाज्ञेयं विश्वात्मानं परायणमिति देवो भूत्वा देवासः पितरो विदुरित्यात्मा गुहायां निहितोऽस्य इत्यन्तर्यामो मघवन् मादयस्व स्वाहोर्वन्तरिक्षमन्वेमि स्वां कुतोऽसीति ब्रह्मणेति होवाच, तत्र चक्रं द्विभुजे धार्यमिति, ब्रह्मणस्सायुज्यं सलोकतां जयति य एव वेद ॥"

—इति ॥

**त्रिष्वपि वेदेषु**—"पवित्रं ते विततं ब्रह्मणस्पते, प्रभुर्गात्राणि पर्येषि विश्वतः, अतप्ततनूर्न तदामो अश्नुते, शृतास इद्वहन्तस्तत्समाशत ॥" —इति ॥

**यजुषि काठके**—"चरणं पवित्रं विततं पुराणं, येन पूतस्तरति दुष्कृतानि, तेन पवित्रेण शुद्धेन पूता, अति पाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रम्, ज्योतिष्मद्भ्राजमानं महस्वत्, अमृतस्य धारा बहुधा दोहमानं, चरणं नो लोके सुधितां दधातु ॥"—इति ॥

**ऋचि साम्नि च**—"चमूषच्छ्येनश्शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् । अपामूर्मिं स च मानस्समुद्रं तुरीयं धाम महिषो विवक्ति ॥" —इति ॥

**तत्र पवित्रं त इतिश्रुतेरयमर्थः** ॥ ब्रह्मण'—चतुर्मुखस्य । पते—नियामक, चेष्टासामान्यप्रयोजकसङ्कल्पवत्त्वं तन्निष्ठस्वत्वनिरूपकत्वं वा तत्पतित्वं । प्रभुः—चेष्टासामान्यप्रयोजकसङ्कल्पाश्रयस्त्वं । विश्वत –विश्वस्य, सार्वविभक्तिकस्तसि । सर्वेषां गात्राणि पर्येषि—व्याप्नोषि, अन्तर्यामिरूपेण वर्तसे; गात्रत्वव्यापकसंयोगानुकूलव्यापाराश्रय इति यावत् । ते—व्यापकस्य तव; पवित्रं विततं—अग्निसन्तप्तस्वसंयोगजन्यकिणवत्त्वसम्बन्धेनाऽऽस्तिकजनसामान्यनिष्ठं ॥ तथा च—स्वीयान्तर्यामिरूपवत्तासम्बन्धेन गात्रत्वव्यापकस्य तव चक्रं उक्तसम्बन्धेन योगाप्रयोज्यास्तिकजनगात्रत्वव्यापकमित्यर्थः । गात्रे योगाप्रयोज्यत्वनिवेशाच्च चक्रा-

ङ्कितानामपि योगिनां योगप्रयोज्यशरीरे चक्राङ्कनविरहेऽपि न-व्यापकत्वानुपपत्तिः । पवित्रशब्दस्य परिशुद्धित्राणकर्तृत्वावच्छिन्ने योगशक्तेस्सुदर्शनत्वावच्छिन्ने रूढेश्च सत्त्वाद्योगरूढता, 'पुनाति त्रायते चेत्यतः पवित्रं इति- एकायनश्रुत्या निरुक्तत्वात् ॥

'सुदर्शने च दर्भे च पवित्रं चणसूत्रके ।'

इति वेदनिघण्टुवचनात्—

'सुदर्शनं सहस्रारं पवित्रं चरणं पवि ।'

'सुदर्शनं हरेश्चक्रं पवित्रं चरणं पविः ।'

इति निघण्टुवचनाच्च ॥

पाद्मे च—

'पवित्रं चरणं नेमी रथचक्रं सुदर्शनं ।
सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसं ।
नामानि विष्णुचक्रस्य पर्यायेण निबोधम ॥' —इति ॥

श्रीशास्त्रेऽपि— 'पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनं ।
पर्यायवाचका ह्येते चक्रस्य परमात्मनः ॥'—इति ॥

योगशक्यतावच्छेदकघटकपरिशुद्धिश्च—प्रत्यवायाभावप्रकारकभगवत्सङ्कल्पः ; विशेष्यतासम्बन्धेन तादृशसङ्कल्पं प्रति वह्निसन्तप्तस्वसंयुक्तभुजघटितदेहवत्तासम्बन्धेन सुदर्शनस्य हेतुत्वात्तस्य परिशुद्धिकरत्वोपपत्तेः । त्राणं च—मोक्षादिरूपं फलम् । तद्धेतुत्वमप्युक्तसम्बन्धेन सुदर्शनस्य बोध्यम् । तेनातप्ततनूः--तज्जन्यरूपपरावृत्त्याश्रयभुजवद्भिन्नः, तापस्य करणसाकाङ्क्षत्वात् पवित्रशब्दस्य प्रथमान्ततया क्रियासाकाङ्क्षत्वाच्च तेनेत्यध्याहारेण योजनाया युक्तत्वात् । तप्ता तनूर्यस्य स न भवतीत्यतप्ततनूरिति विग्रहाङ्गीकारेण तपधातो रूपपरावृत्त्यर्थकतया क्तप्रत्ययस्याश्रयार्थकतया तनुपदस्य भुजार्थकतया चोक्तार्थलाभात् । आमः—अदग्धपापः, अविनष्टमोक्षहेतुभूतोपासनादिप्रति-

बन्धकपापवानिति यावत् । तत्—ब्रह्म, नाश्नुते न प्राप्नोति। तच्छब्दस्य ब्रह्मत्व 'तदिति वा एतस्य महतो भूतस्य नाम भवति' 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति प्रमाणसिद्धम्। मोक्षहेतुभूतोपासनप्रतिबन्धकपापनिष्ठप्रतियोगितासम्बन्धेन नाशं प्रति स्वजन्यरूपपरावृत्त्याश्रयभुजघटितदेहावच्छिन्नत्वसम्बन्धेन सुदर्शनस्य हेतुतया तत्सम्बन्धावच्छिन्नतन्निष्ठावच्छेदकताकप्रतियोगिताकभेदस्य मोक्षाभावप्रयोजकत्वोपपत्ते, तापाभावविशिष्टतन्वा. मोक्षाभावप्रयोजकत्वस्याप्रामाणिकत्वात् । योगिनां चक्राङ्कितानामपि तापाभावविशिष्टदेहान्तरसत्त्वेन मोक्षानापत्त्या च अतप्ता तनूर्यस्येति विग्रहोपेक्षा । इत् —इदं, तत्सुदर्शनं; वहन्त —उक्तसम्बन्धप्रयोजकव्यापारवन्त । शृतासः—दग्धपापा , तत्समाशत—ब्रह्म प्राप्तवन्त—इत्यर्थः ॥ 'अत्र मोक्षहेतुत्वप्रतिपादनेनैवेष्टसाधनताज्ञानाधीनप्रवृत्त्युपपत्तावपि सद्विद्यादहरविद्यादिवद्विकल्पेन हेतुत्वे सर्वेषां प्रवृत्तिर्न स्यादित्यतो मोक्षाभावप्रयोजकभेदप्रतियोगितावच्छेदकत्वाभिधानम् ॥

**यत्तु**—पवित्रं त इत्यादिश्रुतिर्न चक्रधारणे प्रमाणं, तस्यापातप्रतीतत्वात् । न हि शब्दस्यापातप्रतीत एवार्थ ; 'चित्रया यजेत' 'आज्यैर्जुषते' 'आकाशादेव समुत्पद्यन्ते' इत्यादेरपि चित्राज्याकाशाद्यधिकरणपूर्वपक्षरीत्या चित्रद्रव्यघृतगगनाद्यर्थकत्वस्य 'अन्धो मणिमविन्दत्' इत्यादेरपि प्रतीतार्थपरत्वस्य प्रसङ्गेन मीमांसावैयर्थ्यात्, "बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति' इति स्मृतेश्च. 'यश्छन्दसां योगमावेद धीर.' इति श्रुत्यैव स्वार्थस्य गहनत्वोक्तेश्च ; किं तु मीमांसित । न च—आपातप्रतीतार्थत्यागे स्वार्थपरित्यागप्रसङ्गेन शब्द एव बाधितस्स्यादिति—वाच्यम् । आपातप्रतीतार्थमात्रपरित्यागेऽपि मीमांसितस्य स्वार्थस्यात्यागात् । आपातप्रतीतार्थत्यागे पुरुषभ्रान्तिरेव त्यक्ता भवति । तथा च—पवित्रं त इत्यादि-

श्रुतिरन्वयव्यतिरेकाभ्यां कृच्छ्रचान्द्रायणादितपसो मोक्षसाधनत्वप्रतिपादनपरा ॥ तथा हि–ब्रह्मणश्चतुर्मुखस्य पते हे विष्णो प्रभुस्त्वं विश्वेषां गात्राणि पर्येषि–व्याप्नोषि अन्तर्यामिरूपेण वर्तसे । तादृशस्य ते तव पवित्रं 'पूतं पवित्रं मेध्यम्' इत्यमरकोशात्–परिशुद्धं विततं विस्तृतं तत् प्रसिद्धं मोक्षरूपं सुखम् । अतप्ततनूः–तप्त तपः, भावे निष्ठा; तद्रहिता तनूः यस्येति स तथोक्तः; यद्वा–कर्तरिक्तप्रत्ययः । अत एव आमः–अपक्वः, अक्षीणपाप इति यावत्; एवंविधः पुमान् नाश्नुते– न प्राप्नोति; तत्तपः इद्वहन्तः–वहन्त एव, चरन्त एवेत्यर्थः । अत एव शृतासः–दग्धपापाः; समाशत–मोक्षं प्राप्तवन्तः ॥ तथा च–अन्वयव्यतिरेकाभ्यां तपसो मोक्षसाधनत्वपरत्वान्नेयं श्रुतिस्तप्तचक्रादिधारणे प्रमाणम् ॥ **—इति ॥**

**तन्न** । तथा सति पवित्रविततशब्दयोः सन्निकृष्टेन अतप्ततनूरित्यनेनोक्तरीत्या अन्वयसम्भवेऽपि विप्रकृष्टेन तच्छब्देनान्वये व्यवहितयोजनाप्रसङ्गात् ॥

न च–यत्पवित्रं विततं तेनाग्निदग्धेनातप्ततनूरिति त्वदीययोजनायां यत्तेनाग्निदग्धेनेत्यध्याहारप्रसङ्गेन तदपेक्षया व्यवहितान्वय एव युक्त इति–वाच्यम् । 'पश्य मृगो धावति' इत्यादौ वाक्यार्थभूतस्य धावनानुकूलकृतिविशिष्टमृगस्य कर्मतासम्बन्धेन दर्शनेऽन्वयवत् प्रकृतेऽपि त्वत्सम्बन्धिविततत्वविशिष्टस्य सुदर्शनस्य वाक्यार्थभूतस्य करणतासम्बन्धेन तपधात्वर्थेऽन्वयाङ्गीकारेणाध्याहारविरहात्; सम्भवत्येकवाक्यत्वे तत्त्यागायोगात् ॥

न च–विततत्वविशिष्टस्य सुदर्शनस्य नामार्थस्य धात्वर्थे कथं भेदेनान्वयः, अन्यथा काष्ठं पचतीत्यादौ काष्ठादेरपि करणतासम्बन्धेन पाकेऽन्वयापत्तिरिति–वाच्यम् । केवलनामार्थस्य धात्वर्थे भेदे-

नान्वयानङ्गीकारात् वाक्यार्थस्य धात्वर्थे भेदेनान्वयाङ्गीकारे क्षतिविरहात्। अत एव

"श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयश्शुभाः।
पराक्रमं च युद्धेषु जायते निर्भयः पुमान्॥"

इत्यत्र प्रथमान्तपदोपस्थितानां शुभत्वविशिष्टोत्पत्तीनां भेदेन श्रवणेऽन्वयस्सङ्गच्छते। विशेष्यतासम्बन्धेन भेदसम्बन्धावच्छिन्ननामार्थनिष्ठप्रकारताशालिशाब्दबोधे विभक्तिजन्योपस्थितिप्रथमान्तपदसमभिव्याहृतप्रथमान्तपदोत्तरधातुजन्योपस्थित्यन्यतरस्य कारणत्वकल्पनान्न विभक्तिजन्योपस्थितिं विना वाक्यार्थस्य भेदान्वयानुपपत्तिः। स्पष्टं चेदमाख्यातवादगादाधर्याम्॥

तथा च—अध्याहारविरहान्नानुपपत्तिः। अस्तु वाऽध्याहारः; तथाऽपि न दोषः, एतन्मन्त्रार्थविशदीकरणार्थप्रवृत्तया "पवित्रमित्यग्निः अग्निर्वै सहस्रारस्सहस्रारो नेमिर्नेमिना ततस्तनुर्ब्रह्मणस्सायुज्यं सलोकतामाप्नोति" इति सामवेदमैत्रायणीयशाखागतश्रुत्या अध्याहारस्य दर्शितत्वेनाध्याहारस्य प्रामाणिकत्वात्। अथवा पवित्रं विततमित्युभयमपि सम्बुद्ध्यन्तब्रह्मणस्पत इत्यनेन समानाधिकरणम्। त इति तृतीयार्थे षष्ठी। विततं पवित्र ब्रह्मणस्पते ते त्वया अतप्ततनूरिति सम्बन्धः। प्रभुरिति षष्ठ्यर्थे प्रथमा। प्रभोस्सर्वेश्वरस्य गात्राणि विश्वतः विश्वानि, पर्येषि परिवारयसि—इत्यर्थः॥

यद्वा—प्रभुस्त्वं विश्वेषामाश्रितानां गात्राणि पर्येषि, लाञ्छितानि कृत्वा स्वीकरोषि—इत्यर्थः॥

एवं च—तेनेत्यध्याहारविरहे वाक्यार्थस्य करणतासम्बन्धेनान्वयविरहेऽपि च न क्षतिः। न च—तृतीयार्थे षष्ठीस्वीकारे लक्षणाप्रसङ्ग इति—वाच्यम्। सम्बन्धत्वेन करणत्वार्थकत्वे लक्षणाविरहात्; विशेषरूपेणाभिमतसम्बन्धबोधाङ्गीकारे भवतामपि लक्षणाया दुर्वा-

रत्वात् । एवं–अतप्ततनूरित्यत्र भावेनिष्ठामङ्गीकृत्य तपोरहिततनूरित्यर्थकरणमपि न सत्, तथा सति तपोरहिततनुमत्त्वस्य मोक्षाभावप्रयोजकत्वलाभेन तपश्शालिनामपि योगिना मोक्षाभावः प्रसङ्गात्, तेषां योगजन्यतपोरहितशरीरान्तरस्य सम्भवात् । तनुत्वावच्छेदेन तपोराहित्यस्य च न बोधसम्भव, बाधात् । स्वीयतनुत्वावच्छेदेन तद्बोधस्याबाधेऽप्यतप्ततनूरित्यतो न तादृशबोधसम्भव ; स्वीयतनुत्वेनोपस्थापकपदाभावात् । तनुशब्दस्य स्वीयतनुत्वावच्छिन्ने लक्षणास्वीकारेण तथा बोधोपपादनमपि न सत्; स्वत्वस्याननुगतत्वेन देवदत्तादितनुत्वावच्छिन्न एव लक्षणाया वाच्यतया शास्त्रस्य सर्वसाधारण्येन प्रवृत्त्यनुपपत्ते । कर्तरिक्तप्रत्ययपक्षोऽपि न युक्तः, तन्वां कर्तृत्वस्य बाधात्, अन्यथा शरीरस्य फलभोक्तृत्वापत्तेः, शास्त्रफलं प्रयोक्तरीति न्यायात्, कर्ताशास्त्रार्थवत्त्वादित्यधिकरणविरोधाच्च, गौणकर्तृत्वपरत्वे च क्तप्रत्ययस्य लक्षणाप्रसङ्गात्, अतप्ततनूरित्यत्र तनूपदवैयर्थ्याच्च, अतप्त इत्यनेनैव तपोरहितस्य न मोक्ष इत्यर्थलाभात् ; अस्मत्पक्षे तु अवयविवाचकस्य तनुशब्दस्य मूले बाह्वोरिति सिद्धबाहुमूलाद्यवयवोपलक्षकतया सार्थकत्वात् ॥

**यदपि**—वाचिकवेदानुवचनमानसिकध्यानकायिकाशनादिलक्षणतपसां सत्त्वेऽपि "यदाऽस्य त्वचाऽस्थि संक्षीयते, अथ मोक्षो भवति ; यदाऽस्य कृष्णं चक्षुषोर्नश्यति अथ मैध्यो भवति" इत्यादिशास्त्रान्तरसिद्धस्य कायशोषणपर्यन्तस्य कायिकस्य तपस आवश्यकत्वसूचनाय तनूपदमावश्यकम् । तथा च–केशानां सङ्घातश्चूडा यस्य स केशचूडः इत्यादिवत् तप्तेन तपसा शोषिता तनूर्यस्येति बहुव्रीहिसमासः, ततो नञ्समासः न तप्ततनूरतप्ततनूरिति, एवं च तनूपदस्य मुख्यार्थलाभः ॥ त्वत्पक्षे तु—अप्रकृततान्त्रिकवचनानुसारेणावयविवाचिनस्तनूपदस्य बाहुमूलाद्यवयवलक्षकत्वे श्रुतिबाध---इति । तन्न ; मध्यमपदलोपिसमासे तप्तपदस्य तपश्शोषिते लक्षणाप्रसङ्गात् ॥

उदाहृतश्रुत्यनुरोधेन तनूपदस्याप्यस्थ्यादिपरत्वावश्यकतया लक्षणाया दुर्वारत्वात् मध्यमपदलोपिसमासस्य साधुतानिर्वाहाय तप्ततनूपदस्य शाकपार्थिवादिगणे पाठकल्पनाप्रसङ्गात्, तप्तेत्यस्य भावक्तान्तत्वे क्तप्रत्ययस्य निरर्थकत्वापत्तेश्च ; सम्भवति सार्थकत्वे निरर्थकत्वस्यान्याय्यत्वात्। **एतेन**—तनूशब्दः कृशवचनः, तनूरिति दीर्घश्छान्दसः, तप्तेन तपसा तनूः कृशः तप्ततनूः, ततो नञ्समासः, अतप्ततनूः—**इति निरस्तम्** ॥ छान्दसदीर्घस्य कल्पनीयत्वाच्च । एवं—वहन्त इत्यस्य आचरन्त इत्यर्थकत्वे लक्षणाप्रसङ्गश्च ॥

**यत्तु**—त्वन्मतेऽपि मुख्यपवित्रशब्दवाच्यस्य विष्णुचक्रस्य वहनानुपपत्त्या लोहादिमयसुदर्शनप्रतिकृतिसमकिणे पवित्रशब्दस्य अत्यन्त जघन्यलक्षणा समाश्रयणीयेति तदपेक्षया वहन्त इत्यस्य आचारलक्षणैव युक्ता—इति। **तन्न** ; पवित्रशब्दस्य परिशुद्धित्राणकर्तृत्वावच्छिन्ने योगशक्तेस्सुदर्शनत्वावच्छिन्ने रूढिशक्तेश्च स्वीकारात्, परिशुद्धित्राणकर्तृत्वरूपयोगशक्यतावच्छेदकस्य लोहमयमुद्रासाधारणस्योक्तत्वात्; रूढिशक्यतावच्छेदकस्य भगवन्मूर्तिभेदभिन्नसकलसुदर्शनसाधारणजातिरूपस्य देवताविशेषाधिष्ठिताकृतिविशेषाश्रययावद्वस्तुनिष्ठस्य सुदर्शनत्वस्यापि लोहमुद्रावृत्तित्वे बाधकविरहात्, लोहमुद्राया अपि तादृशाकृत्याश्रयत्वाद्देवताविशेषाधिष्ठितत्वाच्च। एवं च—पवित्रपदस्य मुद्रापरत्वेऽपि न लक्षणा। न च—रूढिशक्यतावच्छेदकस्य जातिविशेषस्य न मुद्रासाधारण्यम्, चित्रगवादौ गोत्वादिजातिवदसम्भवात् ; अत एव पिष्टमय्यो गाव इत्यादौ केवलाकृतिविशिष्टे गोपदस्य लक्षणेत्युक्तं शक्तिवादगादाधर्या—इति वाच्यम् । एवमपि केवलयोगशक्यतावच्छेदकरूपेण मुद्राया बोधे लक्षणाया अप्रसक्तेः, शक्यतावच्छेदकभिन्नरूपेण उपस्थितावेव तत्स्वीकारात् । अत एव—पङ्कजपदात् केवलपङ्कजनिकर्तृत्वेन कुमुदादेर्बोधे लक्षणा नास्तीत्युक्तं **नैयायिकैः**।

**आलङ्कारिकैरपि**–विष्णोर्नाभिसरोरुहादित्यत्र सरोरुहपदात् केवलरूढ्यर्थतावच्छेदकपद्मत्वेनैव बोध:, योगार्थतावच्छेदकस्य बाधात्; "कुर्यां हरस्यापि पिनाकपाणे." इत्यादौ पिनाकपाणिपदात् केवलयोगार्थतावच्छेदकरूपेणैव बोध, रूढ्यर्थतावच्छेदकस्याबाधेऽपि तात्पर्याविषयत्वात्---इत्युक्तम्। अस्तु वा–आकृतिविशेषावच्छिन्ने पवित्रशब्दस्य लक्षणा, तस्याः निरूढलक्षणात्वेन दोषताविरहात्; अन्यथा धूमादित्यादिहेत्ववयवे धूमपदस्य ज्ञाने लक्षणाया अपि दोषताप्रसङ्गात् ॥

**यदपि**---तप्तशब्दो न तपोवचन:, किन्तु औदर्यरूपसन्तापवचनः; आमशब्दोऽपि सन्तापजनितावयवसंशोषणराहित्यवचनः, तथा च–हे ब्रह्मणस्पते त्व प्रभुर्नियन्ता सन् विश्वेषां गात्राणि पर्येषि; तस्य ते पवित्रं परिशुद्धं वितत तत्परम्पदं, तद्विष्णो परम पदमिति श्रुत्यन्तरे तच्छब्दस्य परमपदे प्रयोगदर्शनात्, अतप्ततनू. कृच्छ्रचान्द्रायणादिभिरसन्तप्तगात्रः अनुष्णीकृतगात्र इति यावत्। कृच्छ्रचान्द्रायणाद्युपवासक्लेशस्यापि जाठराग्निसङ्क्षोभणद्वारा शरीरसन्तापहेतुत्वात्। अत एव–आमः असंशोषितावयव, नाश्नुते–न प्राप्नोति, शृतास –कृच्छ्रचान्द्रायणादिभिस्सन्तप्तगात्रा, श्राधातो कृष्णल श्रपयेदित्यादौ सन्तापवाचित्वदर्शनात्। अत एव–इत् इदं सन्तापजनितशरीरसंशोषणं वहन्तः सर्वनाम्नां तेन रक्तं रागादित्यादौ. योग्यवस्तुपरामर्शित्वदर्शनेन आमपदप्रतिसम्बन्धितया निर्दिष्टस्य इद्वहन्त इत्येतद्गतस्य इदंशब्दस्य सन्तापजनितशरीरसंशोषणवाचित्वौचित्यात्। यद्वा–इच्छब्दो नावयवसंशोषणवचनः, कि तु परमपदवचन एव; तथा च–इत् इदं परमपदं, वहन्तः साधनानुष्ठानेन सम्पादयन्तः, समाशत प्राप्तवन्त इत्यर्थः–इति। **तदपि न**; पवित्रविततशब्दयोस्सान्निकृष्टेन अतप्ततनूरित्यनेन अन्वयं विना विप्रकृष्टेन तच्छब्देनान्वये व्यवहितयोजनाप्रसङ्गात्;

क्रियासाकाङ्क्षस्य पवित्रं विततमित्यस्य करणसाकाङ्क्षे तपधात्वर्थे अन्वयमनङ्गीकृत्य तच्छब्दार्थे उत्थाप्याकाङ्क्षया अन्वयमुपगम्य करणाकाङ्क्षानिवृत्त्यर्थं कृच्छ्रचान्द्रायणादिभिरित्यध्याहारकल्पनस्यायुक्तत्वात्; "तद्विष्णोः परमं पदम्" इति श्रुतिघटकतच्छब्दस्य परमपदत्वावच्छिन्नपरत्वे तस्य घटो घट इतिवत् परमम्पदमित्यत्रानन्वयप्रसङ्गेन तस्य प्रमाणसिद्धपरताया एव वक्तव्यत्वात्तादृशश्रुत्यनुरोधेन अत्रत्यतच्छब्दस्य परमपदपरताया असिद्धमसिद्धेनेति न्यायेनानुपादेयत्वात्; गन्ता देवदत्तः, अयं गुण इत्यादौ सयोगानुकूलव्यापाररूपगमिधात्वर्थैकदेशरूपस्य संयोगस्य इदंशब्देन परामर्शादर्शनेन अतृशोषितावयवरूपामपदार्थैकदेशस्य संशोषणस्य इच्छब्देन परामर्शायोगात्, तेन रक्त रागादित्यत्र रज्यते अनेनेति राग इति व्युत्पत्त्या रञ्जकद्रव्यस्य रागशब्दार्थतया तस्यैव तेनेत्यनेन परामर्शात्पदार्थैकदेशस्य परामर्शादर्शनेन तदुदाहरणस्य प्रकृते असङ्गतत्वात् ॥ न च–रागादित्यस्य रञ्जकद्रव्यवाचिपदपरतया तदेकदेशरञ्जकद्रव्यस्य परामर्शो दृश्यत इति–वाच्यम्। 'दृश्यैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः' इत्यादाविव लक्ष्यार्थैकदेशशक्यार्थस्य परामर्शसम्भवेऽपि शक्यार्थैकदेशस्य क्वापि परामर्शादर्शनात्। इच्छब्देन परमपदपरामर्शोऽपि न युक्तः। परमपदप्राप्तिपूर्वकालीनस्य तद्वहनस्यानुपपत्तेः॥ न च–तद्वहनं तत्प्राप्त्यनुकूलव्यापारः, स च तत्साधनानुष्ठानात्मक इति–वाच्यम्। तथा सति मोक्षसाधनानुष्ठानस्य मोक्षप्राप्तिहेतुतालाभेऽपि कृच्छ्रचान्द्रायणादितपसस्तद्धेतुत्वालाभादसङ्गतेः॥ न च–इद्वहन्त इत्यत्र शृतास इत्यस्योद्देश्यतावच्छेदकतया धनवान् सुखीत्यादाविव साधनानुष्ठानं प्रति हेतुत्वलाभात्परम्परया मोक्षहेतुत्वं लभ्यत इति–वाच्यम्। यदभावस्य मोक्षाभावप्रयोजकत्वं पूर्वमभिहितं तस्य मोक्षहेतुताया वक्तव्यत्वावश्यकत्वेऽपि तत्साधनानुष्ठानस्य तद्धेतुतायाऽसिद्धत्वेन इद्वहन्त इत्यस्य वैयर्थ्यापत्तेः। 'शृतासस्तत्समाशत' इत्यनेनैवोपपत्तेः ॥

यत्तु—त इति न षष्ठ्येकवचनम्, अपि तु चतुर्थ्येकवचनमेव; पवित्रशब्दोऽपि न तच्छब्दनिर्दिष्टपरमपदविशेषणं, अपि तु कृच्छ्रचान्द्रायणादितपःपर एव। तथा च—हे ब्रह्मणस्पते विष्णो ते त्वदर्थं त्वदाराधनार्थं यत्पवित्रं परिशुद्धिकरं कृच्छ्रचान्द्रायणादितपः तेन अतप्ततनूरसन्तप्तगात्रः, अत एव आमः असंशोषितावयवः तत्परमपदं नाश्नुते। शृतास इत्युत्तरार्धस्य व्याख्या पूर्ववदेव।

"यज्ञायाचरितं कर्म कर्मग्रन्थिर्विलीयते।
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः॥"—

इत्यादिस्मृतिषु भगवदाराधनार्थस्य कर्मणो मोक्षसाधनत्वप्रतिपादनात्। एवं च—अवयववाचिनः तनूशब्दस्य बाहुमूलाद्यवयवपरतया सङ्कोचो न कल्पितो भवति, तप्तपदस्य सन्तापवाचित्वेऽपि तप्तपदसादृश्यात्सन्तापं प्रति करणकारकतया हृदयमागतस्य कृच्छ्रचान्द्रायणादितपसः परित्यागश्च न कृतो भवति। तस्मादस्य मन्त्रस्य कृच्छ्रचान्द्रायणादिविधिपरत्वान्न सुदर्शनात्तापविधिपरत्वम्—इति। **तन्न**; त इति चतुर्थ्यन्तार्थस्य भगवत्प्रीतीच्छाधीनेच्छाविषयत्वस्य पवित्रं विततमिति विशेषणद्वयस्य चान्वयार्थं कृच्छ्रचान्द्रायणादितप इत्यध्याहारस्य कल्पनीयतया गौरवात्, उदाहृतभगवद्गीतावचनद्वयस्य भगवत्प्रीत्युद्देश्यकस्य कर्मणो बन्धकत्वाभावप्रतिपादनपरत्वेऽपि मोक्षहेतुत्वप्रतिपादनपरत्वाभावात्। तथा च **शाङ्करभाष्यम्**—

"बन्धार्थत्वात् कर्म न कर्तव्यमिति, तदप्यसत्, कथं यज्ञार्थादिति; यज्ञो वै विष्णुरिति श्रुतेः। यज्ञ ईश्वरः, तदर्थं यत् क्रियते तद्यज्ञार्थं कर्म, तस्मात् कर्मणोऽन्यत्र, अन्येन कर्मणा लोकोऽयमधिकृतः कर्मकृत् कर्मबन्धनः, कर्मैव बन्धनं यस्य सोऽयं कर्मबन्धनो लोकः, न तु यज्ञार्थात्"—**इत्यादि**॥

तस्मात्तद्वचनस्य मोक्षसाधनत्वप्रतिपादनपरतया उपादानं स्वसिद्धान्ताज्ञानविजृम्भितम् ॥

**यदपि**—"उद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदीचीनदिशं पवित्रं वितन्वन्ति, पवित्रं ते विततं ब्रह्मणस्पत इति वितन्यमानमभिमन्त्रयते यजमानः" इत्यापस्तम्बसूत्रेण उद्गातृप्रभृतिभिः द्रोणकलशोपरि वितन्यमानपवित्रानुमन्त्रणे विनियोगाद्युक्तमस्याश्श्रुतेस्तत्परत्वम् । तथा हि—ब्रह्मणः—बृंहकस्य, द्रोणादिवर्धकस्य ओषधिवनस्पतिलक्षणस्यान्नस्य ; पते—हे सोम, 'सोमो वा ओषधीनां राजा' इति श्रुतेः । यद्वा—ब्रह्मणः ब्राह्मणस्य ; पते, 'तस्मात्सोमराजानो ब्राह्मणाः' इति श्रुतेः । ते त्वदर्थं त्वत्पवनार्थं, ईदृश पवित्रं विततं विस्तृत ; प्रभुर्गात्राणि पर्येषि विश्वतः—अनेन पवित्रेण तत्स्वरूपतिरोधायकऋजीषाद्यपगमेन प्रभुस्समर्थो भूत्वा रोगाद्यपगमेन तरुणादिस्वरूपमिव गात्राणि स्वरूपाणि विश्वतः पर्येषि प्राप्नोषि विस्तारयसीत्यर्थः ॥ ऋजीषाद्यपगमनार्थस्य पवनस्यान्वयव्यतिरेकाभ्यां फलं दर्शयति—अतप्ततनूर्न तदामो अश्नुते । आमः—दशापवित्रेणासंस्कृतः, अत एव अतप्ततनूः—असमर्थतनूः, तपऐश्वर्ये इति धातोः तप्तशब्दस्य निष्पत्तेः । तत्—स्वकार्यं होमं, नाश्नुते । न चात्र तनूपदवैयर्थ्यं, तनूपदस्याशुचित्वाभिप्रायगर्भत्वात् । तथा च—यतोऽयमसंस्कृतः, अतएवाशुचिस्सन् स्वकार्यं प्रत्यसमर्थ इत्यर्थः फलति । नन्वसंस्कृतस्यापि स्वकार्ये सामर्थ्यमस्तु, तत्राह श्रृतास इद्वहन्तस्तत्समाशतेति । श्रृतासः—संस्कृता एव यागीयपदार्थाः, तं श्रृतं भूतमजुहोदित्यादौ संस्कृतमात्रेऽप्यग्निपक्वे श्रृतशब्दप्रयोगदर्शनात् । अत एव—संस्कृतत्वादेव । वहन्तः—तत्कार्यनिर्वहणविचक्षणास्सन्तः । तत्—स्वकार्यं, समाशत—प्राप्तवन्तः ; अशू व्याप्तावित्यस्माद्धातोर्लिङि व्यत्ययेन शपि तस्य बहुलं छन्दसीति लुकि कृते बहुवचने रूपम् । तस्मात्पवित्रमन्त्रस्य द्रोणकलशोपरि वितन्यमानदशापवित्रानुमन्त्रणे विनियोगानुसारेण सोमपरत्वमेव युक्तम्—इति ॥

तन्न—एवं सति सर्वेषां पदानामस्वारस्यस्यावर्जनीयत्वात् । तथा हि—तत्रास्मिन्नर्थे प्रथमोपात्तः पवित्रशब्दस्तावदस्वरसः, संज्ञात्वाभावेन पुरस्संज्ञायामित्यनेन प्रत्ययालाभात्, ऋषिदेवताभिन्नत्वेन कर्तरिचर्षिदेवतयोरित्यनेनापि तदलाभात् । दशापवित्रादौ लक्षणेति वाच्यम् ; अतः प्रथमोपात्तपदे लक्षणा दोषः। एवं ब्रह्मशब्दस्य रूढ्या चतुर्मुखपरत्वसम्भवे योगेन वर्धकत्वावच्छिन्नपरत्वकल्पनमनुचितम्, योगाद्रूढेर्बलीयस्त्वस्य रथकाराधिकरणन्यायसिद्धत्वात् । पतिशब्दस्य नियामकत्वावच्छिन्ने स्वत्वनिरूपकत्वरूपस्वामित्वावच्छिन्ने वा शक्तस्य श्रेष्ठत्वावच्छिन्ने लक्षणा समाश्रयणीया ; 'सोमो वा ओषधीनां राजा' इति श्रुतावपि राजपदस्य श्रेष्ठत्वावच्छिन्ने लाक्षणिकत्वात् ॥

एतेन—ब्रह्मणः ब्राह्मणस्य पते—इत्यर्थोऽपि निरस्तः ; निरुक्तस्य ब्राह्मणनिरूपितपातित्वस्य सोमे बाधात्, पतिशब्दस्य तत्कर्तृकक्रियाङ्गत्वावच्छिन्ने लक्षणावश्यकत्वात् । पते—इति सम्बोधनविभक्त्यर्थस्य प्रकृतवाक्यजन्यबोधाश्रयत्वेनेच्छाविषयत्वस्याचेतने सोमे बाधश्च । एवं प्रभुशब्दस्य समर्थपरत्वमप्यस्वरसम् ॥

न च—तत्कार्ये प्रभुरित्यादौ प्रभुशब्दस्य समर्थपरत्वमपि दृश्यत इति—वाच्यम्; सप्तम्यन्तपदासमभिव्याहृतस्य प्रभुशब्दस्य समर्थपरत्वादर्शनात्, समर्थपरत्वेऽपि तस्य चेतनैकान्तत्वेनाचेतने लक्षणाया अवर्जनीयत्वाच्च । तथा गात्रपदस्य स्वरूपार्थकता, पर्येषीत्यस्य विस्तारार्थकता च लक्षणाधीना ; स्वर्गादिवाचकस्यापि गोशब्दस्य पशौ धर्मपुत्रादिसाधारणस्यापि पार्थशब्दस्यार्जुने अधिकाराद्यर्थान्तरसाधारणस्याप्यथशब्दस्यानन्तर्ये प्रसिद्धिप्राचुर्यवत् तप ऐश्वर्ये इति धात्वनुसारेणार्थान्तरसाधारणस्यापि तप्तशब्दस्य दाहार्थकत्व एव प्रसिद्धिप्राचुर्यात् समर्थपरत्वेऽस्वारस्यं दुष्परिहरम् । तनूशब्दस्याशुचित्वा-

वच्छिन्ने लक्षणा, निरनुपसृष्टस्य वहेर्निर्वहणार्थकत्वं, तच्छब्दस्यानुपस्थितहोमाद्यर्थकत्व चायुक्तमिति ॥

न च—उक्तार्थपरत्वाभावे द्रोणकलशोपरि वितन्यमानपवित्रानुमन्त्रणे विनियोगानुपपत्तिः, मन्त्रस्य यस्मिन्नर्थे विनियोगस्तत्परत्वनियमादिति—वाच्यम्; तादृशनियमासिद्धेः, अनुमन्त्रणे विनियुक्तस्यास्य मन्त्रस्यानुमन्त्रणपरत्वाभावात् ॥ न च—यस्य मन्त्रस्य यादृशार्थे विनियोगस्तस्य तादृशार्थघटकार्थपरत्वमित्येव नियमः, तादृशार्थघटकत्वं च तादृशार्थविषयिताव्यापकविषयितानिरूपकत्वं तादृशार्थकोटिप्रविष्टविशेष्यविशेषणोभयसाधारणम्; तथा च पवित्रमन्त्रस्य वितन्यमानपवित्रानुमन्त्रणे विनियुक्तस्य तद्घटकपवित्रपरत्वानपायान्न दोष इति—वाच्यम्;

"अग्निर्मूर्धा दिव इति मन्त्रं भौमाय कीर्तयेत् ।
उद्बुध्यस्वाग्न इत्येवं मन्त्रं सोमसुताय वै ॥
अन्नात्परिस्रुतो रसश्शुक्रस्य तु निगद्यते ।
शनैश्चराय विभवे शन्नोदेवीति होमयेत् ।
कयानश्चित्र आभुवदिति राहोरुदीरयेत् ॥"—

इत्यादिभिर्विनियुक्तानां अग्निर्मूर्धादिव ककुदित्यादिमन्त्राणां तत्तदर्थघटकार्थपरत्वस्याप्यभावेन व्यभिचारात् ॥

न च—अग्निर्मूर्धेत्यत्र अग्निपदस्य यौगवृत्त्या गौण्या वा भौमबोधकत्वस्य, उद्बुध्यस्वेत्यस्य बुधेतिवर्णसत्त्वेन बुधस्मारकतायाः, 'अन्नात्परिस्रुतो रसश्शुक्रं ज्योतिरजायत' इत्यत्र शुक्रपदस्य नपुंसकत्वेऽपि नामसाम्यात्तत्स्मारकत्वस्य, कयानश्चित्र इत्यत्र चित्रपदस्य चित्रात्मकराहुशिरोलक्षकत्वात्तत्स्मारकत्वस्य, शन्नइत्यस्य वर्णद्वयसादृश्येन शनि नामस्मारकत्वस्य सत्त्वाच्च तत्रतत्र विनियोगोपपत्तिः, यादृशार्थे यस्य मन्त्रस्य विनियोगः तस्य तादृशार्थस्मारकत्वमित्येव नियमादिति-

वाच्यम् । तथा सति पवित्रमन्त्रस्य दशापवित्रतात्पर्यकत्वाभावेऽपि यथाकथञ्चित्स्मारकत्वमात्रेण विनियोगोपपत्तेः, स्वागमिकप्रतीतिनिरहिते दशापवित्ररूपार्थे तात्पर्यासिद्धेः । किं च–यस्य मन्त्रस्य यादृशार्थे विनियोगस्तस्य मन्त्रस्य तादृशार्थपरत्वमिति नियमेऽपि न क्षतिः. दशापवित्रानुमन्त्रणे विनियुक्तस्यास्य मन्त्रस्य तप्तमुद्राधारणपरत्वाभावे ऽप्यारुणकेतुकेऽग्नौ प्रकरणादिना करणतया विनियुक्तस्यास्य मन्त्रस्य आरुणकेतुकाग्निस्तुतिपरत्वावश्यकतया तथाभूताग्निस्तुतौ द्वारतयैव देवताविग्रहादिवत् तप्तमुद्राधारणसिद्धेः ॥

तथा हि–पवित्रमिति मन्त्रस्तावदारुणकेतुकेऽग्नौ विनियुज्यते । अत्र ब्रह्मणस्पते ब्राह्मणानां स्वामिन्नित्यग्निसंबोधनं, हे ब्रह्मणस्पते त्वं सर्वाणि शरीराणि वैश्वानराग्निरूपेण व्याप्नोषि, ते त्वत्सम्बन्धि सर्वतस्त्वत्संसृष्टं; विततं–विस्तीर्णं सुदर्शनं, तेनातप्ततनूः अनङ्कित-भुजः, आमः अपक्वपापः, तत् ब्रह्म, नाश्नुते । इत् इदं सुदर्शनाङ्कनं, वहन्तः, शृतास. पक्वपापाः ; अर्शआद्यजन्तत्वाश्रयणात् । तद्ब्रह्म समाशत असेवन्त–इत्यग्निः स्तूयते । अग्निसम्बन्धिसुदर्शन-धारणतदभावयोर्मोक्षतदभावप्रयोजकत्वाभिधानेनाग्नेरुत्कर्षसिद्धेः ॥

न च–चित्याग्नेः स्तूयमानत्वे तस्य वैश्वानराग्निरूपेण सर्वशरीर-व्यापित्वं सुदर्शनतापार्थत्वं च न सम्भवति–इति वाच्यम् । चित्या-ग्नेरचेतनस्य सम्बोध्यत्वासम्भवेन स्तुतिजन्यप्रीत्याश्रयत्वासम्भवेन स्तुतेर्निष्फलत्वापत्त्या च तादृशाग्न्यधिष्ठातृदेवताया एव स्तुत्यङ्गी-कारेण तादृशदेवतायाश्च स्वाधिष्ठितवैश्वानराग्निरूपेण व्यापित्वस्य स्वाधिष्ठितवह्निसन्तप्तेन सुदर्शनेन तापार्थतायाश्चोपपत्तेः ॥

यत्तु–हे ब्रह्मणस्पते अग्ने, ते तव, पवित्रं मेध्यं, विततं बहुभि-र्मन्त्रैर्बहुना च प्रयोगेण चीर्णं, तत् प्रकृतमारुणकेतुकचयनं, अतप्ततनूः–'त्रिषवणमुदकोपस्पर्शी, चतुर्थकालपानभक्तः स्यात्, अहरहर्वा भैक्षमश्नी-

यात्, संवत्सरमेतद्व्रतं चरेत्' इत्याद्यारुणकेतुकप्रश्नान्त्यानुवाकोक्त-तपोभिरशोषिततनूः, नाश्नुते न प्राप्नोति, इत् इदं तत्, इदमर्थे इच्छब्दः, वहन्तः आचरन्तः, शृतासः दग्धपापाः, तत् चयन, पूर्वे ऋषयः, समाशत प्राप्तवन्त'—इत्यर्थः ॥ यद्वा—हे ब्रह्मणस्पते अग्ने, ते विततं पवित्र तत् स्थानं 'अग्नेः पूर्वदिश्यस्य स्थाने स्वतेजसा भाति' इति मन्त्रवर्णादिषु प्रसिद्धम्। अतप्ततनूः—अकृतारुणकेतुकचयनः, नाश्नुते न प्राप्नोति ; तपश्शब्दस्य धर्ममात्रेऽपि 'तपःश्रुत च योनिश्चेत्येव-द्ब्राह्मणकारकम्' इत्यादौ प्रयोगदर्शनात्। तस्मादारुणकेतुकाग्निस्तुति-द्वारतयाऽपि अस्य मन्त्रस्य न चक्रधारणप्रतिपादनपरत्वं सिद्ध्यति ॥ —इति ॥

**तन्न**। संवत्सरमेतद्व्रतं चरेदित्याद्युक्ततपसामारुणकेतुकचयनाङ्ग-तया तज्जन्यकलिकापूर्वस्य आरुणकेतुकचयनजन्यपरमापूर्वहेतुतया तदभावस्य तदभावे प्रयोजकत्वसम्भवेऽपि उक्ततपसामभावेऽप्यारुण-केतुकचयनोत्पत्तिसम्भवेन तदहेतुतया तदभावस्य तदभावे प्रयोजकत्वा-सम्भवात्। तच्छब्दस्य तज्जन्यपरमापूर्वपरत्वन्तु न सम्भवति, तस्य प्रक्रान्तताविरहात्, अतप्ततनूरित्यत्र उक्ततपोभिरित्यध्याहारस्य तप्तपदस्य शोपिते लक्षणाया. वहन्त इत्यस्याचारे लक्षणायाश्च कल्प-नीयत्वाच्च। एतेन यद्वेत्यादिकमपि निरस्तम् ॥

किं च—अस्य मन्त्रस्य चित्याग्निस्तुतिद्वारतयाऽपि चक्रधारणप्रति-पादनपरत्वाभावे—

"विष्णोर्नुकेन मन्त्रेण तापयित्वा सुदर्शनम्।
चरणं पवित्रमिति द्वाभ्यां तदभिमन्त्रयेत् ॥
पवित्रं ते विततमिति मुद्रयेद्दक्षिणे भुजे।
ज्ञानं वैराग्यमास्तिक्यं श्रद्धाचास्याभिवर्धते ॥"—

इति **महर्षेस्सनकस्य** सौदर्शने कर्मणि विनियोगानुपपत्तिः ॥

**यद्वा**—सनकस्मृतेः स्मृतिषु परिगणनाभावाद्धर्मशास्त्रव्याख्यातृभिः मेधातिथिविज्ञानेश्वरादिभिरनुदाहृतत्वाच्च तस्याः स्मृतित्वे प्रमाणाभावः। अस्तु वा स्मृतित्वं, अथापि सौदर्शने कर्मणि विनियोगानुसारेण अस्य मन्त्रस्य सुदर्शनपरत्वेऽपि तप्तपदस्य दाहपरत्वं करणपदाध्याहारदुष्टमनाश्रयणीय, येन अस्य मन्त्रस्य मुद्राधारणविधिपरत्वं भवेत्। तथा हि—ब्रह्मणस्पते, यज्ञविघ्नकरासुरादिसंहरणेन ब्राह्मणानां रक्षकेति सुदर्शनस्य सम्बोधनम्; प्रभुशब्देन विष्णुरुच्यते, त्वं विष्णुरूपी भूत्वा सर्वाणि गात्राणि व्याप्नोषि, तस्य ते पवित्रं तत् स्थानं तपोरहितो नाश्नुते, इदं तपश्चरन्तो दग्धपापाः तत्स्थानं प्राप्तवन्तः—इत्यर्थपरत्वात्॥ —इति॥

**तन्न**—पूर्वकाण्डार्थविशदीकरणार्थप्रवृत्तत्वे सत्यार्षत्वरूपस्मृतित्वस्य सनकस्मृतिसाधारण्यात्, तद्व्यावृत्तस्मृतित्वस्य दुर्वचत्वात्; स्मृतिष्वपरिगणनात् सनकस्मृतेः स्मृतित्वाभावे भगवद्गीताया अपि स्मृतित्वाभावापत्तेः, न चेष्टापत्तिः; स्मरन्ति चेत्यादिसूत्रभाष्ये शङ्करादिभिर्गीतायास्स्मृतित्वेनोदाहरणात् तदनुपपत्तेः। पवित्रमित्यस्यैव करणतासम्बन्धेनान्वयाङ्गीकारेण करणवाचिपदाध्याहाराभावस्य दर्शिततया तप्तपदस्य दाहपरत्वे बाधकाभावात्। "पवित्रमित्यग्निः, अग्निर्वै सहस्रारस्सहस्रारो नेमिः, नेमिना तप्ततनूः, ब्रह्मणस्सायुज्यं सलोकतामाप्नोति" इति सामवेदमैत्रायणीयशाखागतश्रुत्यैव अस्य मन्त्रस्य दाहपरतायाः करणपदाध्याहारस्य च दर्शितत्वेनाध्याहारकल्पनेऽपि दोषाभावात्। 'अक्ताश्शर्करा उपदधाति, तेजो वै घृतम्' इत्यत्रोपस्थितघृतवाचितेनेत्यध्याहारस्य पूर्वतन्त्रानुमतत्वात्। उपस्थितार्थकपदाध्याहारस्यादोषत्वात्। अन्यथा तत्राप्यध्याहारदोषपरिहाराय अक्ता इत्यत्रार्थान्तरकल्पनाप्रसङ्गात्। तप्तपदस्य तपःपरत्वे क्तप्रत्ययवैयर्थ्यस्य तनूपदवैयर्थ्यस्य च बाधकस्योक्तत्वात्॥

त्वं विष्णुरूपी भूत्वेत्यादिव्याख्यानमप्यनुचितम्, सुदर्शनस्य जीवस्य परमात्मना विष्णुना ऐक्यायोगात्। न च–विष्णुरूपी भूत्वेत्यस्य विष्णुशरीरं भूत्वेत्यर्थ इति–वाच्यम्, तथा सति विष्णुशरीरतायाः सर्वदा सिद्धत्वेन साध्यत्वायोगात्, तस्य सर्वगात्रव्याप्त्यसाधकत्वाच्च। किं चास्य मन्त्रस्य दाहप्रकाशकत्वाभावे दाहे विनियोगस्यानिर्वाहापत्तिः॥ न च–'अग्निर्मूर्धा दिवः ककुत्', 'भुवो यज्ञस्य', 'इदं विष्णुर्विचक्रमे', 'त्रिर्देवःपृथिवीमेष एताम्' इत्यादिमन्त्राणां आग्नेयवैष्णवादियागेषु याज्यानुवाक्यात्वेन विनियुक्तानां यागवाचकपदाभावेन यागवाचकत्वाभावेऽपि तत्साधनाग्निविष्ण्वादिप्रकाशकत्वमात्रेण यागे विनियोगनिर्वाहवत्, अत्रैव सौदर्शने कर्माङ्गे "विष्णोर्नुकेन मन्त्रेण तापयित्वा सुदर्शनम्" इति विनियुक्तस्य विष्णोर्नुकमन्त्रस्य तापप्रकाशकत्वाभावेऽपि तापसाधनविष्णुप्रकाशकत्वमात्रेण तापविनियोगनिर्वाहवच्च पवित्रमन्त्रस्य दाहे विनियुक्तस्य दाहप्रकाशकत्वाभावेऽपि दाहसाधनसुदर्शनप्रकाशकत्वमात्रेण दाहे विनियोगोपपत्तिः–इति वाच्यम्; अग्निर्मूर्धेत्यादिमन्त्रेषु यागवाचकपदाभावेनागत्या तद्घटकदेवताप्रकाशकत्वमात्रेण विनियोगनिर्वाहेऽपि प्रकृते तापवाचिपदसत्त्वेन तत्प्रकाशकत्वेनैव स्वरसनिर्वाहसम्भवे तत्त्यागायोगात्, अनुष्ठेयार्थप्रकाशकत्वरूपमन्त्रत्वस्य तापाबोधकत्वेऽनुपपत्तेः॥

न च–'नाङ्कयेन्न दहेद्विप्रम्' इत्यादौ दहनस्याङ्कनशब्दवाच्यमुद्रणस्य च भेदावगमात् इह 'मुद्रयेद्दक्षिणे भुजे' इति मुद्रण एवास्य मन्त्रस्य विनियोगेन दाहविनियोगासिद्ध्या दाहपरत्वं न कल्पनीयम्–इति वाच्यम्; लेखनादिसाधारणमुद्राप्रयोजकव्यापारसामान्यस्याङ्कनशब्दार्थत्वात्, मुद्राप्रयोजकाग्निसंयोगस्य दाहशब्दार्थत्वात्, मुद्राप्रयोजकव्यापारत्वेन दाहस्याङ्कनशब्दार्थे क्रोडीकारेऽपि नानृतं वदेदित्यादौ भेदाभावेऽपि प्रत्यवायाधिक्यसूचनाय विशेषनिषेध-

वदत्रापि मुद्राप्रयोजकविलेखनाद्यपेक्षया तत्प्रयोजकदाहस्य प्रत्यवायाधिक्यसूचनार्थं विशिष्य निषेधोपपत्तेः ; तावता मुद्रणभेदस्य तापेऽसम्भवात् ; 'विष्णोर्नुकेन मन्त्रेण तापयित्वा सुदर्शनम्' इत्युक्ततापानन्तरकालीनमुद्रणस्य लेखनादिव्यावृत्तमुद्रानुकूलाग्निसंयोगरूपत्वस्यैव प्रतीतेः ; तत्र विनियुक्तस्यास्य मन्त्रस्य दाहपरत्वावश्यकत्वात् ॥

**यदपि**—वस्तुतोऽस्य मन्त्रस्य दाहपरत्वेऽपि मन्त्रगततत्पदद्वयेन 'पवित्रं ते विततमिति मुद्रयेद्दक्षिणे भुजे' इत्यावश्यकान्तरङ्गविनियोजकवाक्यसन्निहितस्य मुद्रणस्यैव परामर्शो युक्तः, न तु बहिरङ्गवचनान्तरसन्निहितमोक्षादिरूपफलस्य । तथा च-दाहस्य किणरूपमुद्राहेतुत्वं लोकसिद्धं विनियोजकवचनसिद्धं वा मन्त्रेणानूद्यत इति न दाहस्य मुद्रणस्य वा वैदिकत्वसिद्धिः । यथा-'तस्माद्गायन्तं स्त्रियः कामयन्ते' इत्यादिवाक्यानूदितगानादेर्लोकसिद्धतया न वैदिकत्वं तद्वत्—**इति** ॥

**तन्न** । मूलवाक्योपस्थापितार्थस्य व्याख्यानगततच्छब्देन कदाचित्परामर्शदर्शनेऽपि व्याख्यानोपस्थापितार्थस्य मूलस्थतच्छब्देन परामर्शायोगात्, व्याख्यानसजातीयविनियोजकवाक्योपस्थापितार्थस्य मन्त्रगततच्छब्देन परामर्शासम्भवेन तच्छब्दद्वयस्य मुद्रणपरत्वानुपपत्तेः ; अतप्ततनूरित्यत्र तपधातूत्तरक्तप्रत्ययेन कर्मार्थकेन तापजन्याङ्कनरूपफलाश्रयस्य बोधात् ; इद्वहन्त इत्यत्रापि तापजन्यफलस्य मुद्रणस्यैव इच्छब्देन परामर्शेन मुद्रणं वहन्तस्तत्समाशन, मुद्रणं प्राप्तवन्त इत्यस्य वक्तव्यतया तादृशार्थे च गन्ता गच्छतीत्यादिवद्वाक्यस्य निराकाङ्क्षत्वाद्वाक्यस्य तप्तमुद्राधारणनिष्ठमोक्षसाधनत्वरूपापूर्वार्थपरत्वसम्भवे तद्विहाय वैयर्थ्यापरपर्यायस्य लोकसिद्धार्थानुवादकत्वस्यायोगात् ; तस्माद्गायन्तमित्यादौ चागत्या वैयर्थ्याभ्युपगमात् । अस्तु वा मन्त्रस्य लोकसिद्धार्थानुवादित्वं ; अथापि

च दाहस्य मुद्रणस्य वा वैदिकत्वहानिः । वैदिकत्वं हि—न वेदजन्येष्टसाधनत्वप्रकारकधीविषयत्वं, स्मृतिप्राप्तकर्मणां वैदिकत्वानापत्तेः; किं तु वेदतदुपजीविप्रमाणान्यतरजन्येष्टसाधनत्वप्रकारकधीविषयत्वम् । तच्च—"पवित्रमिति मन्त्रेण मुद्रयेद्दक्षिणे भुजे" इति स्मृतिजन्येष्टसाधनत्वप्रकारकधीविषयत्वान्मुद्रणस्याक्षुण्णम् । न च तादृशस्मृतेर्देवलकादिविषयत्वं, सर्वसाधारण्यस्य वक्ष्यमाणत्वात् ॥

**यदपि**—अस्य मन्त्रस्य सुदर्शनपरत्वं तद्धारणपरत्वं वा न युक्तम् । हे ब्रह्मणस्पते अग्ने ते विततं पवित्रं स्वरूपं रश्मिजालं वा, तेनादग्धतनूरित्यर्थाश्रयणेन अस्य मन्त्रस्य दाहप्रकाशकत्वसम्भवेन दाहे विनियोगनिर्वाहात्—इति । **तन्न**; भेदनियतसम्बन्धस्यैव षष्ठ्यर्थत्वेन पवित्रशब्दस्य स्वरूपार्थकत्वे राहोश्शिर इत्यादिवत् षष्ठ्या लक्षणाप्रसङ्गात्, पवित्रमित्यग्निरित्युदाहृतश्रुतिविरोधेन अस्यार्थस्यायुक्तत्वाच्च ॥

**यदपि**—तत्त्वतस्तु त्वदभिमतस्य विनियोजकवचनस्य मूलगवेषणायां पवित्रमन्त्रगतदाहप्रकाशनसामर्थ्यरूपलिङ्गस्यैव तन्मूलत्वं कल्पनीयम्; न तु विनियोजकसनकस्मृतिसमानविषयं श्रुत्यन्तरं परिकल्प्य तन्मूलत्वं कल्पनीयम् । तथा सति श्रुतिस्वरूपं तस्य विनियोजकस्मृतिमूलत्वं च कल्पनीयमिति गौरवापत्तेः । किं तु सिद्धस्यैव मन्त्रगतदाहप्रकाशनसामर्थ्यरूपलिङ्गस्य धर्मकल्पनातो धर्मिकल्पना लघीयसी—इति न्यायेन स्मृतिमूलत्वमात्रं कल्पनीयम् । तच्च दाहप्रकाशनसामर्थ्यरूपं लिङ्गं पूर्वोक्तन्यायेनापातप्रतीतिसिद्धमिति तन्मूलकवचनस्य न प्रामाण्यम् । अत एवामुं धर्मकल्पनान्यायमाश्रित्यैव पूर्वतन्त्रे "स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन्त्सीदामृते प्रतितिष्ठ, व्रीहीणाम्मेध सुमनस्यमानः" इति मन्त्रस्य दलद्वयसमभिव्याहारात्मकवाक्यप्रमाणाद्बलीयसा लिङ्गेन यथार्हं विभज्य सदनकरणे पुरोडाशप्रतिष्ठापने च न्यायविनियोगस्य समभिव्याहारा-

त्मकैकवाक्यताबलात् पुरोडाशप्रतिष्ठापनविशिष्टसदनप्रकाशनसामर्थ्यरूपं लिङ्गं परिकल्प्य कृत्स्नं मन्त्रं सदनकरणे विनियोजयतो बोधायनस्य वचनं लिङ्गाभासमूलत्वेन न प्रमाणमित्युक्तम्; न तु तस्य विनियोजककल्पसूत्रस्य स्वसमानविषयकश्रुत्यन्तरकल्पनेन प्रामाण्यं समर्थितम्। एवमन्यान्यपि लिङ्गाभासमूलकानि कल्पसूत्रादिवचनानि कल्पसूत्राधिकरणे भट्टपादैरप्रमाणत्वेनोदाहृतानि द्रष्टव्यानि। यदा पुनरपि गानेन महाजनपरिगृहीतानां वचनानामप्रामाण्यं, तदा कैव कथा शिष्टापरिग्रहदूषितस्य क्वाप्यनुपलब्धकोशस्य सनकवचनस्याप्रामाण्ये। तथा च सनकवचनस्य प्रामाण्यसिद्धौ तद्बलेन पवित्रमन्त्रस्य दाहपरत्वसिद्धिः, दाहपरत्वसिद्धौ च दाहप्रकाशनसामर्थ्यरूपलिङ्गमुपजीव्य प्रवर्तमानस्य सनकवचनस्य प्रामाण्यसिद्धिरिति परस्पराश्रयोऽप्यनुसन्धेयः ॥ तस्माद्विनियोगानुसारेणास्य मन्त्रस्य दाहपरत्वाश्रयणमयुक्तमेव—इति ॥

**तन्न**—उक्तमन्त्रगतस्य दाहप्रकाशनसामर्थ्यरूपलिङ्गस्य 'पवित्रमित्यग्निः, अग्निर्वै सहस्रारः' इति श्रुतिसिद्धत्वेनापातप्रतीतिसिद्धत्वाभावात्, सनकस्मृतिवचनस्योक्तलिङ्गमूलकत्वेऽपि प्रामाण्योपपत्तेः; तादृशस्मृतिवचनोपजीव्यस्य दाहप्रकाशनसामर्थ्यलिङ्गस्य श्रुतिसिद्धत्वेन स्वप्रामाण्याधीनसिद्धिकत्वाभावेनान्योन्याश्रयविरहाच्च ॥

**यत्तु**—परमार्थतस्त्वस्य मन्त्रस्य विनियोगानुसारेण दाहपरत्वकल्पने प्राप्तार्थतया विधिशक्तिविलोप एव स्यात्; तथा हि पवित्रं ते विततमिति मुद्रयेदित्यस्य विनियोजकस्मृतिवचनस्य पवित्रमन्त्रविशिष्टचक्रधारणविधिपरत्वे तेनैव स्मृतिवचनेन चक्रधारणस्य प्राप्ततया पवित्रमन्त्रस्य चक्रधारणविधिपरत्वायोगात् अस्य स्मृतिवचनस्य चक्रधारणानुवादेन मन्त्रविनियोगविधिपरत्वेऽनुवादस्य प्राप्तिसापेक्षतया चक्रधारणस्यान्यतः प्राप्तिर्वक्तव्या। तत्र पवित्रमन्त्रादेव चक्र-

धारणप्राप्त्यभ्युपगमे पवित्रमन्त्रस्य विधायकत्वसिद्धौ तत्प्राप्तचक्रधारणानुवादेन स्मृतिवचनस्य पवित्रमन्त्रविनियोजकत्वसिद्धिः ; स्मृतिवचनस्य विनियोजकत्वसिद्धौ च स्मृतिविनियोगवत्त्वेन मन्त्रस्य विधायकत्वसिद्धिरित्यन्योन्याश्रयापत्तेः । वचनान्तरप्राप्तं चक्रधारणमनूद्य स्मृतिवचनस्य विनियोगविधिपरत्वे तस्मादेव वचनान्तरान्मुद्राधारणस्य प्राप्ततया न पवित्रमन्त्रस्य विधायकत्वसिद्धिः—इति ॥

**तन्न** । न हि प्रमाणान्तरप्राप्तत्वं विधायकत्वविरोधि ; तथा सति विधायकश्रुतिसमानार्थकस्मृतिसद्भावस्थले श्रुतेर्विधायकत्वानापत्तेः, तद्विधेयत्वेनाभिमतस्य स्मृतिप्राप्तत्वात् ; किं तु स्वानुपजीविमानान्तरप्राप्तत्वम् । तथा च स्मृतेस्स्वोपजीवित्वात्तत्प्राप्तस्यापि श्रुत्या विधेयत्वमुपपद्यत इति । पवित्रं ते विततमिति मुद्रयेदित्यस्य तादृशमन्त्रविशिष्टचक्रधारणविधिपरत्वेऽपि न दोषः । एवमस्य मन्त्रस्य चक्रधारणानुवादेन मन्त्रविनियोगविधिपरत्वमप्युपपद्यते । तत्र पवित्रमन्त्रादेव चक्रधारणस्य प्राप्त्यभ्युपगमेऽपि नान्योन्याश्रयः, ऋषिसमवेतस्यैव पवित्रमन्त्रविशेष्यकविधिपरत्वप्रकारकज्ञानस्य विनियोगजनकत्वात्, तस्य चात्रार्योपदेशयोगजधर्मादिजन्यत्वेन विनियोगजन्यत्वाभावात्, अस्मदादिगतस्य तादृशज्ञानस्य विनियोगाधीनत्वेऽपि विनियोगजनकत्वाभावात् । वचनान्तरप्राप्तं चक्रधारणमनूद्य स्मृतिवचनस्य विनियोगविधिपरत्वमपि युक्तमेव ; वचनान्तरान्मुद्राधारणस्य प्राप्तत्वेऽपि वचनान्तरं येन न श्रुतं तं प्रति पवित्रमन्त्रस्य विधायकत्वसम्भवात्, नानाशाखागतानां अग्निहोत्रं जुहोतीति वाक्यानां तत्तच्छाखाध्यायिनं प्रत्यग्निहोत्रविधायकतायाश्शास्त्रसिद्धत्वात्, स्वबोधनीयपुरुषगताज्ञानविरोधिस्वानुपजीविमानान्तरप्राप्तार्थत्वस्यैव विधायकत्वकुण्ठकत्वात् । एवमुपबृंहणबलादप्यस्य मन्त्रस्य चक्रधारणविधायकत्वं सिद्ध्यति ।

तथा हि पाद्मे—

"चरणं पवित्रं विततं पुराणं वाङ्मयं शुभम् ।
तेन चक्रेण संतप्तास्तरेयुः पातकाम्बुधिम् ॥
पवित्रं ब्राह्मणस्पत्यं जगद्व्याप्तं हरेस्सदा ।
तेनातप्ता तनूर्येषां ते न यान्ति हरेः पदम् ॥
तेन तप्ता तनूर्येषां ते प्रयान्ति परंपदम् ।
शुद्धेन तेन तप्तेन ब्रह्म तेन पुनीहि नः ॥
येन देवा पवित्रेण आत्मानं पुनते सदा ।
तेन सहस्रधारेण पावमान्यः पुनन्तु नः ॥
प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयम् ।
तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥
सनेमि चक्रमजरं चक्षुरस्य महात्मनः ।
तस्मिन् हि बिभृते देवा महोन्नतपदं ययुः ॥
यत्ते पवित्रमर्चिषि अग्ने तेन पुनीहि नः ।
इत्येवं श्रुतयस्सर्वाः कथयन्ति वरानने ॥
तस्माद्वै विधिवद्धार्यास्शङ्खचक्रादिहेतयः ।"

इत्यादिना तप्तचक्रधारणे पवित्रश्रुतिचरणश्रुतिगतपदानां श्रुत्यन्तरगतपदानां च समन्वयप्रदर्शनेन पवित्रचरणश्रुत्योरश्श्रुत्यन्तराणां च चक्रधारणपरत्वमाश्रयणीयम् ॥

यत्तु—'देवा वै यज्ञाद्रुद्रमन्तरायन्' इत्यादिप्रत्यक्षसिद्धार्थप्रतिपादनपरवेदभागोपबृंहणस्य पुराणादेः प्रत्यक्षमूलकत्वसम्भवेऽपि मानान्तरानधिगतार्थप्रतिपादनपरविधिवाक्योपबृंहणपुराणादेः प्रत्यक्षमूलकत्वासम्भवेन पवित्रमन्त्रस्य शक्तितात्पर्यनिर्णयानुकूलस्य बुद्धिपरिकल्पितन्यायमूलत्वस्यैव वक्तव्यतया न्याय एव शरणीकरणीयः— इति ॥ तदपि न। मानान्तरानधिगतार्थप्रतिपादनपरविधिवाक्योपबृंहणस्यापि प्रत्यक्षमूलकत्वसम्भवात्, न्यायमूलकत्वमेव इति नियमानुपपत्तेः; इतरेषां

चानुपलब्धेरिति स्मृत्यधिकरणगुणसूत्रे अतीन्द्रियार्थप्रतिपादनपरोप-बृंहणस्यापि प्रत्यक्षमूलकत्वस्यैवोक्तत्वेन तद्विरोधापत्तेश्च । अत एव अतीतानागतादिगोचरचतुर्मुखप्रसादादिलब्धसाक्षात्कारमूलकत्व-मुपबृंहणस्योक्तं **श्रीरामायणे**—

'मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती।"—

इत्यारभ्य,

"रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ।
रामस्य सह सौमित्रे राक्षसानां तथैव च ॥
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ।
तच्चाप्यकथितं सर्वं विदितं ते भविष्यति ॥
न ते वागनृता काव्ये काचिदत्र भविष्यति ।
कुरु रामकथां दिव्यां श्लोकबद्धां मनोरमाम् ॥" —इति ॥

**न च**-रामायणस्योक्तवचनेन भगवच्चरितवर्णन एव चतुर्मुखप्रसादजन्य-साक्षात्कारमूलकत्वं प्रतीयते, न तु मानान्तरानधिगतार्थवेदवाक्योप-बृंहण इति-वाच्यम्, तस्योपलक्षणत्वात्। अत एव **श्रीमद्रामायणे**—

"वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ।"—इत्युक्तम् ।

तथा **विष्णुपुराणे**—

'सम्प्राप्तश्च तदा तत्र वसिष्ठो ब्रह्मणस्सुतः ।'—

इत्यारभ्य,

"पुराणसंहिताकर्ता भवान् वत्स भविष्यति ।
देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान् ॥
प्रवृत्ते च निवृत्ते च कर्मण्यस्तमला मतिः ।
मत्प्रसादादसन्दिग्धा तव वत्स भविष्यति ॥
ततश्च प्राह भगवान् वसिष्ठो मे पितामहः ।
पुलस्त्येन यदुक्तं ते सत्यमेतद्भविष्यति ॥" इति ॥

तथा **श्रीमहाभारते आदिपर्वणि**—

"तपसा ब्रह्मचर्येण व्यस्य वेदान् महामतिः ।
सस्कारोपगतं गुह्यं नानाशास्त्रोपबृंहितम् ॥
पुण्ये हिमवतः पार्श्वे मध्ये गिरिगुहालये ।
विशोध्य देहं धर्मात्मा दर्भसंस्तरमाश्रितः ॥
शुचिस्सुनियमोपेतश्शान्तात्मा तपसि स्थितः ।
भारतस्येतिहासस्य धर्मेणान्वीक्ष्य तां गतिम् ॥
प्रविश्य योगज्ञानेन सोऽपश्यत्सर्वमन्ततः ।
निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसाऽऽवृते ॥" —इत्यादि ॥

तत्रैव **मोक्षधर्मे** भगवतो बादरायणस्य नारायणप्रसादलब्धं प्रत्यक्षमुपबृंहणमूलमित्युक्तम्—

"पराशरसुतश्श्रीमान् व्यासो वाक्यमुवाच ह ।
मया हि सुमहत्तप्तं तपः परमदारुणम् ॥
भूतं भव्यं भविष्यच्च जानीयामिति सत्तमाः ।
तस्य मे तप्ततपसो निगृहीतेन्द्रियस्य च ॥
नारायणप्रसादेन क्षीरोदस्यानुकूलतः ।
प्रकाशकमिदं ज्ञानं प्रादुर्भूतं यथेप्सितम् ॥
तच्छृणुध्वं यथा ज्ञानं वक्ष्येऽसंशयमुत्तमम् ।
यथावृत्तं हि कल्पादौ दृष्टं मे ज्ञानचक्षुषा ॥
परमात्मेति य प्राहुस्साङ्ख्ययोगविदो जनाः ।
महापुरुषसंज्ञां स लभते स्वेन कर्मणा ॥" —इति ॥

तत्रैव मोक्षधर्मे भगवान्—

"भूतभव्यभविष्याणां ज्ञानानां वेत्स्यसे गतिम् ।
ये ह्यतिक्रान्तगाः पूर्वं सहस्रयुगपर्ययाः ॥
तांश्च सर्वान्मयादिष्टो द्रक्ष्यसे नात्र संशयः ।

पुनर्द्रक्ष्यसि चानेकान् सहस्रयुगपर्ययान् ॥
अपि ध्यानान्मम मुने नैतद्वचनमन्यथा ।"        —इति ॥

तस्मात्प्रत्यक्षमूलकतयैवोपबृंहणस्य प्रामाण्यमित्युपबृंहणानुरोधात्पवित्र-श्रुतेश्चक्रधारणविधायकत्वमङ्गीकर्तव्यं ; न्यायमूलकतया प्रामाण्येऽपि न्यायदार्ढ्यस्य पूर्वमुपपादितत्वात्तन्मूलकोपबृंहणानुरोधाच्च तथाऽङ्गी-कर्तव्यम्। अतीन्द्रियार्थेषूपबृंहणस्याप्रामाण्ये अपिस्मर्यतइत्यादिशारी-रकसूत्रे ह्यतीन्द्रियार्थव्यवस्थापकतयोपबृंहणोदाहरणानुपपत्तिः । एवं प्रमाणलक्षणे प्रतिपादितस्योपबृंहणस्यानर्थक्यापत्तिश्च ॥

**यच्चोक्तं**—अविवक्षितार्थेऽपि मन्त्रस्य पुराणेषूपबृंहणं दृश्यते; यथा—

"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्या,
जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णो"—

इति मन्त्रस्य सोमलतायां विष्ण्वादिजनयितृत्वासम्भवेन तज्जनयितृ-त्वांशे विवक्षारहितस्यापि,

"सोमं ससर्ज यज्ञार्थं सोमाद्द्यौस्समजायत ।
धरा वह्निश्च सूर्यश्च वज्रपाणिश्शचीपतिः ॥
विष्णुर्नारायणश्श्रीमान् सर्वं सोममयं जगत् ।"—

इति वायुसंहितायामुपबृंहणदर्शनात् ; तस्मान्नोपबृंहणानुसारेण पवित्र-मन्त्रस्य चक्रधारणपरत्वसिद्धिः—इति ॥ **तन्न**, उपबृंहणविशेषस्याप्रामा-ण्यदर्शनमात्रेणोपबृंहणत्वावच्छेदेन तथात्वसाधने 'स प्रजापतिरात्मनो वपामुदक्खिदत्' इत्यादिवेदवाक्यविशेषस्य बाधितार्थकत्वदर्शनेन वेदत्वा वच्छेदेन तथात्वापत्तेः ; इदं रजतमिति ज्ञानस्याप्रामाण्यदर्शनमात्रेण ज्ञानत्वावच्छेदेन तथात्वसिद्धौ शून्यवादापत्तेः। एवं मन्त्रादिगतसोम-पदस्य तच्छरीरकपरमात्मपरत्वेन तादृशपरमात्मनश्च द्यावापृथिव्यादि-जनयितृत्वसम्भवादवतारविष्णुजनयितृत्वसम्भवाच्च । तथा सोमपदस्य परमात्मपर्यन्तत्वाभावेऽपि न क्षतिः, सूर्यादीनां कर्मद्वारा सोमसाध्य

त्वात्, यज्ञैराराधितो भगवानपि लीलयाऽवतरतीति पुराणादिसिद्ध-त्वाच्च । तदाह **पराशरः**---

"देह्यनुज्ञां महाराज मा धर्मो यातु संक्षयम् ।
हविषां परिणामोऽयं यदेतदखिलं जगत् ॥" ---इति ॥

तथा चोपबृंहणानुसारेण पवित्रमन्त्रस्य चक्रधारणपरतया वेदमन्त्र-करणकविधिविषयतया च चक्रधारणस्य वैदिकत्वसिद्धिः । न च—प्राणाय स्वाहेति वेदमन्त्रान्विते प्रथमकवलभक्षणे व्यभिचाराद्वेदमन्त्रा-न्वितत्वं न वैदिकत्वसाधकमिति—वाच्यम् ; प्रथमकवलभक्षणेऽपि वेदजन्येष्टसाधनत्वादिप्रकारकबोधविषयत्वादिरूपवैदिकत्वसत्त्वात् ॥

**यदपि**---पद्मपुराणवचनं 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इत्यादिवत्, 'इत्येव श्रुतयस्सर्वाः कथयन्ति वरानने' इत्यनेन कथ-ञ्चिन्मन्त्रपदप्रकाश्यत्वं हेतुवन्निगद्य, "तस्माद्वै विधिवद्धार्याश्शङ्ख-चक्रादिहेतयः" इत्यनेन मन्त्रसिद्धं चक्रादिधारणं स्तौतीति न पाद्मो-पबृंहणबलाच्चक्रादिधारणस्य वैदिकत्वसिद्धिः—इति ॥ **तन्न** ; कथयन्ती-त्यस्य बोधयन्तीत्यर्थकतया मन्त्रजन्यबोधविषयत्वस्यैव प्रतीतेः, कथ-ञ्चिन्मन्त्रपदप्रकाश्यत्वं निगद्यत इत्यस्याग्रहमूलकत्वात्, वेदोपबृंहणार्थं प्रवृत्तस्य पुराणस्य मन्त्रपदप्रकाश्यत्वे तात्पर्यासम्भवात्, 'तस्माद्वै विधिवद्धार्याः' इत्यनेन चक्रधारणे प्रत्यवायप्रयोजकीभूताभाव-प्रतियोगित्वप्रतीतेः, चक्रधारणविधानस्यैव बोधनेन स्तावकत्वकथना-योगाच्च । किञ्च—स्तावकत्वं नाम प्रत्यवायप्रयोजकीभूताभावप्रतियोगि-त्वाभाववति चक्रधारणे तद्बोधकत्वं वा विशिष्टवाक्यस्य प्रतीयमानार्थ-परित्यागेन बलवदनिष्टाननुबन्धित्वलाक्षणिकत्वं वा ? नाद्यः—अप्रा-माण्यापत्तेः, प्रमाणान्तरबाधाभावे वृथा तत्कल्पनस्यानुचितत्वात् । अत एव न द्वितीयः, स्तावकत्वेऽपि नाविहितस्य स्तुतिरिति न्यायेन विध्युन्नयनावश्यंभावाच्च ॥

**यदप्युक्तं**—वस्तुतस्तु न पुराणकर्तृसमुत्प्रेक्षितन्यायाभाससिद्धार्थकथनपरमिदं वचनं; किन्तु वैशेषिकसाङ्ख्यशैवागमप्रक्रियानुवादिपुराणभागेषु वैशेषिकादिसमुत्प्रेक्षितहेत्वाभासानुवादकवचनवत्पाञ्चरात्रप्रक्रियानुवादिपुराणभागेषु स्वमताभिनिवेशपिहिततत्त्वदृष्टिपाञ्चरात्रिकमतभ्रान्तिविप्रलिप्सादिसमुत्प्रेक्षितन्यायाभाससिद्धस्वमतानुगुणश्रुतियोजनाप्रकारानुवादकान्येतादृशोपबृंहणवचनानि तन्मताभिमानिपुरुषसंवादप्रदर्शनपूर्वकं निबद्धानीति नैतेषां तत्र तात्पर्यम्; शुक्तिका रजतमभादिति भ्रान्तिसिद्धरजतानुवादिवाक्यवत्परभ्रमसिद्धस्यैवार्थस्यानुवादात्। अत एव प्राचीनैः—'बहवः पुरुषा राजन् साङ्ख्ययोगविधायिनाम्' इति महाभारतवचनादात्मनानात्वमाशङ्क्य साङ्ख्यमतप्रक्रियानुवादित्वादात्मनानात्वपरत्वं नास्तीत्युक्तम्—इति ॥

**तदयुक्तं**; यस्यार्थस्योत्तरत्र दूषणं प्रतिपाद्यते तदर्थप्रतिपादनपरश्रुतिपुराणादेर्भ्रान्तिसिद्धार्थानुवादपरत्वं, यथा सद्विद्यायां—तद्धैक आहुरसदेवेदमग्र आसीदिति वाक्यस्य तथात्वं, कथमसतस्सज्जायेतेत्युत्तरवाक्येन तन्निराकरणात्, दूषणाभावेऽपि तथात्वकल्पने च सर्वत्रापि तथात्वकल्पनसम्भवेन सर्वस्मृतीतिहासपुराणादीनामप्रामाण्यापत्तेः ॥

एतेन—बहवः पुरुषा राजन्नित्यस्यापि साङ्ख्यप्रक्रियानुवादित्वं प्राचीनोक्तमयुक्तं; "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इत्यादिश्रुतिसिद्धात्मनानात्वप्रतिपादनपरत्वाच्च ॥

**यच्चोक्तं**—पाद्मोपबृंहणबलादिव शैवपुराणोपबृंहणबलात्पवित्रचरणश्रुत्योस्तप्तलिङ्गमुद्राधारणपरत्वप्रसङ्गः। तथा हि—

"ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः।
पवित्रं तद्धि विख्यातं तत्सम्पर्कात्तनुश्शुचिः॥
ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते।

तस्मात्पवित्रं लिङ्गाख्यं धार्यं शैवमनामयम् ॥
तेनातप्ततनूरङ्ग."—

इत्यादिना,

'दीक्षया सहितस्साक्षादामुयाल्लिङ्गमुत्तमम्' ।

इत्यन्तेन अगस्त्यं प्रति रेणुकेन पवित्रश्रुतेर्लिङ्गधारणपरतया व्याख्यातत्वात्—इति । तत्तुच्छम्; शैवपुराणस्य तामसत्वेन पाद्मपुराणस्य च सात्त्विकत्वेन तयोर्विरोधे पाद्मवचनस्यैव ग्राह्यत्वात्, भगवच्छास्त्रे च पवित्रश्रुतेस्सौदर्शनत्वाभिधानेन तद्विरोधाच्च; भगवच्छास्त्रमूलकमनुस्मृतिविरोधे स्मृत्यन्तराणामनादरणीयतायाः 'मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यते' इत्यादिवचनसिद्धत्वेन साक्षाद्भगवच्छास्त्रविरोधेऽनादरणीयताया. कैमुतिकन्यायसिद्धत्वात् ॥

ननु—शैवपुराणस्य तामसत्वे पाद्मपुराणस्य च सात्त्विकत्वे किं मानं, किं वा मानं तामसानामनादरणीयत्वे—इति चेत्। उच्यते—

"वैष्णवं नारदीयं च तथा भागवतं परम् ।
गारुडं च तथा पाद्मं वाराहं शोभनं स्मृतम् ।
सात्त्विकानि पुराणानि शोभनानि शुभानने ।
ब्रह्माण्डं ब्रह्मकैवर्तं मार्कण्डेयं तथैव च ॥
भविष्यद्वामनं ब्राह्मं राजसानि निबोध मे ।
शैवमाग्नेयकं चैव लैङ्गं स्कान्दं तथैव च ॥
कौर्मं चैव तथा मात्स्यं तामसानि प्रचक्षते ।"

इति पाद्मपुराणवचनैस्सात्त्विकराजसतामसविभागस्य,

"नाद्रियेत पुराणादीन् राजसांस्तामसांस्तथा ।
अनीशानां परेशत्वं वृथा यत्रोपवर्ण्यते ॥"

इति भारद्वाजवचनेन तामसानामनुपादेयत्वस्य च सिद्धेः; किं चानन्यथासिद्धमेवोपबृंहणं श्रुत्यर्थनिर्णयाय प्रभवति; 'ब्रह्मेति लिङ्गमा-

ख्यातं' इत्याद्युपबृंहणं च तप्तलिङ्गमुद्राधारणांशे नानन्यथासिद्धं; तस्योपबृंहणस्य सुदर्शनपरत्वेनाप्युपपत्तेः। तथा हि—ब्रह्मेति लिङ्ग-माख्यातमित्यस्यायमर्थः—ब्रह्मेतिशब्देन लिङ्गं भगवच्चिह्नं सुदर्शन-माख्यातं, एवम्भूतस्य सुदर्शनस्य ईश्वरो नारायणः पतिर्नियन्ताऽपि 'पतिं विश्वस्यात्मेश्वरं शाश्वतम्', 'निरुपाधीश्वरत्वं तु वासुदेवे प्रतिष्ठित-म्' इत्यादिश्रुतिस्मृतिष्वीश्वरशब्दस्य नारायणे प्रयोगदर्शनात्; तत् प्रसिद्धं सुदर्शनं पवित्रं, तत्सम्पर्कात्तनुश्शुचिः, पवित्रं ते विततमिति ऋगाहेति योजना। तस्माल्लिङ्गाख्यं चिह्नाख्यं। शैवं—शिवस्य नाराय-णस्येदमिति शैवं, 'शाश्वतं शिवमच्युतं' इत्यादौ नारायणेऽपि शिव-शब्दप्रयोगदर्शनात्; यद्वा—शिवेन रुद्रेण धार्यमाणत्वाच्छैवं, वैष्णवा-नामहं यथेति भागवतादौ शिवस्य वैष्णवोत्तमत्वोक्तेस्तस्यापि चक्र-धारणसिद्धेः। तेन विष्णुचक्रेणातप्ततनूरज्ञः; तप्ततनूर्विशेषज्ञ इत्यर्थः। दीक्षया—तापादिसंस्काररूपया; सहितोऽधिकारी—उत्तमं भगवच्चक्रादि-चिह्नं, तत्सारूप्यमिति यावत्; आप्नुयात्—प्राप्नोति। यदि लिङ्ग-शब्दश्शिवलिङ्गपरस्स्यात् तदोपबृंहणानुसारेण तप्तलिङ्गधारणं श्रुति-विहितमिति तप्तलिङ्गं वैदिकैर्धार्यं स्यात्; न हि वैदिकेषु केनापि तद्धार्यते। न च—पाशुपतव्रतादिशिवधर्मतत्फलकैलासादिप्राप्तिप्रति-पादकपूर्वापरवाक्यसन्दर्भमध्यगतलिङ्गपदस्य शिवलिङ्गपरत्वमुचितं, न तु विष्णुचिह्नभूतचक्रादिपरत्वं, प्रकरणविरोधादिति—वाच्यम्; शिव-लिङ्गपरत्वे सात्त्विकपुराणविरोधेनोपबृंहणस्यैवाप्रामाण्यापत्तेः, शिवस्य चक्रादिधारणेन वैष्णवोत्तमत्वरूपपरमोत्कर्षप्रतिपादकतया प्रकरण-विरोधाभावाच्च॥

यदपि—'तस्मात्पवित्रं लिङ्गाख्यं शैवं धार्यमनामयम्'—इत्यत्र शिवलिङ्गशब्दयोः क्रमेण नारायणतच्चक्रवाचित्वाश्रयणं न सम्भवति; सुरभयस्सुमनसः, रामार्जुनावित्यादौ यत्रोभयपदं स्वनार्थकं,

तत्र परस्परसमभिव्याहारेण तत्तदर्थविशेषरूढिसमुन्मेषवत् शिवलिङ्ग-पदयोः परस्परसमभिव्याहारेण शशाङ्कशेखरतत्प्रतिकृतिरूढ्योरेव समुन्मेषात्---इति । तन्न ; यत्र पदद्वयं नानार्थकं तत्र परस्परसमभिव्याहारस्य तात्पर्यग्राहकत्वेऽन्योन्याश्रयात्, शिवपदस्य रुद्रपरत्व-निश्चयं विना लिङ्गपदस्य तत्प्रतिकृतिपरत्वनिश्चयासम्भवात् लिङ्ग-पदस्य तत्प्रतिकृतिपरत्वनिश्चयं विना शिवपदस्य रुद्रपरत्वनिश्चया-योगादिति ॥

यदपि---"यत्ते गात्रादग्निना पच्यमानादभिशूलं नहतस्यावधावति, मा तद्भूम्या माश्लिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातम्"---इति मन्त्रेण तप्तशूलधारणमपि प्रसञ्जनीयम्---इति । तन्न ; इष्टसाधन-त्वानिष्टनिरासकत्वान्यतरप्रकारकवेदजन्यबोधविषयत्वस्यैव धर्मत्वव्या-प्यत्वेन धर्मत्वापादकत्वेऽपि केवलवेदजन्यबोधविषयत्वस्य धर्मत्वा-नापादकत्वात् ; अन्यथा न कलञ्जं भक्षयेदिति वेदजन्यबोधविषयस्य कलञ्जभक्षणादेरपि धर्मत्वापत्तेः । न च--अनिष्टसाधनत्वाप्रकारकवेद-जन्यबोधविषयत्वस्य धर्मत्वव्याप्यत्वाङ्गीकारान्नोक्तदोष इति--वाच्यम् ; तथाऽपि 'इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्' इत्युक्तयतिहननादे-रपि धर्मत्वप्रसङ्गात् ; तथा चोक्तान्यतरप्रकारकवेदजन्यबोधविषय-त्वस्य त्रिशूलधारणेऽभावाद्धर्मत्वापादनं न युक्तम् ॥

न च--अभिशूलमग्निना शूलसंसृष्टेनाग्निना, पच्यमानात् तज्जन्यवर्त-मानकालीनकिणाश्रयात्, ते गात्रात्, यदल्पमप्यवधावति चित्याग्निदाह-काले अज्ञातं सत् पतति ; तदङ्गं भूम्यां माश्लिषत् मा लग्नं भूत्, उश-द्भ्यः कामयमानेभ्यः, रातं दत्तमस्त्वित्यर्थात् अग्नितप्तशूलजन्यकिणस्य देवप्रीतिरूपेष्टसाधनत्वबोधनाद्धर्मत्वापादनं युज्यत इति--वाच्यम् ; पच्यमानादित्यनेन पाकस्य वर्तमानत्वबोधेऽपि किणस्य तदबोधात्--लडाद्यर्थवर्तमानत्वादेर्धात्वर्थेऽन्वयेऽपि तज्जन्यफलेऽन्वयासम्भवात्,

अन्यथा मध्यमार्गगन्तरि काशी गच्छतीत्यादिप्रयोगानुपपत्तेः, विक्लित्त्य-नुकूलव्यापारस्य पचधात्वर्थत्वेन क्लिणस्य फलत्वाभावाच्च । न च—अभिशूलं शूलसंसृष्टात् अग्निना पच्यमानात् नित्याग्निना पच्यमानादित्यर्थाङ्गीकारान्न विरोधः, निहतस्येत्यनेन मरणानन्तरकालीनत्व-बोधादिति—वाच्यम् ; तथा सति शूलसंसृष्टत्वमात्रप्रतीतावपि तप्तशूल-धारणाप्रतीतेरापादकासिद्धेः ॥

वस्तुतस्तु—अश्वमेधे श्रूयमाणस्यास्य मन्त्रस्याश्वपरत्वमेव युक्तं ; तथैव भट्टभास्करादिभिर्व्याख्यातत्वात्, "हे अश्व अग्निना पच्यमानात्ते गात्रात्, यदल्पमप्यववावति अज्ञात सत् पतति, पृथिव्यां निहतस्य निहन्यमानस्य तव अभिशूलं शूले सक्तमङ्ग वा अवधावति, तदङ्गं भूम्यां मा श्लिपत् मा लग्नं भूत्, उशद्भ्यः कामयमानेभ्यो रातं दत्तमस्तु" इति तद्भाष्यात् ; तस्मादस्य मन्त्रस्य तप्तशूलधारणे धर्मत्वापादकत्व-कथनमसङ्गतमेव ॥

**यदपि**—स्मृतिपुराणतन्त्रादिषु यानि तापरूपाणि कर्माण्युपदिष्टानि तद्विषयतयैवायं मन्त्रो योजनीयः ; तथा हि—सन्ति बहवस्तापाः, 'ग्रीष्मे पञ्चाग्निमध्यस्थस्सूर्याभिमुखमास्थितः'—इत्यादिस्मृतिप्रतिपन्न-वैखानसधर्मभूतपञ्चाग्निसूर्यादितापः, तथा योगशास्त्रविहितप्राणायाम-सङ्क्षुभितजाठराग्निसन्तापः, सुरापानमरणान्तिकप्रायश्चित्तभूततप्तसुरागो-मूत्रादिपानसम्पादितमकल्देहतापः, मृतशरीरदाहात्मकचित्याग्निदाहः, अग्निर्वैद्यमतःपरमिति वैद्यशास्त्रप्रतिपन्नसन्निपातादिरोगनिवर्तकाग्निवै-द्यदाहः, श्रोत्रियस्य पारलौकिकज्ञानवतस्सम्पातायातपापानुष्ठानसम्पन्न-पश्चात्तापः, ब्रह्महत्यादिपातकिनां देशान्तरगमनेऽपि तत्कृतपापपरि-ज्ञानाय तप्तकबन्धभगमुद्रादितापश्च । सम्भाव्यते च तेषां सर्वेषां तापानां तप्तपदेन प्रत्ययः । युज्यते च पवित्रमन्त्रोत्तरार्धगतेन तत्पदद्वयेन 'तेनरक्तं रागात्', 'तत्र भवः', तत्र जातः', 'तस्यापत्यम्'

इत्यादिव्याकरणसूत्रगततत्पदवत् शब्दासन्निहितस्यापि योग्यताबलेन बुद्धिमागतस्य तत्तत्तापविशेषसाध्यफलस्य परामर्शः । तथा च—अग्निसाध्यतापानुष्ठानसमये ब्रह्मणस्पतिशब्देन अग्नेस्सम्बोधनं कार्यं; एवं सूर्यादिसाध्यतापानुष्ठानसमये सूर्यादीनां साधनतया तत्सम्बोधनं कार्यम् । यद्वा—अग्निसाध्यतापानुष्ठानसमयेऽपि सूर्यादीनां सर्वकर्मसाक्षितया ब्रह्मणस्पतिशब्देन तेषामन्यतमस्य सम्बोधनं युज्यते ; 'अग्निर्वाग्भूत्वा मुखं प्राविशत्', 'अग्निर्मे वाचि श्रितः' इत्यादिश्रवणात् । यद्वा—सुषुम्नस्सूर्यरश्मिरित्यादिश्रुत्या सुषुम्नानाडीरूपेणादित्यस्य जठरवृत्तिवैश्वानररूपेणाग्नेः प्राणपञ्चकरूपेण वायोरन्तर्यामिरूपेण परमेश्वरस्य सर्वगात्रव्याप्तिवचनमुपपद्यते । पवित्रशब्दश्च—'पूतं पवित्रं मेध्यं च' इत्यमरकोशाभिधानात्, 'अग्निः पवित्रं स मा पुनातु, सूर्यः पवित्रं स मा पुनातु', 'असौ वा आदित्योऽच्छिद्रं पवित्रं', 'यत्ते पवित्रमर्चिषि, अग्ने विततमन्तरा, ब्रह्म तेन पुनीमहे, उभाभ्यां देव सवितः, पवित्रेण सवेन च', 'पाणिलिङ्गं पवित्रम्' इत्यादिवैदिकप्रयोगाच्च सूर्याग्निस्वरूपतद्रश्मिजालशिवलिङ्गादिषु यथायोगं वर्तनीयः। तथा च पवित्रशब्दस्य सूर्यादिस्वरूपपरत्वे—हे ब्रह्मणस्पते हे अग्ने यत् त्वत्स्वरूपं तेनादग्धतनूस्तत्तदुचितं फलं नाश्नुते—इत्यर्थो ग्राह्यः ; पवित्रशब्दस्य रश्मिजालपरत्वे—मेध्यं यद्रश्मिजालं तेनादग्धतनूस्तद्योग्यं फलं नाश्नुत इत्यादियोजनाभेदा यथासम्भवमूहनीयाः ॥ —इति ॥

अत्रोच्यते—तत्र हि पञ्चाग्निसूर्यादितापपरत्वं तावदयुक्तं, चतुर्मुखनियामकत्वस्य सूर्ये बाधेन ब्रह्मणस्पत इत्यनेन सम्बोध्यत्वानुपपत्तेः, सूर्यस्य वेदस्वरूपतायाः 'सैषा त्रय्येव विद्या तपति' इत्यादिश्रुतिसिद्धत्वेऽपि तन्नियामकत्वेन प्रसिद्ध्यभावाद्ब्रह्मशब्देन वेदस्य ग्रहणेऽप्यनिस्तारात्, सूर्यस्वरूपस्य तद्विग्रहस्य वा विभुत्वाभावेन गात्राणि पर्येषीत्यस्यानुपपत्तेः । न च—'आदित्यश्चक्षुर्भूत्वाऽक्षिणी

प्राविशत्' 'सुषुम्नस्सूर्यरश्मि ' इत्यादिश्रुतिभिरिन्द्रियाभिमानिदेवतात्वेन सुषुम्नानाडीरूपरश्मिद्वारेण च व्याप्तिरादित्यस्याप्युपपद्यत इति–वाच्यम्; प्रतियोगिवैयधिकरण्याघटितगात्रत्वव्यापकत्वस्य तावताऽपि बाधात्, नेत्राद्यवच्छेदेन सतोऽप्यादित्यस्यान्यदेशावच्छेदेनाभावसत्त्वात्, विश्वतश्शब्दपरीत्युपसर्गाभ्यां तादृशव्यापकत्वस्यैव बोधनात्, पदान्तरासमभिव्याहृतस्य प्रभुशब्दस्य निरुपाधिकप्रभुत्वाद्यवच्छिन्नवाचकत्वस्याप्यनुपपत्तेश्च ॥

पवित्रं विततमित्यस्य मेध्यं यद्रश्मिजालमित्यर्थोऽपि न युक्तः, रश्मिजालपदस्याध्याहारप्रसङ्गात्। तच्छब्दद्वयस्य बुद्धिस्थतत्तत्साध्यफलपरत्वमपि न युक्तं; अनिर्दिष्टपरामर्शकत्वायोगात्, तेन रक्तं रागादित्यत्र रागादित्यस्य रञ्जकद्रव्यवाचिपदादित्यर्थकतया निर्दिष्टस्यैव रञ्जकद्रव्यस्य तच्छब्देन परामर्शात्, 'तत्र जातः' 'तस्यापत्यं' इत्यादावपि ङ्याप्प्रातिपदिकादित्यतः प्रातिपदिकादित्यनुवृत्त्या प्रातिपदिकशब्दस्य च अर्थवदधातुरित्यनेनार्थविशिष्टशब्दस्वरूपे परिभाषितत्वेन तत्परतया तद्घटकप्रातिपदिकार्थस्य तच्छब्देन परामर्शादनिर्दिष्टपरामर्शायोगात्। अस्तु वा तत्रागत्याऽनिर्दिष्टपरामर्शः, तथाऽपि प्रकृते गत्यन्तरस्योपपादितत्वेन तदयोगात् ॥

एतेन योगशास्त्रविहितप्राणायामादिसङ्क्षुभितजाठराग्निसन्तापादिपरत्वमपि निरस्तम्; "अग्निः पवित्रं स मा पुनातु, सूर्यः पवित्रम्" इत्यादौ सूर्यशब्दस्याग्नित्वाद्यवच्छिन्नपरत्वे घटो घट इतिवन्निराकाङ्क्षत्वप्रसङ्गेन सहप्रयोगस्य तद्धर्मावच्छिन्ने शक्तिकुण्ठकस्य तद्धर्मावच्छिन्नशक्तिसाधकतयोपन्यासस्याज्ञानमूलकत्वात्, ते पवित्रमित्यस्य त्वत्स्वरूपमित्यर्थे अभेदे षष्ठ्या अस्वारस्यात्, अतप्ततनूरित्यत्र प्राणायामसङ्क्षुभितजाठराग्निनेत्यध्याहारापत्तेश्च ॥

पाणिलिङ्गं पवित्रमिति लिङ्गे पवित्रशब्दप्रयोगोऽप्यसिद्धः ; पाणिलिङ्ग पवित्रमिति वा ऽस्यास्मिर्यजुर्वेदारण्यके पाठेऽपि विद्यारण्यभट्टभास्करादिभिरव्याख्यातत्वेन तादृशपाठस्याप्रामाणिकत्वात्, द्राविडानां शिष्टानां पाठाभावात्, पाणिमन्तं पवित्रमिति पाठाच्च । किञ्च पवित्रश्रुतेः परमात्मपरतया सूर्यादिपरत्वासम्भवः । तदाह भगवान् शौनकः—

"आध्यात्मिकं पवित्रं ते सूक्तं जप्त्वाऽऽप्लुतश्शुचिः ।
गतिमिष्टामवाप्नोति विन्दते चेह वृद्धताम् ॥" —इति ॥

एतदेव शौनकवचनमनुरुध्य सामवेदभाष्यकृता भरतस्वामिना पवित्रश्रुतिः परमात्मपरतया व्याख्याता। न चैवं—सौदर्शनत्वविरोध इति—वाच्यम् ; परमात्मपरत्वेऽपि तदायुधत्वेन सुदर्शनपरत्वाविरोधात् । अपि च पवित्रमित्यग्निरिति श्रुत्या पवित्रश्रुतेस्सुदर्शनधारणपरतया व्याख्यातत्वेन अर्थान्तरपरत्वकथनमत्यन्तमप्रामाणिकम् ॥

यत्तु—"नाङ्कयेन्न दहेद्देहं दहेच्चेत्कामकारतः ।
नाधिकुर्वन्ति दग्धाङ्गाश्श्रौतस्मार्तेषु कर्मसु ॥"—

इत्यादिस्मार्तनिषेधवचनमूलत्वेनायं मन्त्रो योजनीयः । तथा हि—हे ब्रह्मणस्पते ब्राह्मणोत्तम, त्वं प्रभुः स्वतन्त्रोऽसि, पवित्रं पवित्राणि पूतानि, सुपां सुलुगित्यनुशासनाद्विभक्तिव्यत्ययः ; विश्वतो गात्राणि करचरणादीनि सर्वाङ्गानि, विस्तीर्णं यथा भवति तथा पर्येपि धारयसि; तदङ्गानां पवित्रत्वं च 'यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति' इतिश्रुतेः। तस्मात्तप्तमुद्रा न धार्येत्यभिप्रेत्य परमकारुणिकी श्रुतिराह अतप्तेति ; आय विष्णवे, तप्ता तनूर्येन तथोक्तः, अत एवामः—अपक्रान्तःकरणः, तत्—प्रसिद्धं, नाश्नुते—न भजते ; एवं—विष्णुरूपेण चक्रेण तप्ता तनूर्यस्य स तथोक्त इति वा विग्रहः। न केवलं तप्ताङ्गानामिष्टाभावमात्रं; अनिष्टमप्यस्तीत्याह—शृतास

इति ; शृताः पक्काः, इत् तप्तचक्रमुद्रासन्तापं, वहन्तः समाशत। अर्थात्पाक एव कर्मत्वेन सम्बध्यते, स च योग्यत्वात्कुम्भीपाकादिरूपः। यद्वा—अतप्तेति तपसन्ताप इत्यस्य लङात्मनेपदप्रथमपुरुषैकवचनं, छान्दसमेकपदत्वं, कत्रभावार्थं त्वयाऽपि तदनुसरणात्। अस्तु वा द्वैपद्यं, तथाऽपि न दोषः ; तेनायमर्थः—यस्य तनूरङ्गानि, नातप्त न दग्धवान्, स आमः ; अत एव ब्राह्मणोत्तमस्तत्पदमश्नुते। एवमतप्ताङ्गानां फलमुक्त्वा तप्ताङ्गानामनिष्टमाह शृतास इति। तच्छब्देन पूर्ववदेव कुम्भीपाकस्य परामर्शः, तथा च ब्राह्मणोत्तमैस्तप्तमुद्रा न धार्येति फलितोऽर्थः—इति॥

तदयुक्तम्; पतिशब्दस्य स्वामित्वनियामकत्वावच्छिन्नशक्तस्योत्तमपरत्वे शरीरत्वावच्छिन्नशक्तस्य गात्रशब्दस्य करचरणादिपरत्वे व्याप्त्यर्थकस्य पर्येषीत्यस्य धारणपरत्वे च लक्षणाप्रसङ्गात्। भिन्नवचनान्तयोः पवित्रगात्रशब्दयोस्सामानाधिकरण्यायोगात्; विभक्तिव्यत्ययकल्पनस्य चागतिकत्वात् ; गात्राणि त्वं धारयसीत्यनेनैव गात्रेषु त्वत्सम्बन्धित्वसिद्ध्या तव गात्राणि त्वं धारयसीत्यस्यावक्तव्यत्वेन त इत्यस्यानन्वयात् ; कर्मपारतन्त्र्यशास्त्रपारतन्त्र्यभगवत्पारतन्त्र्याद्याश्रये ब्राह्मणे स्वातन्त्र्यस्य बाधेन प्रभुशब्दस्य बाधितार्थकत्वात् ; विततमित्यस्य पर्येषीत्यनेनान्वये व्यवहितान्वयप्रसङ्गात् ; अनेकदेशसम्बन्धरूपविततत्वस्य पतनप्रतिबन्धकसंयोगानुकूलव्यापाररूपधात्वर्थे बाधेनान्वयासम्भवात् ; गात्रत्वव्यापकपतनप्रतिबन्धकसंयोगानुकूलव्यापारस्य स्वीयावयवमात्रधारके ब्राह्मणे बाधेन विश्वतो गात्राणि पर्येषीत्यस्यानुपपत्तेश्च॥

न च—ते विश्वतोगात्राणि पर्येषीत्यनेन त्वत्सम्बन्धिगात्रत्वव्यापकसंयोगानुकूलव्यापारबोधनान्नानुपपत्तिः, अत एव त इत्यस्यापि सार्थक्यमिति—वाच्यम्; तथाऽपि त्वत्सम्बन्धिगात्राणि त्वं धारयसीत्यस्या-

नावश्यकतया पर्येषीत्यस्य वैयर्थ्यप्रसङ्गात् । आय विष्णवे, तप्ता तनूरित्यर्थोऽपि न युक्तः; तप्तपदस्य करणसाकाङ्क्षत्वेन चक्रेणेत्यध्याहारावश्यकतया वृत्त्यघटकपदार्थानन्वितस्वार्थकत्वाभावेनासामर्थ्यात्तप्तपदस्य समासानुपपत्तेः॥ न च–इयमनुपपत्तिर्भवन्मतेऽपि समाना, शरैश्शातितपत्र इत्यादाविव वृत्त्यघटकपदार्थानन्वितेत्यत्राभेदान्वयं निवेश्य सामर्थ्योपपादनं चास्माकमपि तुल्यमिति–वाच्यम्; तथाऽपि तप्तपदयोगे चतुर्थीसमासस्यानुशासनाभावेनासाधुत्वात्॥

एवं–एन विष्णुरूपेण चक्रेण तप्ता तनूरित्यर्थोऽपि न युक्तः; चक्रस्य विष्णुशरीरत्वेऽपि विष्ण्वभिन्नत्वाभावात्, अशब्दस्य विष्णुशरीरत्वावच्छिन्नपरत्वे च लक्षणाप्रसङ्गात्। अतप्ततनूर्न तदामो अश्नुत इत्यनेन दग्धाङ्गस्येष्टाभावमुक्त्वाऽनिष्टप्राप्तिप्रतिपादनाय शृतास इत्यादिकमित्यपि न सत्; तथा सति शृतास इद्वहन्त इति कर्तृवाचकपदवैयर्थ्यात्, अतप्तनूर्न तदामोऽश्नुते तत्कुम्भीपाकमश्नुत इत्येव वक्तव्यत्वात्, तच्छब्दस्यानिर्दिष्टकुम्भीपाकपरत्वायोगाच्च। अतप्तेति पदच्छेदमङ्गीकृत्य व्याख्याऽपि न साधीयसी; यस्य तनूर्नातप्तेत्यनेन यत्सम्बन्ध्यवयवकर्मकतप्तचक्रकरणकदाहाभावः स ब्राह्मणोत्तमस्तत्पदमश्नुत इत्यर्थस्य प्रतीयमानस्य बाधात्, यस्य चक्राङ्कनं नासीत्तत्पुरुषस्य तत्पदेनोपादाने तदवयवकर्मकतादृशदाहाप्रसिद्ध्या तदभावस्य सुतरामप्रसिद्धेः, यत्पदेन चक्राङ्कितोपादाने तदीयावयवकर्मकतादृशदाहस्य प्रसिद्ध्या तदभावस्यान्यत्र प्रसिद्धत्वेऽपि तस्य मोक्षप्राप्तिरित्यर्थप्रसङ्गेन भवतामनिष्टापत्तेः॥ न च–यत्पदेनानङ्कित एवोपादेयः तथाऽपि नाप्रसिद्धिः, तादृशदाहत्वावच्छेदेन तदीयतनुकर्मकत्वाभावबोधादिति–वाच्यम्; रूपपरावृत्त्यनुकूलव्यापाररूपतप्तधात्वर्थघटकरूपपरावृत्तित्वावच्छेदेन तनूरिति द्वितीयान्वार्थतनुवृत्तित्वाभावस्य हि बोधो वाच्यः; स च–बाधितः, सूर्यकिरणादि-

जन्यपरावृत्तेस्सर्वसाधारण्यात्; तप्तचक्रसंयोगात्मकव्यापारजन्यरूपपरावृत्तित्वावच्छेदेन तदभावस्याबाधेऽपि तेन रूपेण रूपपरावृत्तेर्धातोरनुपस्थित्या तथा बोधासम्भवात्। तादृशरूपपरावृत्त्यनुकूलव्यापारलाक्षणिकत्वे च धातोर्लक्षणैव दोषः। एवमतप्तेत्यस्य क्रियापदत्वे यत्तच्छब्दाध्याहारप्रसङ्गः; अतप्ततनूरित्यस्य बह्वृचैरेकपदत्वेन पाठात्; शाखान्तरे पदकाराप्रवृत्तावपि एकत्र निर्णीतश्शास्त्रार्थोऽपरत्रापीति न्यायात् बह्वृचपाठानुरोधेनैकपदत्वस्यैवौचित्याच्च ॥

**यदपि**—स्वतोऽध्ययनसिद्धपदविभागाभावेनान्तरङ्गस्ववाक्यार्थपर्यालोचनया पदव्यवस्थायां सम्भवन्त्यां बहिरङ्गशाखान्तरीयपदाध्ययनानुसारेण पदव्यवस्थाया अयुक्तत्वात्—इति। **तन्न**; पदद्वयकल्पने पूर्वोक्तरीत्या वाक्यार्थस्य बाधेन तदबाधनिर्वाहायाप्यैकपद्यकल्पनाया एव युक्तत्वात्। किं च—प्रत्यक्षशतपथश्रुतिविहितस्य सुदर्शनधारणस्य निषेधासम्भवादनुपपत्तेश्चोक्तार्थोऽनुपपन्नः। तथा हि—किं प्राप्तस्य निषेधः, उताप्राप्तस्य? आद्येऽपि रागाच्छास्त्राद्वा? रागोऽपि किं भोजनादाविव सुखसाधनत्वज्ञानात्, उत ख्यातिलाभाद्यर्थत्वज्ञानात्? नाद्यः—असिद्धेः, तस्य दुःखहेतुतयैवानुभूयमानत्वात्। न द्वितीयः—यद्रूपावच्छिन्नस्य रागात्प्राप्तिस्तद्रूपावच्छिन्नस्य निषेधेऽपि ख्यात्याद्यप्रयोजनकस्य चक्रधारणस्य निषेधायोगात्। नान्त्यः—शास्त्रप्राप्तस्य निषेधासम्भवात्, अन्यथा शास्त्राप्रामाण्यापत्तेः। न चरमः—शशशृङ्गं नास्तीतिवदप्रसक्तनिषेधस्याशक्यत्वादप्रयोजकत्वाच्च॥ न च—उक्तरीत्या स्वात्महननकेशोल्लुञ्छनादेरपि निषेधोऽनुपपन्नस्स्यादिति—वाच्यम्; तत्रासच्छास्त्रात्प्राप्तस्यैव निषेधाङ्गीकारादिति॥

इति पवित्रश्रुतिविचारः

## एवं चरणश्रुतिरपि सुदर्शनधारणे प्रमाणम् ॥

चरणश्रुतेस्तावदयमर्थः ॥ चरणं—परगतिसाधनं सुदर्शनं, चरणशब्दस्य परगतिसाधनत्वावच्छिन्ने योगशक्तेस्सुदर्शनत्वावच्छिन्ने रूढिशक्तेश्च सत्त्वात्, 'चरणं प्राङ्गणे चक्रे' इतिकोशात् । पवित्रं—परिशुद्धिकरं, परिशुद्धिश्च प्रत्यवायाभावप्रकारकभगवत्सङ्कल्पः, विशेष्यतासम्बन्धेन तादृशसङ्कल्पं प्रति स्वाश्रयवह्निसन्तप्तमुद्रासंयुक्तभुजघटितदेहवत्तासम्बन्धेन सुदर्शनस्य हेतुत्वात्तस्य परिशुद्धिकरत्वोपपत्तेः ॥ यद्यपि—पवित्रशब्दस्यापि सुदर्शनत्वावच्छिन्ने रूढिरस्ति, तथाऽपि—विशिष्टवाचकानां पदानां पृथग्विशेष्यवाचकपदसमवधाने विशेषणमात्रपरत्ववत् धर्मद्वयावच्छिन्नवाचकपदानामप्येकधर्मावच्छिन्नवाचकपदान्तरसमवधाने तद्भिन्नधर्मावच्छिन्नमात्रपरत्वस्य 'कुर्यां हरस्यापि पिनाकपाणेः' इत्यादाविव वक्तव्यतया सुदर्शनत्वावच्छिन्नवाचकचरणपदसमभिव्याहारात्पवित्रशब्दस्य योगार्थमात्रपरत्वं बोध्यम् ।

न च—विनिगमनाविरहाच्चरणशब्दस्यैव योगार्थमात्रपरत्वमितिवाच्यम्; 'चरणं नो लोके' इत्याद्युत्तरवाक्यानुरोधेन चरणशब्दस्य विशेष्यवाचकत्वेन विनिगमकसत्त्वात् । विततं—संस्कृतमुद्रात्वव्यापकं, संस्कृतमुद्रासामान्ये समाश्रितानुग्रहार्थं सन्निहितमास्त इति विततपदार्थविषयको बोधः । येन पूतः—यज्जन्यपापाभावप्रकारकभगवत्सङ्कल्पविषयीकृतः ; दुष्कृतानि तरति—दुष्कृतनाशानुकूलव्यापाराश्रयः, तादृशव्यापारश्चक्रधारणरूप एव, नाशानुकूलव्यापारार्थकतरतिधात्वर्थतावच्छेदकनाशरूपफलस्य प्रतियोगितासम्बन्धेन दुष्कृतेषु सत्त्वात्; घटं नाशयेदित्यादौ घटादेरिव तेषां कर्मता बोध्या । न च—प्रति-

योगितासम्बन्धेन पापनाशं प्रति स्वाश्रयभुजघटितदेहावच्छिन्नत्व-कालिकविशेषणत्वोभयसम्बन्धेन तप्तचक्रसंयोगस्य कारणत्वे प्रायश्चित्ता-दीनां वैयर्थ्यमिति-वाच्यम्; स्वसमानकालीनपापानां चक्रधारणेन नाशेऽप्यनन्तरकालीनपापनिरासकतया तेषां सार्थक्यात्। अन्यथा—

"सन्ध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥"

इत्यादिशास्त्रात् सन्ध्यावन्दनादीनामपि पापनिवर्तकत्वोक्त्या तेषां वैयर्थ्यप्रसङ्गस्य दुर्वारतापातात् ॥

यदि च—केषां चिदेव पापानां सन्ध्यावन्दनादिभिर्नाश इति न तद्वैयर्थ्यं; अथवा विधूतपापा इत्यनेन तदकरणप्रयुक्तप्रत्यवाय-परिहार एव विवक्षित इति नोक्तदोषः—इति विभाव्यते। तदा प्रकृतेऽपि तुल्यं; तरति दुष्कृतानीत्यत्र तरतेरभावप्रयोजक-धर्मार्थकत्वेन दुष्कृतानीत्यस्य प्रत्यवायार्थकत्वेन तथैवार्थसम्भवात्, येन पूत इत्यस्य यज्जन्यप्रत्यवायाभावप्रकारकसङ्कल्पविषय इत्यर्थात्। पवित्रेण—परिशुद्धिकरेण, शुद्धेन—निरस्तसमस्तदोषगन्धेन, तेन—सुदर्श-नेन, धृतेनेति शेषः; पूताः वयं, अराति—शत्रुं, भगवत्साक्षात्कार-प्रतिबन्धकमिति यावत्; पाप्मानं—पापं प्रत्यवायं वा, अतितरेम—नाशानुकूलव्यापाराश्रयाः अभावप्रयोजकधर्माश्रया वा, लोकस्य द्वारं—भगवल्लोकप्राप्त्युपायभूतं, अर्चिर्ज्योतिर्महश्शब्दैर्ज्वालाकिरणप्रकाश-भेदस्य विवक्षितत्वान्न पौनरुक्त्यं; भ्राजमानं—शोभमानं, अमृतस्य—परमपुरुषार्थस्य मोक्षस्य, धाराः—अनुभवप्रकारान्, दोहमानं—दुहानं, मुक्तिप्रदमित्यर्थः; लोकस्य द्वारमित्यनेन स्वरूपयोग्यत्वरूपकारणत्वस्य दोहमानमित्यनेन च फलोपधायकत्वस्य च विवक्षणान्न पौनरुक्त्यं; एतादृशं चरणं—सुदर्शनं, नः—अस्मान्, लोके परमपदे, सुधितान्—सुप्रतिष्ठितान्, दधातु करोतु। मोक्षकामो नरस्सुदर्शनधारणं कुर्यात्;

यद्वा पापनिवृत्तिकामस्सुदर्शनधारणं कुर्यादिति विधिरत्न द्रष्टव्य इति प्राञ्चः। अत्र विधिप्रत्ययार्थो न तावदिष्टसाधनत्वं, लोकस्य द्वारमित्यादिभिरेव तदवगमात्; नापि कृतिसाध्यत्वं, धृतेनेत्यध्याहृतपदेन तदवगमात्, नित्यत्वालाभाच्च, किं तु प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वम्। तथा च- मोक्षकामादिनिष्ठतद्धारणाभावस्य प्रत्यवायप्रयोजकत्वलाभान्नित्यतासिद्धिः। न च–मोक्षकामनाया अधिकारिविशेषणत्वे तच्छून्ये तदकरणे प्रत्यवायानुपपत्तिरिति--वाच्यम्; मोक्षकामइत्यस्य सम्भवाभिप्रायेण स्वरूपकीर्तनमात्रपरत्वादधिकारघटकत्वाभावात्, नरत्वस्यैवाधिकारत्वात् ॥

अत्र भास्करः—चरणश्रुतिरपि न सुदर्शनधारणे प्रमाणं, तस्या अपि प्रकरणार्थपर्यालोचनायामर्थान्तरपरत्वावगमात्। तथा हि– 'देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत्' इत्युपक्रम्य, 'तं तपोऽब्रवीत्तं श्रद्धाऽब्रवीत्तं सत्यमब्रवीत्तं मनोऽब्रवीत्तं चरणमब्रवीत्' इत्यादिवाक्यसमुदायेन चातुर्होत्रचयनाङ्गभूताः अपाघाख्याः पञ्चेष्टीर्विधाय "ता वा एताः पञ्च स्वर्गस्य लोकस्य द्वारः, अपाघा अनुवित्तपो नाम, तपः प्रथमां रक्षति, श्रद्धा द्वितीयां, सत्यं तृतीयां, मनश्चतुर्थीं, चरणं पञ्चमीम्" इत्युक्त्वा, 'अनु ह वै स्वर्गं लोकं विन्दति, कामचारोऽस्य स्वर्गे लोके भवति' इत्युपसंहृतम्। तत्र मनसा प्रायपाठान्मनोवदिन्द्रियमेव चरणशब्देन गृह्यते, नान्यत्; 'विशये प्रायदर्शनात्' इत्यत्र प्रायदर्शनस्यैव नियामकत्वोक्तेः। तथा च–चरणं पञ्चमीमिति ब्राह्मणवाक्योपात्तं चरणेन्द्रियमेव तस्मिन् चरणयागे पुरोऽनुवाक्यायाज्यात्वेन विनियुक्ताभ्यां 'चरणं पवित्रं', 'लोकस्य द्वारं' इतिमन्त्राभ्यामभिधीयते मन्त्रब्राह्मणयोरैकार्थ्यात्।
—इति ॥

अत्रोच्यते—चरणशब्दः इन्द्रियत्वव्याप्यधर्मावच्छिन्नतात्पर्यकः, तादृशधर्मावच्छिन्नतात्पर्यकानेकपदसमभिव्याहृतत्वात्, यत्र यादृश-

धर्मावच्छिन्नबाधकानेकपदसमभिव्याहृतत्वं तत्र तादृशधर्मावच्छिन्नवाचकत्वमिति सामान्यव्याप्तेरित्यनुमानात् चरणशब्दस्येन्द्रियपरत्वसाधनं हि भवतामभिप्रेतं; तत्तु न सम्भवति; मनस एकस्येन्द्रियत्वेऽपि श्रद्धादीनामिन्द्रियत्वाभावेनेन्द्रियत्वव्याप्यधर्मावच्छिन्नपरानेकपदसमभिव्याहाररूपतत्प्रायपाठरूपस्य हेतोरसिद्धेः, हेतुकोटावनेकत्वमनिवेश्यासिद्धिवारणेऽपि श्रद्धादिपदे व्यभिचारात्। न च—तद्धर्मावच्छिन्नपरत्वेन सन्दिह्यमानत्वस्य तादृशसन्देहस्वरूपयोग्यत्वरूपस्य तद्धर्मावच्छिन्नवाचकत्वपर्यवसितस्य हेतुविशेषणत्वान्नोक्तव्यभिचारः; अत एव विशये प्रायदर्शनादित्यत्र विशय इत्युक्तमिति—वाच्यम्; वक्ष्यमाणरीत्या मनश्शब्दस्य 'सङ्कर्षणाच्च प्रद्युम्नो मनोभूतस्स उच्यते' इति मोक्षधर्मवचनानुसारेण प्रद्युम्नपरतया इन्द्रियत्वव्याप्यधर्मावच्छिन्नपरपदसमभिव्याहारस्यैवासिद्धेः॥ एतेन—चरणशब्द आचारवचनः, 'रमणीयचरणा रमणीयां योनिमापद्यन्ते' इति श्रुतौ चरणशब्दस्याचारे प्रयोगदर्शनात्; अनुष्ठेयतपश्श्रद्धासाहचर्याच्च; न च—मनसा प्रायपाठबाधः; अनुष्ठेयैकप्रवणसङ्कल्पविकल्पात्मकमनस एव मनश्शब्देनाभिधानात्, एवं च—प्रायपाठानुरोधाच्चरणशब्दस्यानुष्ठेयाचारपरत्वमेव युक्तं, न त्वननुष्ठेयसुदर्शनपरत्वम्—इति निरस्तम्। चरणशब्दस्यानुष्ठेयपरानेकपदसाहचर्यरूपानुष्ठेयप्रायपाठासिद्धेः, अन्त्यतपश्श्रद्धादिशब्दानामनुष्ठेयपरत्वाभावात्, 'तपश्श्रद्धे येह्युपवसन्त्यरण्ये' इत्यत्र तपश्शब्दस्य ब्रह्मपरत्ववदन्त्यतपश्शब्दस्यापि ब्रह्मपरत्वात्;—

"येनेदं विश्वं परिभूतं यदस्ति प्रथमजं देवं हविषा विधेम,
स्वयंभु ब्रह्म परमं तपो यत्, स एव पुत्रस्स पिता स माता,
तपो ह विश्वं प्रथमं सम्बभूव।"—

इत्येतत्प्रकरणगततपोविषयमन्त्रे ब्रह्मलिङ्गदर्शनात् ; 'मेधा श्रद्धा सरस्वती' इति श्रीविष्णुपुराणे, 'अहं श्रद्धा च मेधा च' इति महाभारते च श्रद्धाशब्दस्य लक्ष्मीवाचकत्वदर्शनेनात्रत्यश्रद्धाशब्दस्यापि तत्परत्वात् ;

"श्रद्धया देवो देवत्वमश्नुते, श्रद्धा प्रतिष्ठा लोकस्य देवी, सा नो जुषाणोपयज्ञमागात्, कामवत्साऽमृतं दुहाना, श्रद्धा देवी प्रथमजा ऋतस्य, विश्वस्य भर्त्री जगतः प्रतिष्ठा, तां श्रद्धां हविषा यजामहे, सा नो लोकममृतं दधातु, ईशाना देवी भुवनस्याधिपत्नी ॥"—

इत्येतत्प्रकरणस्थश्रद्धाविषयमन्त्रे लक्ष्मीलिङ्गदर्शनात् ;

"आगात्सत्यं हविरिदं जुषाणं, यस्माद्देवा जज्ञिरे भुवनं च विश्वे, तस्मै विधेम हविषा घृतेन, यथा देवैस्सधमादं मदेम, यस्य प्रतिष्ठोर्वन्तरिक्षं, यस्माद्देवा जज्ञिरे भुवनं च सर्वे "—

इत्यादिमन्त्रलिङ्गात्सत्यशब्दस्यापि ब्रह्मपरत्वात् ; 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्' इति सत्यशब्दस्य छान्दोग्ये ब्रह्मनामत्वाभिधानात् ;

"मनसो वशे सर्वमिदं बभूव, नान्यस्य मनो वशमन्वियाय, भीष्मो हि देवस्सहसस्सहीयान्, स नो जुषाण उपयज्ञमागात्, आकूतीनामधिपतिं चेतसां च, सङ्कल्पजूतिं देवं विपश्चितं, मनो राजानमिह वर्धयन्ते"—

इत्यादिमन्त्रलिङ्गेन मनश्शब्दस्य सङ्कर्षणपरत्वावगमात् । तथा चानुष्ठेयपरशब्दसाहचर्यासिद्धेश्चरणशब्दस्याचारपरत्वं न सम्भवति अन्यथा अर्चिमदित्यादिविशेषणानामनुपपत्तेः ॥

**महाभारते हरिवंशे त्र्यधिकद्विशततमाध्याये—**

"एवं वदत्सु चक्रं वै ज्वालामालासमावृतम् ।
ज्वालामालादिदुष्प्रेक्ष्यमादित्यायुततेजसम् ॥"—

इत्यादिना ज्वालादीनां प्रतिपादितत्वेन सुदर्शनपरत्वे तादृश-विशेषणानामुपपत्तेः ॥ न च–अत्र तपस्सत्यशब्दाभ्यां ब्रह्मणोऽभिधाने यागाभेदानुपपत्तिः, देवताभेदविरहात्, व्रीहियवयोरन्यतरस्य चोदक-प्राप्तस्य द्रव्यस्यापि भेदाभावादिति–वाच्यम्; तपस्सत्यशब्दयोः रूढिशक्यतावच्छेदकस्य ब्रह्मत्वस्यैक्येऽपि योगार्थतावच्छेदकयोर्भेदेन तत्तद्धर्मपर्याप्तावच्छेदकताकयोस्त्यज्यमानहविरुद्देश्यत्वरूपदेवतात्वयो र्भेदेन यागभेदोपपत्तेः; 'इन्द्रियकामो वीर्यकामस्स्यात्तमेतया सर्व-प्रष्ठया याजयेत्' इति विहितायां सर्वप्रष्ठायामिव ब्रह्मत्वस्य विशेष्य-स्यैक्येऽपि रथन्तरेष्वित्यादिविशेषणभेदमात्रेण यागभेददर्शनात् ॥

यत्तु–तपश्श्रद्धादिशब्दानां पुरुषधर्मपरत्वमेवोचितं, न तु भगव-ल्लक्ष्म्यादिरूपधर्मिपरत्वं; अस्मिन्प्रकरणे तपश्श्रद्धासत्यमनश्चरणदेवता-केषु यागेषु कृतेषु–"अथ ते सत्यं तपो भविष्यति, अथ ते सत्या श्रद्धा भविष्यति, अथ ते सत्यं सत्यं भविष्यति, अथ ते सत्यं मनो भविष्यति, अथ ते सत्यं चरणं भविष्यति"–इति वाक्यैः प्रजा-पतिसम्बन्धितपःप्रभृतीनां यथायोगं सत्यत्वादिरूपं फलं प्रतिपाद्यते; तत्तद्यागे कृते 'ततो वै तस्य सत्यं तपोऽभवत्' इत्यादिभिस्तस्य तपस्सत्यत्वादिरूपं फलं जातमिति परकृतिन्यायेनोक्त्वा प्ररोचनया तत्तद्यष्टुरपि तत्तत्फलसम्बन्धः 'सत्यं ह वाऽस्य तपो भवति, अनु स्वर्गं लोकं विन्दति, य एतेन हविषा यजते' इति प्रतिपाद्यते। तथा च–तपश्श्रद्धादिशब्दानां भगवदादिपरत्वे भगवत्प्रभृतीनां सत्यत्वादेः प्रजापतिसम्बन्धयष्टृसम्बन्धयोश्चासम्भवात्पुरुषधर्मपरत्व-मेव वक्तव्यम्–इति ॥ तन्न। पुरुषधर्मपरत्वे 'तं तपोऽब्रवीत्, तं श्रद्धा ऽब्रवीत्' इत्यादेरनुपपत्तेः। न च–सत्यत्वं फलजनकत्वमेव, अत एव 'अनु स्वर्गं लोकं वेत्स्यसि, अनु स्वर्गं लोकं विन्दति' इति सत्यत्वाविर्भावानन्तरं स्वर्गलोकप्राप्तिश्श्रूयते; षष्ठ्यर्थसम्बन्धश्च तपो-

ऽभिष्ठानदेवतारूपतपःपदार्थैकदेशतपआदावन्वेतीति नानुपपत्तिरिति—वाच्यं ; सिद्धान्तेऽपि षष्ठ्यर्थसम्बन्धस्य सत्यपदार्थघटकफल एवान्वयः ; न तु व्यवहिततपश्शब्दादिप्रतिपन्नार्थैरित्यङ्गीकारेणानुपपत्तिविरहात् ; उक्ताभिप्रायेणैव ..नुष्कयज्वना त्रिवेदीभाष्यकारेण चरणशब्दस्सुदर्शनाभिधायीति व्याख्यानात् ; भट्टभास्करेण च ज्ञानयज्ञे चरणशब्दो देवताविशेषपर इत्यभिधानाच्च ॥

यदपि—चरगतिभक्षणयोरिति धातोः करणवाचिल्युडन्तश्चरणशब्दस्सोमसूर्याग्न्यादितेजसां 'देव सवितः प्रसुव', 'यज्ञं प्रसुव यज्ञपतिं', 'अग्ने नय सुपथा राये अस्मान्', 'इमं नो देवसवितर्यज्ञ प्रसुव'—इत्यादिमन्त्रप्रतिपन्नसदाचारप्रवर्तकतया सुगतिसाधनतया वा तमसि सञ्चरतः स्वलनदर्शनाद..तसञ्चरणहेतुतया वा तेषामग्न्यादीनामन्यतममभिधत्ते .... ..दाऽपि परिशुद्धिकरत्वेन प्रवृत्तिनिमित्तेन तेषामन्यतमपराम.. —इति । तदपि न ; योगाद्रूढेर्बलीयस्त्वस्य रथकाराधिकरणसिद्धतया योगेन चरणशब्दस्य सोमसूर्यादिपरत्वापेक्षया रूढ्या सुदर्शनपरत्वस्य युक्तत्वात् ॥ न च—सुदर्शनस्य रूढ्यर्थत्वेऽपि तस्य वाक्यार्थे समन्वयाभावात्तत्समन्वयनिर्वाहाय रूढ्यर्थप्रतिकृतिलोहमुद्रायां लक्षणा वक्तव्या, तथा च लक्ष्यार्थबाधाङ्गीकारापेक्षया योगार्थस्य बोधोपगम एव युक्त इति—वाच्यम् ; भगवच्छास्त्रादौ सुदर्शनधारणप्रकरणे तदावाहनादिविधानेन स्वाश्रयमुद्रासंयोगसम्बन्धेन धृतत्वस्य तत्र सम्भवे वाक्यार्थे समन्वयसम्भवेन लक्षणानावश्यकत्वात्, लक्षणायामपि योगार्थबोधाङ्गीकारापेक्षया लक्ष्यार्थबोधस्यैव युक्तत्वात्, योगाद्रूढिपूर्वकलक्षणाया बलीयस्त्वात् । अत एवोदाहरिष्यमाणप्रोद्गालाधिकरणे तथा सिद्धान्तितम् ॥

यत्तु—चरणपवित्रादिशब्दानां सुदर्शने क्वापि वैदिकप्रयोगस्य व्याकरणानुमतेर्वाऽनुपलम्भाद्रूढिर्न सिध्यति—इति । तन्न ; 'पवित्र

मित्यग्निः, प्र ते विष्णो अब्जचक्रे पवित्रे' इत्यादिवैदिकप्रयोगस्य दर्शनात्; पुवस्संज्ञायां कर्तरि चर्षिदेवतयोरिति व्याकरणेन देवतायां पवित्रशब्दव्युत्पादनेन देवताविशेषे सुदर्शने पवित्रशब्दशक्ते-र्व्याकरणानुमतत्वात्; भूसत्तायां, वर्तमाने लट्—इत्यादिव्याकरणानां शक्तिग्राहकत्वदर्शनेन व्याकरणस्यापि तत्सम्भवात् ;

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥"

इतिप्राचीनकारिकायां व्याकरणस्यापि शक्तिग्राहकमध्ये परिगण-नात्; 'चरणं प्राङ्गणे चक्रे' इतिकोशेन, 'पवित्रं चरणं चक्रं' इति श्री-शास्त्रेण च चरणशब्दस्यापि सुदर्शने शक्तिसिद्धेः वैदिकप्रयोगाभावेऽपि शक्तिग्राहकंप्रमाणबलाच्छक्तिसिद्धेरप्रत्यूहत्वाच्च। अन्यथा हर्यादि-नानार्थकशब्दानामपि वैदिकप्रयोगाविषयेष्वर्थेषु शक्तचपलापापत्तेः। किं च भगवच्छास्त्रे **परमेश्वरसंहितायां**—

"दक्षिणे तु भुजे विप्र इति प्राक्रांस्थितेन तु ।
निचिक्षेप सुषणमिति वह्निगतेन तु ॥
प्र ते विष्णो अब्जचक्रे इति याम्यगतेन तु ।
एभिर्वयमुरुक्रमस्येति यातुधानीगतेन तु ॥
धृतोर्ध्वपुण्ड्रःकृतचक्रेति पश्चिमगतेन तु ।
पवित्रमित्यग्निरिति ततो वायुगतेन तु ॥
चरणं पवित्रं विततमिति सोमगतेन तु ।
लोकस्य द्वारमर्चिमत्पवित्रमिति रुद्रगतेन तु ॥
एतैर्मन्त्रैस्तु चाष्टाभिरन्यैस्सौदर्शनैस्तथा ।
संस्नाप्य मन्त्रकुम्भेन शुद्धोदैरभिषिच्य च ॥"

इत्यमीषां मन्त्राणां सौदर्शनत्वाभिधानेन चरणश्रुतेरपि सौदर्शन-त्वावगमात् ,

"चरणं पवित्रं विततं पुराणं वाङ्मयं शुभम् ।
तेन चक्रेण सन्तप्तास्तरेयुः पातकाम्बुधिम् ॥"

इति पाद्मोपबृंहणबलाच्च चरणश्रुतेस्सौदर्शनत्वसिद्धिः ॥

एतेन—उक्तश्रुतौ येन पूत इत्यत्र येनस्मृतेनार्चितेनेत्यादिबह्वर्थसम्भवान्नियमतो धृतपदाध्याहारे प्रमाणाभावान्न चरणश्रुतेस्सुदर्शनधारणपरत्वसिद्धिः—इति निरस्तम् । चरणश्रुतिसमानार्थके 'देवासः पितरो येन विधृतेन बाहुना सुदर्शनेन प्रयतास्स्वर्गं लोकमायन्' इति शतपथवाक्ये पूतार्थकप्रयतपदयुक्ते यच्छब्दयुक्ते विधृतपदस्य श्रवणात्तदनुरोधेन धृतेनेत्यध्याहारस्यैव युक्तत्वात्; प्रयतौ पूतसंस्कृताविति वैजयन्त्युक्त्या प्रयतशब्दस्य पूतार्थकत्वसिद्धेः उदाहृतपाद्मवचनबलेन तच्छ्रुतेस्सुदर्शनधारणपरत्वावगमाच्च । न च—एतादृशोपबृंहणानां लिङ्गाभासमूलतयाऽनाश्वसनीयत्वात्तद्धारणपरत्वं चरणश्रुतेरनुपपन्नं, पुराणादिषु परप्रलोभनार्थानां शब्दसाम्यमात्रोपजीवनेन प्रवृत्तानामुपबृंहणानां बहूनां दर्शनादिति—वाच्यम्; कस्य चिदुपबृंहणस्याप्रामाणिकत्वमात्रेण सर्वेषामुपबृंहणानां तथात्वे 'स प्रजापतिरात्मनो वपामुदक्खिदत्' इत्याद्यर्थवादानां स्वार्थेऽप्रामाण्यदर्शनादर्थवादसामान्यस्य तथात्वापत्तेः; एवं 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतेरप्रामाण्यदर्शनात्स्मृतिमात्रस्याप्रामाण्यापत्तेः; शुक्ताविदं रजतमिति प्रत्यक्षस्य ह्रदो वह्निमानित्यनुमितेश्चाप्रामाण्यदर्शनात्प्रत्यक्षानुमित्योरप्यप्रामाण्यापत्तेः। न च—प्रमाणान्तरबाधितविषयकाणां प्रत्यक्षादीनामप्रामाण्येऽप्यबाधितविषयाणां प्रामाण्यापलापो न युक्त इति—वाच्यम्; एवं सत्युपबृंहणानामपि प्रमाणान्तराविरुद्धार्थकानामप्रामाण्यायोगादुक्तोपबृंहणबलेन चरणश्रुतेस्सुदर्शनधारणपरत्वसिद्धेरप्रत्यूहत्वात् ॥

**यदपि**—न ह्यनेन प्रकारेणायं मन्त्रो योजनीय इति काचन श्रुतिरस्ति, येनास्योपबृंहणस्य श्रुतिमूलत्वं कल्प्येत, तथा चेतादृशपुराणवचनानां मन्त्रलिङ्गमूलतया स्वातन्त्र्यायोगादप्रयोजकत्वे स्थिते चरणमन्त्रस्य मन्त्रलिङ्गबलेन तप्तलिङ्गमुद्राधारणपरत्वमव्याहतप्रसरम् ॥ तथा हि—चरत्यनेनेति चरणं, करणे ल्युट्, सर्वेषां स्वस्वानुरूपचरणसाधनमित्यर्थः, पवित्रं लिङ्गं—इत्यादि ॥ **तदपि न**; तादृशप्रत्यक्षश्रुत्यभावेऽप्यनुमितश्रुतिमूलत्वसम्भवात्, पुराणकर्तॄणां स्वयोगमहिमसाक्षात्कृतवेदार्थतया तन्मूलत्वसम्भवात्, मन्त्रलिङ्गमूलत्वेऽपि तदुन्नीतसाधकबाधकाभावयोरस्माभिरल्पज्ञैरवगन्तुमशक्यतया तदुन्नीतार्थत्यागायोगाच्चरणपवित्रशब्दयोर्लिङ्गे रूढ्यभावेन तच्छ्रुतेर्लिङ्गमुद्राधारणपरत्वाभावाच्च ॥ न च—'ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः, पवित्रं तद्धि विख्यातं' इतिशैवपुराणवचनात्पवित्रशब्दस्य लिङ्गे रूढिरस्तीति—वाच्यम्; शैवपुराणस्य तामसतया तदुक्तार्थस्याग्राह्यत्वात् ॥

**यदाह व्यासः**—

"सात्त्विकानि पुराणानि ग्राह्याणि द्विजसत्तमैः ।
तेषूक्तानाचरेद्धर्मान् श्रुतिमूलानि तानि वै ॥
राजसानि पुराणानि तामसानि तथैव च ।
न ग्राह्याणि द्विजश्रेष्ठैरत्र मे नास्ति संशयः ॥" —इति ॥

**पाद्मे** पुराणविभागप्रकरणे—

"सात्त्विका मोक्षदाः प्रोक्ता राजसास्स्वर्गदाश्शुभाः ।
तथैव तामसा देवि निरयप्राप्तिहेतवः ॥
सात्त्विकानेव गृह्णीयान्मोक्षार्थी नैव राजसान् ।
स्वर्गदांस्तामसान् देवि तथैव निरयप्रदान् ॥" —इति ॥

तस्माच्चरणश्रुतेस्सुदर्शनधारणपरत्वमव्याहतमिति दिक् ॥

**इति चरणश्रुतिविचारः ॥**

## अथ चमूषच्छ्रुतिविचारः ॥

---

ऋग्वि स्वाम्नि च श्रूयते–"चमूषच्छ्येनश्शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत्, अपामूर्मिं सचमानस्समुद्रं तुरीयं धाम महिषो विवक्ति" इति ॥

अयमर्थः । अपामूर्मिं—भूतानां विकारभूतं, अप्छब्दस्य भूतत्वावच्छिन्ने लाक्षणिकत्वात् । तद्विकारत्वं च–तदभिन्नत्वे सति तत्कार्यत्वं, शरीरत्वावस्थाविशिष्टस्य भूताभिन्नत्वे सति भूतकार्यत्वात् । समुद्रं–संसारसागरं, शरीरमिति यावत् । सचमानः—अपृथक्सिद्ध्यात्मकसंयोगानुकूलव्यापाराश्रयः । 'षच समवाये' इति धातुपाठेन तद्धातोरुक्तार्थकत्वावसायात्, द्रप्सः-ईश्वरांशभूतो जीवः; जीवस्य तदंशत्वं चापृथक्सिद्धिसम्बन्धेनेश्वरविशेषणत्वं, विशिष्टवस्तुनि विशेषणांशोऽयं विशेष्यांशोऽयमिति विशेषणस्यांशत्वव्यवहारात् । गाः विन्दतीति गोविन्दः, तृज्वद्भावश्छान्दसः, गोविन्दुरिति षष्ठी । एतेन—गोविन्दस्य तृज्वद्भावाश्रयणे तृजन्तस्य विदेर्यद्रूपं तद्रूपस्यैव प्राप्तेर्गोविदितुरिति रूपं प्राप्नोतीति-निरस्तं; छान्दसत्वेन सर्वदोषपरिहारात् । न च–स्वेच्छया छान्दसत्वाश्रयणमयुक्तमिति–वाच्यम्;

"गोविन्दस्यायुधान्यङ्गे बिभ्रत् सुश्रोणि वै द्विजः ।
तुरीयं धाम तद्विष्णोर्महिष्ठःप्राप्नुयादिति ॥'
चमूषच्छ्येनश्शकुनो विभृत्वेति ऋगब्रवीत् ॥"

इति स्कान्दवचनेनास्याः श्रुतेस्सुदर्शनपरतायाः गोविन्दुरित्यस्य षष्ठ्यन्ततायाश्च प्रतीतेः । गोविन्दस्येति षष्ठ्यर्थो न स्वत्वं, पदार्थसामान्यस्य भगवत्स्वामिकत्वेन भगवन्निरूपितस्वत्वाश्रयत्वस्य

शिवाद्यायुधसाधारण्येनाव्यावर्तकत्वापत्तेः ; किं तु नित्यसङ्कल्पाधीननित्यविग्रहवत्त्वं, तच्च च शूलाद्यायुधसाधारण्यविरहात्। आयुधानि-चक्रशङ्खगदाखड्गशार्ङ्गरूपाणि पञ्चायुधानि । न च-शत्रुहिंसानुकूलव्यापाराश्रयस्यैवायुधत्वाच्छङ्खस्य तत्त्वमसम्भवीति--वाच्यम्, शत्रुनाशानुकूलशब्दाश्रयत्वेन तस्याप्यायुधत्वात्। बिभ्रत्--सम्बन्धप्रयोजकव्यापाराश्रयः, स च सम्बन्धः स्वसंयुक्तभुजादिघटितदेहवत्त्वमेव। चमूषदित्यादिना फलनिर्देशः। न च--चक्रधारणस्याङ्गत्वेन फलवत्त्वं न सम्भवति, फलवत्सन्निधावफलं तदङ्गमिति न्यायादिति-वाच्यम्; अङ्गिभूतोपासनद्वारा तस्यापि फलवत्त्वसम्भवात् । अत्र चमूशब्देन नित्यसूरिपरिषद्विवक्षिता, तस्या सीदतीति चमूषत्, नित्यसूरिभिरनुगम्यमान इति यावत्। श्येन --प्रशस्ततमभगवत्समीपदेशसंयोगानुकूलव्यापाराश्रयः, शंसनीयं गच्छतीति श्येन इति निरुक्तात्। शकुनः--आत्मानं संसारादुद्धर्तुं शक्त इत्यर्थः, शक्नोत्यात्मानमुन्नेतुमिति निरुक्तात्; भक्तिप्रपत्त्यन्यतरजन्यसंसारनिवृत्त्युपधायकभगवत्प्रसादविषय इति फलितार्थः; शक्ते. प्रकृते भगवत्प्रसादरूपत्वात्। बिभृत्वा--भरणसमर्थः, स्वसम्बन्धिनामपि भरणसमर्थ इति यावत्। तादृशसामर्थ्यं च--मुक्त्युपधायकस्वसमाश्रयणको भूयादित्याकारकप्रसादविशेषविषयत्वम्। एवंविधस्सन्, तुरीयं--श्रेष्ठं, धाम-स्थानं, परमपदमिति यावत्। महिषः--महनीयस्सन्, विवक्ति--प्राप्नोति ॥ --इत्यर्थः ॥

अत्र--गोविन्दुरायुधानि बिभ्रत् शकुनो बिभृत्वा चमूषच्छ्येनो महिषस्तुरीयं धाम विवक्तीति योजनाङ्गीकारात् धनवान् सुखीत्यादिवदुद्देश्यतावच्छेदकस्य विधेये प्रयोज्यतासम्बन्धेन भानाद्भगवदायुधधारणस्य शकुनपदार्थं प्रति, तस्य च बिभ्रत्पदार्थं प्रति. तदुभयस्य च चमूषत्त्वविशिष्टश्येनत्वं प्रति, तस्य च महिषत्वविशिष्टतुरीय-

धामप्राप्तिं प्रति, प्रयोजकत्वं लभ्यते। तथा च चक्रधारणस्य स्वज-न्यप्रसादद्वारा मोक्षोपधायकभक्तिप्रपत्त्यन्यतरजन्यप्रसादे, तादृशप्रसा-दस्य च सम्बन्धिमोक्षप्रयोजकप्रसादान्तरे, तादृशप्रसादद्वयस्य च नित्यपरिपन्थिपदनुगम्यमानत्वविशिष्टार्चिरादिगमनरूपे चमूषच्छ्येन इत्यस्यार्थे, तादृशगमनस्य च 'तं ब्रह्मालङ्कारेणालङ्कुर्वन्ति' इति श्रुति-सिद्धब्रह्मालङ्कारविशिष्टभगवत्समीपगमनरूपे 'महिषस्तुरीयं धाम प्राप्नोति' इत्यस्यार्थे प्रयोजकत्वलाभादलौकिकश्रेयस्साधनत्वरूपं धर्मत्वं चक्रधारणस्योक्तश्रुत्या सिध्यति ॥

अत्र भास्करः—

चमूषन्मन्त्रस्यापि न चक्रधारणपरत्वं, तस्य सोमप्रशंसापरत्वात्; तथा चानुक्रम्यते—'प्रसेनानीश्चतुर्विंशतिर्दैवोदासिः प्रतर्दनः'—इति। तस्यायमर्थः प्रसेनानीरिति चतुर्विंशत्यृचं सूक्तं दिवोदासपुत्रस्य प्रत-र्दनस्य राजर्षेरिदं त्रैष्टुभं पवमानसोमदेवताकमिति। तथा चायमर्थः—चमूषत्—चमन्ति भक्षयन्त्यस्मिन्निति चम्वः चमसाः, तेषु सीदन्; श्येनः—शंसनीयः, शकुनः शक्तः, विभृत्वा—पात्रेषु विभरणशीलः, गोविन्दुः—गवां लम्भकः, विन्दुरिच्छुरित्युप्रत्ययान्तो निपातितः; द्रप्सः—द्रवण-शीलः, आयुधानि—स्फ्यकपालादीनि, "स्फ्यश्च कपालानि चाग्नि-होत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च दृषच्चो-पला चैतानि वै दश यज्ञायुधानि" इति श्रुतौ स्फ्यादीनामायुध-शब्देनोपादानात्; बिभ्रत्—धारयन्, अपामुदकानां, ऊर्मिं प्रेरकं समु-द्रमिति यावत्, अन्तरिक्षलोकं वा। सचमानः, महिषो महान्। एवंविधस्सोमः, तुरीयं धाम—पृथिव्यन्तरिक्षद्युलोकापेक्षया तुरीयं चान्द्रमसस्थानं, चान्द्रमसलोकस्य तुरीयत्वं च—'यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणाम्' इत्यादिभिर्मन्त्रैरव-गम्यते। एतादृशस्थानं विवक्ति—सेवते॥ —इति॥

तदसत्। यस्य मन्त्रस्य यद्देवताकत्वेनाभिधीयमानत्वं, तस्य तत्परत्वमिति न व्याप्तिः। इन्द्रदेवताकत्वेनाभिधीयमाने 'निवेशनस्संगमनो वसूनाम्' इतिमन्त्रे गार्हपत्यपरे इन्द्रपरत्वाभावेन व्यभिचारात्, ऐन्द्र्या गार्हपत्यमिति विनियोगेन तस्य मन्त्रस्य गार्हपत्यपरत्वस्य तार्तीयीकाधिकरणसिद्धत्वात्; किं तु यस्य मन्त्रस्य यद्देवताकत्वेनाभिधीयमानत्वे सति यदुद्देश्यककर्मकरणतया विनियुक्तत्वं, तस्य मन्त्रस्य तत्परत्वमित्येव व्याप्तिः, "पाठयेद्बह्वृचान्पश्चाच्छाकुनं सूक्तमेव च" इति पारमेश्वरसंहितायां चक्रप्रतिष्ठायां विनियुक्तस्य शाकुनसूक्तस्य सुदर्शनपरत्वाभावेन व्यभिचारवारणाय सत्यन्तम्, तथा चमूषन्मन्त्रस्य सोमदेवताकत्वेऽपि तदुद्देश्यककर्मविनियुक्तत्वाभावान्न सोमपरत्वसम्भवः। न च—सोमदेवताकत्वाभिधानं तत्कर्मणि विनियोगार्थमेवेति तद्देवताकत्वे सति तत्कर्मविनियुक्तत्वसत्त्वात्सोमपरत्वं दुर्वारमिति—वाच्यम्; तथासत्युक्तव्याप्तिबलात्सोमपरत्ववत्सुदर्शनपरत्वस्यापि दुर्वारत्वात्; तथा हि—भगवच्छास्त्रे पारमेश्वरसंहितायां चक्रप्रतिष्ठां प्रस्तुत्योक्तम्—

"तत्तत्स्थापनकाले तु तत्तत्संज्ञान् मनून् जपेत्।
विद्यां गदामित्याद्यं यत्पाठयेत्तद्विदो जनान्॥
चमूषच्छ्येन इति च प्र ते विष्णो इति त्वृचौ।
पाठयेद्बह्वृचान्पश्चाच्छाकुनं सूक्तमेव च॥
धृतोर्ध्वपुण्ड्रः कृतचक्रेति मन्त्रं कठान् परम्।
पवित्रं ते विततमित्येतन्मन्त्रं यजुर्मयान्॥
क्षुरो हरेति सामज्ञान् पवित्रमित्यग्निरित्यपि।
एभिर्वयमुरुक्रमस्येत्याथर्वणविदो जनान्॥
एवं संस्थाप्य विधिवन्नवभिः कलशैस्ततः।
स्नापयेद्ब्रह्मसूक्तस्थैर्मन्त्रैरष्टाभिरेव च॥" —इति॥

अत्र—'तत्तत्स्थापनकाले तु तत्तत्संज्ञान् मनून् जपेत्' इत्यत्र मनूनित्यस्य मनुपदप्रतिपाद्यानित्यर्थः; तत्तत्संज्ञानित्यस्य तत्तत्संज्ञाव्यवहितोत्तरवृत्तीनित्यर्थः; तेषां संज्ञा येषां त इत्यनेनाव्यवहितोत्तरत्वसम्बन्धेन सुदर्शनादिसंज्ञाविशिष्टस्य लाभात्; तस्य च मनुपदार्थैकदेशे मनुपदेऽन्वयः, 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यादिवत्। न च—केवलमनुपदप्रतिपाद्यत्वस्य तादृशमनुपदे सुदर्शनसंज्ञाव्यवहितोत्तरत्वस्य लाभेऽपि सुदर्शनपदोत्तरत्वविशिष्टं यन्मनुपदं सुदर्शनमनुरिति समुदायरूपं तत्प्रतिपाद्यत्वस्यालाभादिति—वाच्यम्; मनूनित्यस्य मनुपदे प्रतिपाद्यत्वे च खण्डशो लक्षणायास्स्वीकारात्; सुदर्शनपदोत्तरत्वस्य प्रथमतो मनुपदेऽन्वयं स्वीकृत्य तादृशमनुपदस्य प्रतिपाद्यत्वरूपापरपदार्थेऽन्वयाङ्गीकारेण समुदायप्रतिपाद्यत्वस्य लाभात्। ततश्च सुदर्शनदेवताकत्वेनाभिधीयमानत्वे सति तदुद्देश्यककर्मणि विनियुक्तत्वाच्च चमूपन्मन्त्रस्य तद्धारणपरत्वसिद्धिः; सुदर्शनधारणविषयकमन्त्रान्तरविनियोगावसरे विनियुज्यमानत्वेन प्रायदर्शनस्यापि सत्त्वाच्च। न च—अस्य मन्त्रस्य सुदर्शनधारणपरत्वे गोविन्दुरित्यत्र छान्दसत्वकल्पनं दोष इति—वाच्यम्; भगवच्छास्त्रस्कान्दपुराणाद्यनुरोधेन छान्दसत्वकल्पनेन तस्य दोषताविरहात्; अन्यथा अदितिः पाशानित्यत्र बहुवचनस्य छान्दसताया नवमाधिकरणसिद्धाया अपि दोषताप्रसङ्गात्। एवं प्रशसाऽस्यभिधानमित्यधिकरणे—'प्रशसा बाहू कृणुतात्' इति श्रुतौ प्रशसेति तृतीयान्तमसिवाचकं, असिना बाहूच्छेत्त्व्याविंत्यर्थः—इति पूर्वपक्षं प्रापय्य; प्रशसेति द्वितीयाद्विवचनस्याकारादेशे छान्दसे तकारलोपे च कृते प्रशंसावचनोऽयमिति प्रशस्तौ बाहू कृणुतादविकलावित्यर्थ इति सिद्धान्तस्याप्यसङ्गतिप्रसङ्गः; भवन्मते सोमपरत्वेऽपि सोमपदाध्याहारस्य दोषत्वापत्तिश्च ॥

**यत्तु**—'चमूषच्छ्येन इति प्र ते विष्णो इति त्वृचौ', 'पाठये-त्तद्विदो जनान्'—इति चक्रप्रतिष्ठापकाचार्यादन्येषामेव तत्तन्मन्त्र-विदां केवलमुच्चारणमात्रविधानात् करणमन्त्रत्वाभावात्; 'तत्तत्संज्ञा-न्मनून् जपेत्' इति जपशब्दसमभिव्याहारेण जपमन्त्रतासिद्धेश्चमूष-च्छ्येन इत्यादीनामदृष्टार्थतया समवेतार्थाभिधायित्वाभावान्न चक्र-धारणपरत्वं कल्पनीयम्; जपमन्त्राणामदृष्टार्थतायाः पूर्वतन्त्रसिद्धत्वात्; अन्यथाऽत्रैव जपार्थतया विनियुक्तस्य शाकुनसूक्तस्यापि सुदर्शन-परत्वप्रसङ्गः— इति ॥

**तन्न**—तदुद्देश्यककर्मणि जपार्थतया यद्विनियक्तत्वं, यच्च करण-तया विनियुक्तत्वं, तदुभयसाधारणस्य तदुद्देश्यककर्मणि विनियुक्त-त्वस्य तद्देवताकत्वविशिष्टस्य तत्परत्वव्याप्यत्वाङ्गीकारेणास्य मन्त्रस्य तत्परत्वावश्यम्भावात् । व्याप्यकोटौ तद्देवताकत्ववैशिष्ट्यनिवेशाच्च शाकुनसूक्ते न व्यभिचारः; पूर्वतन्त्रेऽपि जपार्थतया विनियुक्तानामपि मन्त्राणां दृष्टार्थत्वासम्भव एवादृष्टार्थत्वस्याङ्गीकारात्, चमूषन्मन्त्रे तत्परत्वरूपदृष्टार्थत्वस्य सम्भवेन तत्परित्यागायोगात्, 'गोविन्दस्या-युधान्यङ्गे' इति स्कान्दोपबृंहणबलेन सुदर्शनधारणपरत्वस्यावर्जनी-यत्वाच्च ॥

**यदपि**—चमूषच्छ्येन इत्यस्यार्जवेनैव चक्रप्रतिष्ठाविनियोगानु-सारिसुदर्शनपरत्वसम्भवे किमिति सुदर्शनधारणपरत्वमाश्रियते? तथा हि—चमूः असुरचमूः, सीदतीति चमूषत्, हिनस्तीति यावत्; श्येनः—शंसनीयः, यतोऽयं शकुनः शक्तः; अत एव लोककण्टको-द्धरणेन; भिभृत्वा—जगद्भरणशीलः, जगद्रक्षक इति यावत्; क्वनिबन्तो भृञ्धातुनिष्पन्नोऽयं शब्दः। गोविन्दुः—गोविन्दस्य; द्रप्सः—अंशभूतः, सुदर्शनस्य विष्णवंशत्वं च पुराणादिसिद्धम् । एवम्भूतसुदर्शनदेवः आयुधानि—स्वानि षोडशायुधानि, बिभ्रत्; अपामूर्मिं- रसभूतं, ऊर्मि-

मन्तमेवैनं करोतीत्यादिवैदिकप्रयोगात् ; एवम्भूतं, समुद्रं—क्षीरार्णव-मिति यावत्; सचमानः—भजमानः, श्वेतद्वीपनिवासीति यावत्; न केवलं श्वेतद्वीपे वर्तते, किन्तु विष्णोस्तुरीयं धाम; महिषः—महनीयो भूत्वा; विवक्ति—विशेषेण वर्तत इति ॥ चक्रधारणपरत्वे तु चमूषदित्यादिपद-निर्युक्तगुणयुक्तस्सन् तुरीयं धाम विवक्तीत्यर्थाङ्गीकारात् भाविवृत्त्या-श्रयणदोषप्रसङ्गः—इति ॥

तदपि न—प्रवृत्तिनिवृत्त्यन्यतरप्रयोजनकस्य वेदात्मकशास्त्र-स्येष्टसाधनत्वादिप्रतिपादकत्वस्य पूर्वोक्तरीत्या सम्भवे तत्त्यागेन वैय-र्थ्यापरपर्यायस्यानुवादरूपार्थपरत्वस्य कल्पनानौचित्यात्। एवं भव-न्मते विशेष्यवाचकस्य सुदर्शनपदस्याभावेन तदध्याहारस्य कल्पनीय-त्वात्। अस्माकं च विनैवाध्याहारं 'गोविन्दुरायुधानि' इति श्रुत-पदैरेव सुदर्शनप्रकाशोपपत्तेरध्याहारकल्पनाविरहात्। अत एव 'प्रति तिष्ठति ह वा य एता रात्रीरुपयन्ति' इत्यर्थवादश्रुतप्रतिष्ठारूपफलेनैव रात्रिनामकानां द्वादशाहादूर्ध्वभाविनां त्रयोदशरात्रचतुर्दशरात्रप्रभृती-नां सर्वेषां सत्रविशेषाणां फलाकाङ्क्षानिवृत्तेरत्यन्ताश्रुतत्वाद्विश्वजि-न्न्यायप्राप्तमपि स्वर्गफलकत्वमयुक्तमिति **रात्रिसत्राधिकरणे** प्रप-ञ्चितम्॥ एवं पूर्वोक्तप्रायदर्शनात् 'गोविन्दस्यायुधान्यङ्गे' इति स्कान्दो-पबृंहणबलाच्च तद्धारणपरत्वं युक्तम् ॥

यत्तु—भाविवृत्त्याश्रयणं दोषः—इति। तन्न—वर्तमानकालार्थकलट्-प्रत्ययस्य भविष्यत्काललाक्षणिकत्वरूपस्य भाविवृत्त्याश्रयणस्याभावात्, प्रकृतशब्दप्रयोगाधिकरणकालवृत्तित्वरूपलडर्थस्य परमपदप्राप्तावबा-धेन लटा वर्तमानकालस्यैव बोधनात्, 'तुरीयं धाम महिषो विवक्ति' इति वाक्यस्य सर्वदा सत्त्वेन मोक्षप्राप्तिकालेऽपि सत्त्वात्। न च—एतत्कालीनवाक्यस्य बाधितार्थकत्वापत्तिर्दुर्वारा, एतद्वाक्याधिकरण-कालवृत्तित्वस्य परमपदप्राप्तौ बाधादिति—वाच्यम्; एतत्कालेऽपि कस्य

चित्सुदर्शनधारिणो मुक्तिसम्भवेनाबाधात्। न च–यदा यदा तद्वाक्यप्रयोगः तदा तदा कस्य चिन्मुक्तिरित्यत्र प्रमाणाभावेन यदा सुदर्शनधारिणः कस्यापि न मुक्तिः, तत्काले उच्चरितस्य तद्वाक्यस्य बाधितार्थकत्वापत्तिरिति–वाच्यम् ; तथा सति भवन्मतेऽपि बाधस्य दुर्वारत्वात्; यदा यदा एतद्वाक्यप्रयोगस्तदा तदा सुदर्शनस्य परमपदं प्रति गमनमित्यत्र मानाभावात्। तस्माल्लडर्थस्याविवक्षैव युक्ता॥

**यदपि**—गोविन्दुशब्दस्यांशवाचिना प्रतीतिपर्यवसानाय नित्यं प्रतिसम्बन्ध्यपेक्षिणा सन्निहितेन द्रप्सशब्देनान्वये सम्भवति न व्यवहितपर्यवसितप्रतीतिकायुधशब्देनान्वयो युक्तः—**इति** ॥ **तदपि न**। हिंसाप्रयोजकव्यापाराश्रयत्वरूपायुधपदशक्यतावच्छेदकघटकहिंसायाः कर्तृसापेक्षत्वेनायुधपदस्यापि ससम्बन्धिशब्दतया पर्यवसितप्रतीतिकत्वाभावात्; 'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः'—इति वार्त्तिकोक्तरीत्या व्यवधानस्याप्रयोजकत्वात्; 'गोविन्दस्यायुधान्यङ्के' इत्युपबृंहणेन गोविन्दुरित्यस्यायुधशब्देनान्वयप्रदर्शनाच्च। तस्मादुक्तश्रुतेर्भगवच्छास्त्रबलात्सुदर्शनधारणपरत्वसिद्धिरिति ॥

**अत्र यदुक्तं**—

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकं।
इति विद्याश्चतस्रोऽतो विद्या ह्यष्टादश स्मृताः ॥"—

इत्यादिना पञ्चरात्रस्य विद्यास्थानेषु परिगणनाभावान्न पञ्चरात्रविनियोगबलाच्चमूषदित्यादेश्चक्रधारणपरत्वम्—**इति** ॥ **तन्न ;** प्रामाण्यं प्रति शब्दनिष्ठप्रामाण्यं प्रति वा निरुक्तपरिगणितत्वस्य व्यापकत्वाभावेन परिगणितत्वाभावेन प्रामाण्याभावसाधनासम्भवात्, प्रामाण्यवति प्रत्यक्षादौ शब्दनिष्ठप्रामाण्यवति च प्रमाणभूतलौकिकवाक्यादौ

निरुक्तपरिगणितत्वाभावेन व्यभिचारात् । शब्दनिष्ठं धर्मांशे प्रामाण्यं प्रति निरुक्तपरिगणितत्वं व्यापकमित्यपि न सत्; सन्ध्यावन्दनं धर्म इति लौकिकवाक्ये व्यभिचारात्; पञ्चरात्रस्योक्तव्याप्तिमवष्टभ्यानुमानेन धर्मांशे प्रामाण्यनिराकरणेऽपि विनियोगांशे प्रामाण्यानिराकरणेनोद्देश्यासिद्ध्याऽर्थान्तराच्च ॥

वेदतात्पर्यांशे प्रामाण्यं प्रति परिगणितत्वं व्यापकमित्यपि न युक्तं; वेदतात्पर्यप्रमापके आचार्योच्चरितलौकिकवाक्ये व्यभिचारात् । न च—ग्रन्थगतं वेदतात्पर्यांशे प्रामाण्यं प्रति परिगणितत्वं व्यापकमिति न दोष इति—वाच्यम्; एवमपि भारतरामायणादौ व्यभिचारात्॥

यत्तु—भारतस्य विद्यास्थानेषु परिगणनाभावेऽपि ब्रह्मयज्ञविधिप्रकरणे 'यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान्' इति पुराणवदितिहासस्यापि विद्यास्थानप्रायपाठेन विद्यास्थानत्वनिश्चयात् भारतादौ 'इतिहासमनुत्तमम्' इत्यादिना भारतस्येतिहासत्वसमाख्यानादितिहासत्वनिश्चयात्तत्प्रामाण्यमाश्रियते; न च पञ्चरात्रस्य क्वचिदपि ग्रन्थे इतिहासत्वसमाख्या निबद्धाऽस्ति, येन तत्प्रामाण्यमप्याश्रियेत—इति ॥ तन्न । तथा सति यत्र कुत्रचित्प्रमाणभूतशास्त्रेषु प्रमाणतया परिगणितत्वं ग्रन्थगतप्रामाण्यव्यापकमिति पर्यवसितं; तथा च पञ्चरात्रस्यापि छान्दोग्ये 'वाको वाक्यमेकायनम्' इति परिगणनात्, उदाहरिष्यमाणमहाभारतादिवचनेषु परिगणनाच्च परिगणितत्वाभावासिद्धेः । एकायनपदस्य पञ्चरात्रपरत्वं च वक्ष्यते ॥

यदपि—असंज्ञायामपि वेदे छान्दसादिप्रत्ययसम्भवेन गोविन्दुशब्दस्य वृषभारूढपरमेश्वरपरत्वे तदायुधत्रिशूलादेरपि धारणविधिप्रसङ्गः—इति ॥

तन्न—यादृशबोधौपयिकाकाङ्क्षायोग्यतादिमत्त्वं यादृशवाक्यस्य तद्वाक्यस्य तादृशबोधपरत्वमिति न व्याप्तिः; येन गोविन्दुपदस्य

वृषभारूढपरमेश्वरयोगवृत्त्या त्रिशूलधारणपरत्वं चमूषच्छब्देन इति वाक्यस्य स्यात्, तादृशव्याप्त्यनभ्युपगमे सदेव सोम्येदमित्यादि-सद्विद्यादीनां प्रकृत्यादिबोधौपयिकाकाङ्क्षादिमत्त्वेन तत्परत्वप्रसङ्गेन मीमांसामात्रोच्छेदापत्तेः। तथा च—यद्वाक्यस्य बोधद्वयौपयिकाकाङ्क्षा-दिमत्त्वं, तस्य लघुसामग्रीकबोधपरत्वमित्येव व्याप्तिः पूर्वोत्तर-मीमांसानुमता; सद्विद्यादिस्थले प्रकृत्यादिबोधस्येक्षतिधातुलक्षणामूलक-त्वेन शक्तिज्ञानापेक्षया शक्यसम्बन्धरूपलक्षणाज्ञानस्य गुरुशरीरतया गुरुसामग्रीकत्वात् सद्विद्यातात्पर्यविषयत्वाभावात्; एवं च गोविन्द-पदयोगशक्तिज्ञानजन्योपस्थितिद्वयघटितसामग्रीकत्रिशूलधारणविषयक-बोधापेक्षया रूढिशक्तिज्ञानजन्यैकोपस्थितिघटितसामग्रीकसुदर्शनधारण बोधस्य लघुसामग्रीकतया तद्वाक्यतात्पर्यविषयत्वौचित्यात्। अत एव-'रथकारोऽग्निमादधीत' इतिवाक्यस्य रूढ्यर्थयोगार्थोभयबोधौ-पयिकाकाङ्क्षादिमतोऽपि रूढ्यर्थतात्पर्यकत्वं व्यवस्थापितं पूर्वतन्त्रे। न च--अपशूद्राधिकरणे शूद्रपदस्य योगार्थतात्पर्यवर्णनं आकाशाद्यधि-करणेऽप्याकाशादिपदस्य तथा तात्पर्यवर्णनं च विरुध्यत इति—वाच्यम्; अपशूद्राधिकरणे क्षत्रियत्वगतेश्चेत्यादिना रूढ्यर्थबाधोप-पादनेन आकाशाद्यधिकरणेऽपि परायणत्वादिरूपब्रह्मलिङ्गानां भूता-काशे बाधेन तद्वाक्ये बोधद्वयौपयिकयोग्यताविरहाद्व्यभिचाराभावात्। न हि प्रकृते सुदर्शनधारणपरत्वे योग्यतादिविरहः। न च--गोविन्द-सम्बन्धप्रकारकायुधविशेष्यकबोधं प्रति ङसन्ताकारान्तगोविन्दपद-समभिव्याहृतायुधपरत्वज्ञानरूपाकाङ्क्षाज्ञानस्य कारणतायाः कॢप्तत्वा-त्तादृशाकाङ्क्षायाश्च गोविन्दुरायुधानीत्यत्राभावेन बोधद्वयौपयिका-काङ्क्षादिमत्त्वमुक्तवाक्यस्यासिद्धमिति—वाच्यम्; बहुत्वादिप्रकारक-ब्राह्मणादिविशेष्यकवेदजन्यबोधं प्रति ब्राह्मणास इत्याद्यानुपूर्वीज्ञानस्य हेतुताकल्पनवत्, उक्तबोधं प्रति गोविन्दुरिति ङसन्ततृजन्तगोवि-

न्द्रपदसमभिव्याहृतायुधपदसमभिव्याहारज्ञानस्यापि कारणत्वात् । किञ्च त्रिशूलधारणे तात्पर्यग्राहकविनियोगवचनोपबृंहणाद्यभावाच्च तत्परत्वम् ॥

यत्तु—चक्रप्रतिष्ठायां मन्त्रविनियोजकस्मृत्युपबृंहणादीनां दृष्टमन्त्रलिङ्गमूलत्वे सम्भवत्यदृष्टश्रुत्यन्तरमूलत्वकल्पनायोगेन विनियोजकपुराणादिवचनानामप्युपजीवनीयान्मन्त्रलिङ्गाच्चमूषदित्यस्य त्रिशूलधारणपरत्वमापतत् केन वार्यते—इति ॥

तन्न । रूढ्युत्थापितमन्त्रलिङ्गस्थले योगोत्थापितमन्त्रलिङ्गानुन्मेषात्; अन्यथा ऐन्द्रीमन्त्रस्यापि योगोत्थापितलिङ्गबलेन गार्हपत्योत्थापनपरत्वसम्भवेन 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुतेर्वैयर्थ्यापत्तेः । एतेन—अतत्परादपि वाक्यात्प्रतीयमानस्य त्रिशूलधारणस्यासति बाधके समाश्रयणीयत्वादिति—निरस्तम्; तथा सति—'आकाशादेव समुत्पद्यन्ते' इत्यादिवाक्यात्प्रतीयमानस्य भूताकाशगतजगत्कारणत्वस्य समाश्रयणीयत्वापत्त्या मीमांसावैयर्थ्यापत्तेः । न च—तत्र परायणत्वादिरूपलिङ्गबाधकस्य सत्त्वान्न तादृशस्य समाश्रयणीयत्वं, बाधकविरह एव प्रतीयमानार्थस्य समाश्रयणीयत्वाङ्गीकारादिति—वाच्यम्; प्रकृतेऽपि तात्पर्यविरहरूपबाधकस्य सत्त्वात्, तस्य च 'अतत्परादपि वाक्यात्' इत्यनेन त्वयैवाङ्गीकारात्; तात्पर्यविरहरूपबाधकसत्त्वेऽपि वाक्यस्य प्रतीयमानार्थपरत्वाङ्गीकारे गायत्र्या पितृरेतोध्यानस्य प्रतीयमानतया तादृशार्थस्यापि समाश्रयणीयत्वापत्तेः । तथा हि—देवस्य, दीव्यति क्रीडति मात्रा सहेति देवः, तस्य देवस्य; सवितुः पितुः—'सविता सारथौ रुद्रे पितर्यर्केऽनुजानति' इति वैजयती । वरेण्यं—श्रेष्ठं; तत्—तादृशं, स्खलितमिति यावत्; भर्गः—रेतः, 'भर्गसी रेत आलोकौ' इति वैजयन्ती । धीमहि—ध्यायामः; नः—अस्माकं; धियः, यः—पिता; प्रचोदयात्—जनयेत्; पिता हि पुत्रस्याक्षराभ्यासवेदाध्ययनशास्त्र-

पाठादिभिर्बुद्धिं जनयतीति ॥ न च—देवस्य सवितुरित्यनेन प्रसिद्धि-प्राचुर्येण प्रथमं सूर्यस्यैव प्रतीयमानत्वरूपबाधकसत्त्वान्न प्रतीयमानोक्तार्थपरत्वमिति—वाच्यम्; इहापि गोविन्दपदप्रत्यभिज्ञानरूपबाधकस्य सत्त्वेनार्थान्तरपरत्वासम्भवात् —इति दिक् ॥

**यदप्युक्तं**—अयं मन्त्रस्तप्तमुद्राधारणनिषेधपर एव प्रतीयते। तुरीयं धाम सचमानः, अत एव—चमूषच्छ्येनश्शकुनो बिभृत्वा यो द्रप्सो गोविन्दुरायुधानि बिभ्रत्, स महिषो भूत्वा अपामूर्मिं समुद्रं विवक्तीत्यन्वयाङ्गीकारात्। तुरीयं धाम—परब्रह्म, सचमानः—परमात्मध्यानशील इत्यर्थः, अत एव चमूषत्—चम्वोः रोदसोर्निषीदतीति चमूषत्, 'चम्वौ रोदसी' इति वेदनिघण्टुः; तथा च—परमात्मध्यानवशादिहलोकपरलोकयोर्निषीदन्नित्यर्थः। श्येनः—शंसनीयं गच्छतीति निरुक्तम्। शकुनः—शक्नोत्यात्मानमुन्नेतुमिति निरुक्तम्। भिभृत्वा—न केवलमीश्वरध्यानेनात्मानमुत्तारयति, किन्तु स्वसम्बन्धिनोऽपीति भावः; द्रप्सः—परमात्मांशभूतो जीवः; गोविन्दुः—गोविन्दस्य, आयुधानि, बिभ्रत्—वहति, स महिषो भूत्वा—तिर्यग्योनिं गत्वा; महिषशब्दोऽत्र तिर्यग्योन्युपलक्षकः। अपामूर्मिं—अपां विकारभूतं। समुद्रं—संसारसागरमिति यावत्, विवक्ति—सेवते, 'विवक्तिसिषक्तिजुषते' इति अनुक्रमणिकायां विवक्तिस्सेवार्थ उक्तः; तथा च—संसारसागरे मग्नो भवतीत्यर्थः। एवं च—परमेश्वरध्यानेनावाप्तसमस्तकामोऽपि वेदनिषिद्धार्थानुष्ठानेन तिर्यग्योनिं गत्वा संसारनिमग्नो भवतीत्युक्त्या केनापि पुरुषेण तप्तमुद्रा न धारणीयेति निषेधः फलति—इति ॥

**तदयुक्तम्**—तुरीयं धाम सचमानश्चमूषच्छ्येनश्शकुनो बिभृत्वेत्येतेषां पदानां ब्रह्मविद्यानिष्ठत्वपरत्वे तादृशस्य जीवस्य गोविन्दायुधधारणेन तिर्यग्योनिप्राप्तिपूर्वकं संसारप्राप्तेरसम्भवात्; चक्रादिधारणस्य पापत्वेऽपि ब्रह्मविद्यानिष्ठे तस्य फलजनकत्वासम्भवात्;

,तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इति सूत्रे तथोक्तेः । न च-निष्पन्नब्रह्मविद्यस्योत्तराघाश्लेषेऽपि ब्रह्मविद्यायां यतमानस्योत्तराघं दुर्वारमिति तुरीयं धाम सचमान इत्यादिपदैर्यतमान एव विवक्षित इति-वाच्यम्; तस्मिन् चमूषच्छ्येनशकुनबिभृत्वापदार्थानामन्वयानुपपत्ते, तदन्वयानुरोधेन निष्पन्नविद्यपरत्वस्यैव वक्तव्यत्वात् । किञ्च महिषो भूत्वा संसारसागरं विवक्तीत्यपि न युक्तम्; महिषभवनस्यापि संसाररूपतया संसारप्राप्तेस्तदुत्तरकालीनत्वाभावात् । न च-त्वाप्रत्ययस्य समानकालीनत्वपरत्वान्न विरोध इति-वाच्यम्; तथाऽपि प्रत्यक्षशतपथश्रुतिपञ्चरात्रादिविहितस्य चक्रधारणस्य निषेधानुपपत्तेः, निषेधवचनानां च रागप्राप्तविषयताया वक्ष्यमाणत्वात् ॥

न च-अयमपि मन्त्रस्तथैवास्त्विति-वाच्यम्; महिषो विवक्तीत्यनयोस्समुद्र इत्यनेनान्वये, तथा सचमान इत्यस्य धामेत्यनेनान्वये च व्यवहितान्वयदोषप्रसङ्गात् । न च-महिषशब्दस्य रूढित्यागो भवन्मते दोष इति-वाच्यम्; महिषो भूत्वेति तिर्यग्योनिलक्षकत्वोक्त्या भवतामपि रूढित्यागस्य दुर्वारत्वात्; समुद्रमित्यस्य सचमान इत्यनेनैव साकाङ्क्षेण सन्निहितेन योग्येन च प्रथममेवान्विततया निराकाङ्क्षतया तुरीयं धामेत्यत्रान्वयासम्भवेन तुरीयं धाम महिषो विवक्तीत्यन्वयस्यैव वक्तव्यतया तत्र च महिषशब्दरूढ्यर्थान्वयबाधाद्योगार्थस्यैवाश्रयणीयत्वात्तस्य दोषत्वानापादकत्वात्, समुद्रसचमानपदान्वयस्य प्रथमावगतस्य बलीयस्त्वात् । अत एव-'श्रुतेर्जाताधिकारस्स्यात्' इत्यत्र त्रयो वेदा अजायन्तेति प्रथमावगतोपक्रमस्थवेदपदानुसारेण 'उच्चैरृचा क्रियते, उपांशु यजुषा, उच्चैस्साम्ना' इति विधिवाक्यगतचरमावगतोपसंहारस्थऋगादिपदानां ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रलक्षणा स्वीकृता ॥

**यदि च**—योगापेक्षया रूढिपूर्विका लक्षणाऽपि ज्यायसी, अत एव–'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणाम्' इत्यत्र, 'व्यवहिताश्च' इति सूत्रेण उद्गातॄणां चमसः प्रैत्वित्यर्थके उद्गातृशब्दरूढ्यर्थस्य उद्गीथाख्यद्वितीयसामभक्त्युच्चरितुः परिग्रहे बहुवचनानुपपत्तिरिति उद्गायन्तीत्युद्गातार इति योगशक्त्या उद्गातृप्रस्तोतृप्रतिहर्त्रैतत्त्रयपरत्वं युक्तं, प्रातिपदिकबहुवचनयोर्द्वयोरप्युपपत्तेः; तस्मात्सुब्रह्मण्याख्यऋत्विग्वर्जितानां त्रयाणां छन्दोगानां भक्ष इति–पूर्वपक्षं प्रापय्य; योगापेक्षया रूढेर्बलीयस्त्वात्प्रथमप्रतीतरूढ्यनुग्रहाय औद्गात्रप्रवचनरूपसामवेदसम्बन्धावच्छिन्नेषूद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्येषु रूढिपूर्वकलक्षणा युक्ता; तस्माच्चतुर्णां भक्ष इति–सिद्धान्तितं तृतीये। तथा च-प्रकृतेऽपि महिषशब्दस्य योगाङ्गीकारापेक्षया तिर्यग्योनित्वावच्छिन्ने रूढिपूर्वकलक्षणैवाश्रयितु युक्तेति–**विभाव्यते**॥ तदा श्येनशकुनपदयोरपि रूढ्यर्थ एवाङ्गीक्रियतां; तयोरप्यध्याहृताभ्यां न हन्तव्य इति पदाभ्यामन्वयसम्भवात्। निरुक्तानुरोधात्तयोर्योगार्थस्वीकारे च महिष्ठः प्राप्नुयादित्युपबृंहणानुरोधान्महिषशब्दस्यापि योगार्थस्वीकारो युक्तः। तस्माद्व्यवहितान्वयदोषान्नोक्तार्थो युक्तः॥

वस्तुतस्तु–प्रोद्गात्रधिकरणे प्रोद्गातृशब्दरूढ्यर्थस्य बहुत्वासम्भवात्पाशमन्त्र इव वचनमविवक्षितार्थमिति पूर्वपक्षे; अदितिः पाशान् प्रमुमोक्त्वति पाशमन्त्रे पाशशब्दरूढ्यर्थस्य लक्ष्यार्थस्य वा बहुत्वासम्भवाद्बहुवचनस्याविवक्षितार्थत्वेऽप्युद्गातृपदे योगार्थस्य लक्ष्यार्थस्य वा बहुत्वसम्भवान्न बहुवचनस्याविवक्षा युक्तेत्येतावन्मात्रमेव व्युत्पादितम्; न तु योगस्य लक्षणापेक्षया दौर्बल्यमपि। तथा च रूढ्यर्थबोधसामग्र्या योगार्थबोधप्रतिबन्धिकाया अभावे योगार्थोन्मज्जनमेव युक्तं; न तु लक्ष्यार्थोपगमः। अत एवापशूद्राधिकरणे रूढ्यर्थानुपपत्तौ योगार्थ एवाश्रितो **भगवता सूत्रकृता॥ भाष्यकृताऽप्यजा-**

मन्त्रे न जायत इत्यजेति जगद्व्यापित्वादित्यत्र यस्य चैतत्कर्मेति श्रुतिघटककर्मशब्दस्य क्रियत इति कर्मेति च योगार्थ एवाश्रितः, न तु रूढ्यर्थपूर्विका लक्षणा—इति। तस्माल्लक्षणापेक्षया योगस्य प्राबल्यमेव युक्तम् ॥

यत्तु—चक्रधारणनिषेधवचनान्तरपर्यालोचनया व्यवहितान्वयस्याप्यर्थवशेन समाश्रयणीयत्वम्—इति ॥ तन्न। सुदर्शनधारणविधायकवचनान्तरपर्यालोचनयाऽव्यवहितान्वयसम्भवे व्यवहितान्वयाश्रयणानौचित्यात्। किं च—एवं सुदर्शनस्य स्वधारणद्वारा संसारपतनहेतुत्वावगमेन निन्दावगमात् भगवच्छास्त्रे चक्रप्रतिष्ठायां विनियोगानुपपत्तिः; यदीयनिन्दाविषयकबोधजनकमन्त्रत्वं यत्र तत्र तदीयकर्मणि विनियुक्तत्वाभाव इति व्याप्तेः; तदीयप्रसादहेतुतया तत्प्रशंसापराणां तदीयकर्मणि विनियोगसम्भवेऽपि तन्निन्दापराणां तन्निग्रहजनकानां तदसम्भवात् ॥

**यदपि**—गोविन्दुरित्यस्य न षष्ठ्येकवचनान्तत्वं, तथा सति छान्दसतृज्वद्भावाश्रयणाद्यनेकप्रक्रियाकल्पनापत्तेः; किं तु प्रथमैकवचनान्तो गोविन्दुशब्द इत्ययं मन्त्रो विष्णुपर एव। तस्य च परब्रह्मांशतया द्रप्सशब्देनाभिधानमुपपद्यते। तथा हि **मैत्रेयोपनिषदि**—'तमो वा एकमास' इत्यारभ्य, 'तत्परेणेरितं विषमत्वं प्रयाति, एतद्वै रजसो रूपम्' इत्यादिना तमोऽधिष्ठातुः परस्य सङ्कल्पेनाविद्याख्यस्य तमसो गुणविभागं निरूप्य;

> "तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति। अथ यो ह खलु वा वाऽस्य राजसोंऽशोऽसौ सः योऽयं ब्रह्मा; अथ यो ह खलु वा वाऽस्य तामसोंऽशोऽसौ स योऽयं रुद्रः; अथ यो ह खलु वा वाऽस्य सात्त्विकोंऽशोऽसौ सः योऽयं विष्णुः ॥"—

इति तमोऽधिष्ठातुः परस्य ब्रह्मादयोंऽशभेदा इति प्रतिपादनात्।

तथा च—ब्रह्मांशभूतो गोविन्द एव कौमोदकीनन्दकाद्यायुधभर्तृतया 'अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे' इति, 'अन्तस्समुद्रे मनसा चरन्तम्' इत्यादिश्रुतिप्रतिपन्नसमुद्रशायितया तुरीयधामाख्य-परमपदवृत्तितया च स्तूयते—इति ॥ तन्न । प्रवृत्तिनिवृत्त्यन्यतर-प्रयोजनकस्य वेदात्मकशास्त्रस्येष्टसाधनत्वादिप्रतिपादकत्वस्य पूर्वोक्त-रीत्या सम्भवे तत्त्यागेन वैयर्थ्यापरपर्यायस्यानुवादरूपार्थपरत्वस्य कल्पनानौचित्यात् । एवं भगवच्छास्त्रे चक्रप्रतिष्ठाया विनियुज्य-मानानां मन्त्राणां 'तत्तत्संज्ञान् मनून् जपेत्' इति सौदर्शनत्वाभि-धानात् भगवत्परत्वे चास्य मन्त्रस्य सौदर्शनत्वासिद्धेर्भगवच्छास्त्र-विरोधापत्त्याऽनन्यगतिकत्वेन गोविन्दुशब्दस्य तृज्वद्भावं छान्दस-मङ्गीकृत्य सुदर्शनपरत्वमङ्गीकरणीयम् । भगवत्परत्वे आयुधानीत्यनेन सुदर्शनप्रकाशेऽपि भगवत्येव मन्त्रस्य प्रधानतात्पर्यात्सुदर्शनस्य समुद्रपरमपदादिवदुपसर्जनतया तत्र तात्पर्यासिद्धेस्सौदर्शनत्वानिर्वा-हात् । किं च गोविन्दस्यायुधान्यङ्ग इति स्कान्दोपबृंहणबलात्पूर्वोक्त-प्रायपाठानुरोधाच्च चमूषन्मन्त्रस्सुदर्शनधारणपर एव ॥

न च—अस्य मन्त्रस्य सुदर्शनधारणपरत्वे सुदर्शने प्रधानतात्पर्या-सिद्ध्या भगवच्छास्त्रविरोधतादवस्थ्यम्—इति वाच्यम्; स्वधारणद्वारा सुदर्शनस्य मोक्षप्रयोजकत्वोक्त्या सुदर्शने प्रधानतात्पर्यानपायात्, द्वारद्वारिभावापन्नयोस्सुदर्शनतद्धारणयोर्द्वयोरपि मोक्षहेतुतया तत्प्र-कारकतात्पर्यविषयतारूपप्रधानतात्पर्यविषयताया उभयत्र सत्त्वात् । न च—एकस्य वाक्यस्योभयत्र प्रधानतात्पर्यं न सम्भवति, विरोधा-दिति—वाच्यम्; परस्पराविरुद्धार्थद्वये तात्पर्यसम्भवात् । अत एव—'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती' इत्यर्थवादस्य रात्रिसत्र-स्तुतिपरस्यापि फलसमर्पकत्वं स्वीकृतं पूर्वतन्त्रे—इति ॥

**इति चमूषच्छ्रुतिविचारस्सम्पूर्णः ॥**



अमीषां मन्त्राणां सुदर्शनधारणविधायकत्वं तावत्सिद्धान्तः ॥

---

अत्र यदुक्तं—अमीषां मन्त्राणां विधायकत्वमयुक्तं ; मन्त्राणां विधायकत्वाभावस्य विधिमन्त्राधिकरणे निर्णीतत्वात् । तथा हि—

"विलुप्तविधिशक्तित्वात्सिद्धत्वद्योतनादिभिः ।
प्राप्तत्वादन्यतस्तेषां विधिशब्दाद्यभावतः ॥
ब्राह्मणैर्विनियुक्तत्वात्करणत्वेन कर्मणाम् ।
मन्त्रत्वादपि नैते स्युस्तप्तमुद्राविधायकाः ॥"

विधायकत्वं हि—मन्त्राणां विधिशक्तिमत्त्वेन, न त्वन्यथा । न चैतेषां मन्त्राणां तादृशशक्तिमत्त्वं, तद्विरुद्धार्थस्यैव प्रतीतेः । तथा हि प्रसिद्धास्तावद्विधिशक्तितिरोधायकाश्चतुर्धा ; सिद्धत्वद्योतनवक्त्राभिमुख्यप्रतीतिस्वात्मनियोगनिमित्ताभिधानभेदात् । तत्र—'देवा नराश्च याभिर्यजन्ते ददाति च' इति गोस्तुत्यर्थे गोयागगोदानयोः याभिरिति यच्छब्देन सिद्धत्वद्योतनाद्गोयागगोदानविधिशक्तिविघातः, 'अग्नीदग्नीन्विहर, अहे बुध्नच मन्त्रम्मे गोपाय' इत्यादावामन्त्रणविभक्त्याऽप्रवृत्तप्रवर्तनात्मकविधिशक्तिविघातः । आमन्त्रणविभक्तेस्सामान्यतो विहितार्थानुष्ठानाय प्रवृत्ताभिमुखपुरुषप्रवर्तकत्वात् । 'बर्हिर्देवसदनं दामि' इत्यादावस्मदर्थेनोत्तमपुरुषेण विधिशक्तिविघातः, स्वात्मनि स्वस्य प्रवर्तनानुपपत्तेः । 'यदि सोममपहरेयुः' इत्यादौ निमित्तवाचिना यदिशब्देन प्राप्तिबुद्धेर्विधिशक्तिविघातः, प्रकृते च 'येन पूतस्तरति दुष्कृतानि' इति मन्त्रस्य यच्छब्दादिना विधिशक्तिविघातान्न विधायकत्वम् ॥ —इति ॥

तदसत् । अमीषां मन्त्राणां विधायकत्वं हि—कृतिसाध्यत्वेष्टसाधनत्वादिबोधजनकत्वं ; तच्च कृतिसाध्यत्वादिवाचकपदघटितत्वे

प्राप्तार्थत्वाभावेन तद्विशिष्टयच्छब्दरूपप्रतिबन्धकसत्त्वाद्विधिशक्ति-तिरोधानमिति–वाच्यम् । अप्राप्तार्थत्वं हि–न तावन्मानान्तराग्राह्यार्थत्वं, श्रुते स्मृतिनिरुक्तवेदभाष्यादिग्राह्यार्थत्वेनाप्राप्तार्थत्वानापत्ते. ; किं तु स्वानुपजीविमानान्तराग्राह्यार्थत्वम् । यत्रापूर्वार्थत्वमुपपादनीयं तत्परं स्वपदं, तथा च स्मृतेरिव पञ्चरात्रस्यापि श्रुत्युपजीवित्वेन तदनुपजीविमानान्तराग्राह्यार्थत्वरूपमप्राप्तार्थत्वमुक्तमन्त्राणामक्षतमेव ॥

**न चैवं**—'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान्स्तृणीयात्' इति मृताग्निहोत्रविषयश्रुते 'ये पुरा दर्भास्त उदञ्च कार्या.' इत्येव विधिवाचकपदाध्याहारेणोदक्त्वांशेऽपि विधायकत्वापत्तिः; 'अग्रवन्ति प्रागग्राण्युदगग्राणि वा' इति सामान्यस्मृत्या उदगग्रत्वस्य प्राप्तत्वेऽपि स्वानुपजीविमानान्तराग्राह्यार्थत्वानपायेन तदभावविशिष्टयच्छब्दाभावात् । तथा च--मृताग्निहोत्राधिकरणविरोध । तदधिकरणे--ये पुरोदञ्च इति श्रुतिवाक्ये--'किमुदगग्रता विधीयते, किं वाऽनूद्यते?' इति सन्दिह्य; "यथोपवीतं विधेयं, एवमुदगग्रत्वमपि विधेयम्, अपूर्वत्वात्, यद्वृत्तयोगो विध्याद्यभावश्च यदाग्नेयादिवद्द्रष्टव्य" इति उदक्त्वं चापूर्वत्वादिति सूत्रेण पूर्वपक्षयित्वा; "नोदगग्रत्वस्य विधिः, किं तु प्राप्तस्यानुवादः-कुतः प्राप्तिः? अग्रवन्ति प्रागग्राण्युदगग्राणि वेति स्मृते." इति यतो वा लिङ्गदर्शनादिति सूत्रेण सिद्धान्तितत्वादिति—**वाच्यम्**। श्रुतेरग्निहोत्रमात्रविषयतया स्मृतेश्चाविशेषेण प्रवृत्तेर्मिथोमूलमूलिभावायोगेन तादृशस्मृतेस्स्वानुपजीविमानान्तरत्वानपायात्, तदग्राह्यार्थत्वाभावविशिष्टयच्छब्दादेरेव सत्त्वाद्विधायकत्वासम्भवात् । वस्तुतः—प्रागग्राण्युदगग्राणि वेति स्मृतेरित्यस्य स्मृतिमूलार्थभूताद्वेदादित्यर्थः । तथैव शास्त्रदीपिकाव्याख्यायां **मयूखावल्यां** व्याख्यानात् । तस्मादुदाहृतश्रुतीनां चक्रधारणविधायकत्वे न किञ्चिद्बाधकम् ॥

केचित्तु—

**यदपि**—चरणादिश्रुतीनां यच्छब्दाद्युपहितत्वेन तद्रहितपाञ्चरात्राद्यागमतदनुसारिपुराणवचनविहिततप्तधारणानुवादकत्वेन प्राप्तार्थत्वान्न विधायकत्वम्—इत्युक्त ; तदयुक्तं, तथा सति 'आत्मा वाऽरे-द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुतीनामपि वक्राभिमुख्यप्रतीत्या "श्रोतव्यश्श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । आत्मा च सततं ध्येयः" इत्यादितद्रहितपुराणवचनविहितश्रवणाद्यनुवादकत्वापत्तेः । तथा—

> "त्रयो धर्मस्कन्धाः ; यज्ञोऽध्ययनं दानमिति प्रथमः, तप इति द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीय । अत्यन्तमात्मानमवसादयन् सर्वलोकेषु पुण्यलोको भवति, स ब्रह्मसंस्थोऽमृतत्वमेति ; एतमेव प्रव्राजिनो लोकमिच्छन्ति"—

इत्यादिश्रुतीनां,

> "वनेषु तु विहृत्यैवं तृतीयं भागमायुषः ।
> चतुर्थमायुषो भागं त्यक्त्वा सङ्गान्परिव्रजेत् ॥"

इत्यादिमन्वादिस्मृतिविहितपारिव्राज्यानुवादकत्वं स्यात् ; तत्र श्रुतावेव पञ्चमलकारकल्पनया विधायकत्वस्योत्तरमीमांसासिद्धत्वात् । 'ऊर्ध्वरेतस्सु च शब्दे हि', 'विधिर्वा धारणवत्' इत्यादिसूत्रव्याख्यानावसरे **शङ्कराचार्यैरपि** तादृशश्रुतीनां विधायकत्वाभ्युपगमात् । श्रोतव्य इत्यादीनां विधायकत्वस्य विवरणकारादिभिरङ्गीकाराच्च । अत एव स्मृत्यधिकरणे—अष्टकाः कर्तव्याः, गुरुरनुगन्तव्यः, शिखाकर्म कर्तव्यं, प्रपा प्रवर्तयितव्या, तटाकं खनितव्यम्—इत्यादिस्मृतीनां 'श्रेयांसं पापीयान् पश्चादन्वेति', 'यत्र बाणास्सम्पतन्ति कुमारा विशिखा इव', 'धन्वन्निव प्रपा असि', 'स्थलयोदकं परिगृह्णन्ति' इति श्रुतय एव प्रमाणत्वेनोदाहृताः । अत एव माधवीये—तृप्तां जहुर्मातुलस्येव योषाभागस्ते

पैतृष्वसेयींवपामिवेति । तस्मात्समानादेवपुरुषादत्ताचाद्यश्च जायते, उत तृतीये सङ्गच्छावहै, चतुर्थे सङ्गच्छावहै इति श्रुत्योर्मन्त्रतयाऽर्थवादतया च कथं मातुलसुताविवाहकरणे प्रमाणत्वम्–इत्याशङ्क्य; उपरिधारणविधिवदपूर्वार्थत्वेन मातुलसुतां विवहेदिति विधिः कल्प्यते; मानान्तरविरोधाभावात्। विरोधिवचनानां गान्धर्वविवाहादौ मातृसपिण्डादिविषयत्वस्योक्तत्वात्–इत्युक्तम्। तस्माच्चरणादिश्रुतीनां विधिविभक्तिराहित्येऽपि यच्छब्दाद्युपस्थितत्वेऽप्यप्राप्तार्थतया चक्रधारणविधायकत्वं युक्तम् ॥ —इति वदन्ति ॥

**यदपि**–चरणादिश्रुतीनां विधिविभक्तिराहित्यान्न विधायकत्वम्–इति। **तन्न**; 'ब्रह्मविदाप्नोति परं', 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यादिवाक्यानां विधिविभक्तिरहितानामप्यज्ञातज्ञापकत्वलक्षणविधायकत्वाङ्गीकारात्। सदेव सोम्येदमग्र आसीदित्यादिसद्विद्यायां 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये' इति सदुपासनस्य मोक्षहेतुत्वश्रवणेन सदुपासीतेति विधेर्वेदान्तिभिः कल्पितत्वात्। अत एवोद्गीथविद्याविचारे **श्रीभाष्ये** उक्तं— 'वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणाद्वेदनविषयो विधिः कल्प्यते'–इति। किं च–विधिविभक्तेरपीष्टसाधनत्वबोधनमुखेनैव प्रवर्तकत्वं वाच्यं, न तु सक्षात्; तच्च प्रवर्तकत्वं श्रुतीनां तप्तचक्रधारणगतेष्टसाधनत्वबोधकत्वादस्त्येवेति नार्थो विधिविभक्त्या; न ह्याम्रफलं तृप्तिसाधनमिति वाक्यस्य विधिविभक्तिराहित्यमात्रेणेष्टसाधनत्वाबोधकत्वं प्रवर्तकत्वराहित्यं वा दृष्टं, अनुभवविरोधात्। यद्वा–विधिविभक्तिरहिताया अप्राप्तेस्सत्त्वाद्विधिविभक्तिः कल्प्यताम्। अत एव–पूर्वतन्त्रे विधिविभक्तिरहितानामुपांशुयाजमन्तरा यजतीत्यादीनां वचनानित्वपूर्वत्वादिति न्यायेन पञ्चमलकारकल्पनया विधायकत्वं समर्थितम् ॥

**यदपि**—पवित्रं त इत्यत्र बिभृयात् भर्तव्यमिति विधिपदं न कल्पयितुं शक्यं, तयोः प्रकृतवाक्यार्थेनान्वयात् ; नापि भवेयुरिति पदाध्याहारेण भृता भवेयुरितिवाक्यार्थान्वयसम्भवः, भृतास इत्यस्य समाशतेति समभिव्याहृतक्रियापदान्वयेन निराकाङ्क्षस्याश्रुतक्रियापदान्तरेणान्वयायोगात्; अन्यथा ब्राह्मणो न हन्तव्य इत्यत्रापि ब्राह्मणो न पूजनीयः, किं तु हन्तव्य इत्यर्थस्स्यात्। तथा च पवित्रं त इत्यस्याध्याहृतविधिवाक्येनैकवाक्यतया चक्रधारणविधायकत्वमनुपपन्नम्—**इति** ॥ **तन्न**। उक्तरीत्या मन्त्राणां विधिघटितत्वाभावेन विधायकत्वासम्भवेऽपि मन्त्रलिङ्गाक्षिप्तविधिवाक्यानां तथात्वसम्भवात्; **राणाके** 'ये अश्वदास्सह ते सूर्येण' इत्यादिमन्त्रलिङ्गाक्षिप्ताश्वदानफलविधेरङ्गीकारवत्, सूक्तवाकमन्त्रगतायुरादिफलकीर्तनैः प्रस्तरप्रहरणस्यायुरादिफलकत्वबोधकविध्यङ्गीकारवच्च तप्तमुद्राधारणस्य विशिष्टलोकप्राप्त्यादिफलकत्वबोधकविधेः कल्पनसम्भवाच्च ॥

**यत्तु**—मन्त्रार्थवादादिषु योऽर्थश्शब्दादर्थाद्वाऽवगम्यते, तद्विषयमेव विधिवाक्यं कल्पयितुमुचितम्; यथा—'तरति ब्रह्महत्यां योऽश्वमेधेन यजति' इत्यत्राश्वमेधब्रह्महत्यातरणयोस्सम्बन्धस्य शब्दात्प्रतीयमानतया तद्विषयकं विधिवाक्यं, 'यदाग्नेयोऽष्टाकपालः' इत्यत्र यजमानद्रव्यस्य त्यागमन्तरेण देवतासम्बन्धायोगात् शब्दप्रतिपन्नद्रव्यदेवतासम्बन्धबलादर्थाक्षिप्ते यागे विधिः कल्प्यते। प्रकृते—चरणं पवित्रमित्यत्र चक्रधारणवाचकपदाभावेन वचनान्तरमनपेक्ष्य चक्रधारणोपस्थापकत्वायोगेन तद्विधायकवाक्यानुमानायोगात्, पवित्रं त इत्येतन्मन्त्रगतस्य तप्तपदस्य चक्रत्रिशूलादिसाध्यतापसाधारण्येन नियमतश्चक्रतापोपस्थापकत्वायोगाच्च न तयोर्मन्त्रयोश्चक्रधारणविधायकत्वम्। अत एव—हिरण्यं भार्यमित्यत्र हिरण्यपदस्य क्रत्वर्थदक्षिणाभूतहिरण्यतदितरभोगार्थहिरण्यसाधारण्यात्तत्पदेन नियमतः क्रत्वर्थहिरण्योपस्थापनायो-

न हिरण्यद्वारा तद्धरणं क्रत्वर्थ; किं तु पुरुषार्थमेवेत्युक्तम्। चमूष-च्छ्येन इत्येतन्मन्त्रगतस्य बिभ्रत्पदस्य पूर्वोक्तरीत्या सुदर्शनकर्तृ-काष्टादशायुधधारणवाचितया गोविन्दुशब्दस्योकारान्तप्रथमान्तत्वे ब्रह्मांशभूतविष्णुकर्तृकायुधचतुष्टयभरणवाचितया च पुरुषकर्तृकभरणा-प्रतीतेर्न चमूषत्मन्त्रबलादपि पुरुषस्य भरणविषयविधिकल्पनं युक्तम्; वचनान्तरानुसारेण पवित्रं त इत्यादीनां तप्तचक्रधारणविधिपरत्वा-भ्युपगमे नियमतो वचनान्तरस्योपजीवनवद्वचनान्तरप्राप्तानुवादित्व दुर्वारमेव—इति ॥

तन्न। यद्वाक्यस्य यद्विषयकविधिवाक्यकल्पकत्वं तद्वाक्यस्य शब्दवृत्त्यर्थापत्त्यन्यतरप्रयोज्यतद्विषयकबोधजनकत्वमिति व्याप्त्या व्यापकाभावाद्विधिवाक्यकल्पकत्व न सम्भवतीति हि विवक्षित; तन्न युक्तं, तादृशव्याप्तेरसिद्धेः; 'यत्र बाणास्सम्पतन्ति कुमारा विशि-खा इव' इत्यस्य शिखाकर्मविषयकविधिकल्पकस्य तद्विषयकबोधजनक-त्वाभावेन व्यभिचारात्। न च—तत्र तत्तद्गृह्योक्तविविधशिखत्वस्य तत्करणमन्तरेणानिष्पत्तेरर्थापत्त्या तत्करणस्य तद्वाक्यजन्यबोधविष-यत्वान्नोक्तव्यभिचार इति—वाच्यम्; तथा सति येन पूत इत्यस्य सुदर्शनेन पूतत्वस्य तद्धारणमन्तरेणानुपपत्तेरर्थापत्त्या तद्धारणबोध-कत्वात्तद्विषयकविधिवाक्यकल्पकत्वस्य दुर्वारत्वात्। न च—चरण-देवताकयागस्य प्रस्तुतत्वात् तद्धारणं विनाऽपि यागद्वारा तेन पूत-त्वमुपपन्नमिति—वाच्यम्। यागस्य 'अनु ह वै स्वर्गं लोकं विन्दति, कामचारोऽस्य स्वर्गे लोके भवति' इतिवाक्यशेषात्फलवत्त्वसिद्ध्या फलाकाङ्क्षाविरहाद्दुष्कृततरणरूपस्य च फलस्योदाहृतशतपथोदित-श्रुत्यैकार्थ्यप्रत्यभिज्ञानुरोधेन झडिति सुदर्शनधारणसाध्यत्वोपस्थितेस्त-स्यैवात्र द्वारतयाऽर्थापत्त्या बोधनात्। न चैवं—द्वारभूतक्रियाविशेष-निर्धारणार्थं श्रुत्यन्तरापेक्षायां तत्प्राप्तानुवादित्वमुक्तश्रुतेस्स्यादिति—

वाच्यम्। अनुवादकत्व हि—स्वबोधनीयपुरुषगताज्ञानादिविरोधिना स्वानुपजीविमानान्तरेण ग्राह्यार्थकत्वम्। अत्र विरोधिनेत्यन्तोपादानात् 'अग्निहोत्रं जुहोति' इति नानाशाखागतवाक्याना नानुवादकत्वापत्ति ; एकशाखास्थवाक्यस्य शाखान्तरस्थतादृशवाक्यग्राह्यार्थत्वेऽपि शाखान्तरस्थवाक्यस्यैतच्छाखाध्यायिपुरुषगताज्ञानादिविरोधित्वाभावात् ॥ स्पष्ट चेदं द्वितीयाध्यायचतुर्थपादे **भाट्टदीपिकादौ** । अत एव '**द्वयोः प्रणयति**' इति वाक्यं चातुर्मास्यप्रकरणाम्नातमुदाहृत्य, कि प्राकृतं प्रणयनमिहविधीयते, उत सौमिकं, आहोस्विदपूर्वमिति विचार्य, प्राकृतं सौमिकं चेति पक्षद्वयं प्रापय्य सिद्धान्तितम्—

"न हि प्रणयतीत्येतत्सौमिकस्याभिधायकम् ।
प्राकृतस्यानुवादे च वचन स्यादनर्थकम् ॥
तस्मात्प्रणयतीत्येतदप्राकृतमसौमिकम् ।
अपूर्वमग्नेर्नयनं वहत्याहवनीयत ॥" —इति ॥

यद्यपि—प्रणयनमात्रमत्र श्रुत; तथाऽपि—शाखान्तरे 'आहवनीयात् द्वावग्नी प्रणयते' इति वचनात् तदेकार्थत्वादनेन वचनेन प्राकृतप्रणयनोत्तरकालमाहवनीयादग्न्यन्तरस्य प्रणयनं पशुबन्धवद्विधीयन इति। तथा च द्वयोः प्रणयतीति वाक्यार्थनिर्णयाय 'आहवनीयात् द्वावग्नी प्रणयते' इति वचनान्तरानुरोधेऽपि पूर्ववाक्यस्य विधायकत्ववदिहापि विधायकत्वं नानुपपन्नमिति ॥

**यद्यप्युक्तं**—पवित्रमन्त्रगतस्य चक्रत्रिशूलादिसाध्यतापसाधारणस्य तप्तपदस्य हिरण्यभरणाधिकरणन्यायेन नियमतश्चक्रधारणोपस्थापकत्वायोगान्न तद्विधायकत्वाम्—इति। **तदप्ययुक्तम्**; यद्वाक्यस्य यद्विषयकविधिवाक्यकल्पकत्व तद्वाक्यस्य नियमतस्तदुपस्थापकत्वमिति व्याप्तिरुक्तसन्दर्भेण विवक्षिता ; सा च न सम्भवति, वाजिनामुद्दिश्यविद्यायां व्यभिचारात् ; तत्र 'भवत्यात्मना परास्य भ्रातृव्यो भवति

य एवं वेद' इति वेदनसामान्यप्रतिपादकस्य नियमतो ध्यानानुपस्थापकस्यापि वाक्यस्योद्गातृविशेष्यकप्राणत्वप्रकारकध्यानविधिकल्पकस्वाङ्गीकारात् । प्रकृते हिरण्यभरणाधिकरणन्यायोदाहरणमपि न युक्तं; सङ्कोचकमानान्तरविरहस्थल एव तन्न्यायस्य प्रवृत्ते ; प्रकृते च तप्तपदस्य 'अग्निर्वै सहस्रारः' इति पूर्वोक्तश्रुत्या चक्रतापप्रतीतेस्तस्यायाप्रवृत्ते. । अन्यथा—'अक्ताश्शर्करा उपदधाति' इत्यस्याञ्जनसामान्यपरत्वं, तेजो वै घृतमित्यस्य द्रवद्रव्यसामान्योपलक्षकत्वं च स्यात् । तथा च—सन्दिग्धे तु वाक्यशेषादित्यधिकरणविरोधः ; तदधिकरणे तेजो वै घृतमिति वाक्यशेषवशेनाक्तपदस्य घृताक्तत्वरूपविशेषपरत्वाङ्गीकारात् ॥

यदपि—विवादास्पदानि पवित्रं त इत्यादयो मन्त्राः न विधायकाः, कर्मकरणतया ब्राह्मणेन विनियुक्तत्वात्, व्रीह्यादिवदित्यनुमानादेतेषां मन्त्राणामविधायकत्वसिद्धिः । अत्र स्वाध्यायोऽध्येतव्य इति वाक्यादध्ययनकर्मतया विनियुक्तस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति ब्राह्मणवाक्यस्य विधायकत्वोपगमात्तत्र व्यभिचारस्स्यात् ; तद्वारणार्थं करणतयेति ॥

"विधायकं सदप्यर्थं ब्राह्मणं स्मारयत्यपि ।
मन्त्रतस्तु विधिर्वा स्यादित्येतत्तद्विदिष्यते ॥"—

इति वार्त्तिकोक्तन्यायेन समिधो यजतीत्यादिवाक्यानां कर्मकरणतया लिङ्गेन विनियोगेऽपि विधायकत्वोपगमात् । तथाविधानामेव 'वसन्ताय कपिञ्जलानालभेत' इत्यादीनां विधायकत्वोपगमात्तत्र व्यभिचारवारणाय ब्राह्मणेनेति । तदुक्तम्—

"तस्माद्व्रीह्यादिवन्मन्त्राः करणत्वेन कर्मणाम् ।
ब्राह्मणेन नियुज्यन्ते तद्वत्ते न विधायकाः ॥"—इति—इति ॥

तदसत्। पवित्रं त इत्यादयो मन्त्रा इत्यत्र पवित्रन्त इति मन्त्रः आदिः प्रथमोपस्थितिविषयो येषामिति विग्रहवाक्याद्यदुपस्थिति-ध्वंसासमानकालीनोपस्थितिविषयत्वस्य लाभात्तस्य पक्षतावच्छेदकत्वे पवित्रमन्त्रस्य पक्षबहिर्भावप्रसङ्गः ॥

यदि च—तद्गुणसंविज्ञानबहुव्रीहिमङ्गीकृत्य 'सर्वादीनि सर्वनामानि' इत्यत्र सर्वशब्दस्य सर्वनामसंज्ञावत्, 'जन्माद्यस्य यतः' इत्यत्र जन्मनो लक्षणघटकत्ववत् पवित्रमन्त्रस्यापि पक्षान्तर्भावः—इत्युच्यते; तदाऽपि विवादास्पदानीति व्यर्थम्। एवं—कृतिसाध्यत्वादिविषयकबोधजनकत्व-रूपविधायकत्वाभावस्य साध्यत्वे बाधः, उक्तरीत्या तेषां मन्त्राणां तद्विषयकबोधजनकत्वात्। कृतिसाध्यत्वादिवाचकलिङादिविभक्तिघटि-तत्वाभावसाधने च सिद्धसाधनम्; विधिवाक्यकल्पकत्वाभावसाधने च करणतयेत्यादिपदानां व्यावृत्त्यसङ्गतिः; 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'समिधो यजति', 'वसन्ताय कपिञ्जलानालभेत' इत्यादेर्विधा-यकत्वेऽपि विधिवाक्यकल्पकत्वाभावरूपसाध्यस्याबाधेन व्यभिचारा-प्रसक्तेः। कर्मकरणतया ब्राह्मणेन विनियुक्तत्वादिति हेतुकथनमपि न सत्, असिद्धेः; मन्त्रं विनाऽपीच्छाविशेषरूपत्यागादेरुत्पत्त्या मन्त्रस्य तत्करणताया बाधितत्वात्, इष्टसाधनताज्ञानादिघटितक्लृप्तसामग्र्या-ऽन्यथासिद्धत्वाच्च मन्त्रस्य करणतां कथं ब्राह्मणं बोधयेत्; बोधयेद्वा कथं प्रमाणं भवेत् ॥

न च—मन्त्रस्य त्यागादिजन्यपरमापूर्वजनककलिकापूर्वजनकीभूतो-च्चारणकर्मत्वं, न तु जनकत्वमिति न दोष इति—वाच्यम्; तथा सति दृष्टान्ते व्रीह्यादौ साधनवैकल्यापत्तेः। किं च—धन्वन्निव प्रपा असि' इत्यादिमन्त्रस्य 'अग्नये प्र व ते पुरोडाशमष्टाकपालं निर्वपेत्' इत्यादिना विहितेष्विष्टिविशेषेषु करणमन्त्रतया ब्राह्मणे विनियुक्तत्वेऽपि प्रपाप्रवर्तनादिविधिकल्पकत्वोपगमात्तत्र व्यभिचारः।

'नूनां जङ्गुर्मातुलस्येव योषा पैतृष्वसेयी वपाम्' इत्यादिमन्त्राणां तत्तत्कर्मकरणतया ब्राह्मणेन विनियोगेऽपि मातुलसुताविवाहविधिकल्पकत्वस्य माधवीयादावभ्युपगमात्; 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य', 'चत्वारि वाक्परिमिता पदानि, तानि विदु ब्राह्मणा ये मनीषिण.' इत्यादिमन्त्राणामन्यत्र विनियुक्तानामेव व्याकरणाध्ययनविधिकल्पकत्वस्य भगवता पतञ्जलिनाऽभ्युपगमाच्च; तत्र सर्वत्र व्यभिचार ॥

न च—मन्त्रा न तत्कर्मविधायका', तत्कर्मकरणतया ब्राह्मणेन विनियुक्तत्वादिति विवक्षितत्वान्नोक्तव्यभिचार, उदाहृतमन्त्राणा यत्र कर्मणि विनियोगस्तत्कर्मविधायकत्वाभावात्, पवित्रं त इत्यादिमन्त्रस्य 'पवित्र ते विततमिति मुद्रयेद्दक्षिणे भुजे' इति सनकस्मृतिवचनेन विधेयत्वाभिमते कर्मणि विनियोगसत्त्वान्नासिद्धिरिति—वाच्यम् । अत्र सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे एकस्य मन्त्रस्य विधायकत्वाभावेऽपि मन्त्रान्तरस्य तथात्वमादायार्थान्तरं; अवच्छेदकावच्छेदेन तथात्वे भागासिद्धि., पवित्रमन्त्रे हेतुसत्त्वेऽपि चरणादिमन्त्रेषु तदभावात्; प्राप्तार्थत्वस्योपाधित्वादप्रयोजकत्वाच्च समिधो यजतीत्यादिवाक्याना समिधादियागविधायकत्वलैङ्गिकतद्यागविनियुक्तत्वाभ्युपगमवदेकस्मिन् कर्मणि वचनविनियुक्तत्वविधायकत्वयोरभ्युपगमे दोषाभावात् ॥

यत्तु—समिधो यजतीत्यादीनामध्ययनवेलायां विधायकानामेव सतामनुष्ठानवेलायां स्मारकत्वं युक्त, विरोधाभावात्; पवित्रमन्त्रादीनां तु नाध्ययनवेलायां चक्रधारणविधायकत्वं, तेषां तत्प्रत्यायनासामर्थ्यस्य निषेधपरत्वस्य च प्राक् प्रपञ्चितत्वात् । एवं च–पवित्रं ते विततमित्यादिविनियोगवचनबलेन तेषां तत्प्रत्यायनसामर्थ्यमुपजनय्य तद्विधायकत्वमभ्युपगन्तव्यं, ततश्च चक्रधारणस्वरूपमवगमय्य तत्र

मन्त्रविनियोगानन्तरं तत्र विनियुक्तैश्च मन्त्रैः पूर्वप्राप्तमेव चक्रधारणं विधीयत इति वदन् चक्रबन्धोपायदेशिकवत्कथं न हास्यवचन.—इति ॥

तन्न। तेषां मन्त्राणा विधिवाक्यकल्पकत्वाभ्युपगमेऽपि विधायकत्वानङ्गीकारात्, विधायकत्वाङ्गीकारेऽपि न दोष, शब्दसामर्थ्या-दुपबृंहणानुरोधाच्च तेषां तत्प्रत्यायनसामर्थ्यस्य पूर्वमुपपादितत्वात्, निषेधपरत्वस्य च निरस्तत्वाच्च ॥

वस्तुतः—स्मारकत्वविधायकत्वयोर्विरोध एवासिद्धः, तद्विषयकस्मृतिजनकत्वतद्विशेष्यकेष्टसाधनत्वादिप्रकारकबोधजनकत्वयोर्घटमानयेत्यादीनां घटोपस्थितिजनकत्वघटविषयकशाब्दबोधजनकत्ववद्विरोधात् ॥

इति पवित्रादिमन्त्राणां विधायकत्वसमर्थनप्रकारः सम्पूर्णः ॥

**अथेदानीं खिलश्रुतीनां तप्तमुद्राधारणपरत्वं व्यवस्थाप्यते ॥**

"निचिक्षेप सुपर्णं भिद्यमानं मध्येबाहुमदधत्सुदर्शनं। विष्णोरिदं
भूरिदं भूरि तेजः प्रधर्षति दिवानक्तं बिभृयुस्तज्जनासः ॥"
—इति ॥

**अस्यार्थः**॥ मध्येबाहुं—बाह्वोर्मध्ये, वक्षसीत्यर्थः; बाहुद्वयमध्यत्व च—एतद्बाहुसंयुक्तसंयोगपर्याप्तसङ्ख्यासजातीयसङ्ख्यापर्याप्त्यधिकरणबाह्वन्तरसंयुक्तसंयोगवत्त्वं, वक्षस एकबाह्ववधिकयादृशसङ्ख्याश्रयसंयुक्तसंयोगवत्त्वं अपरबाह्ववधिकतादृशसङ्ख्याश्रयसंयुक्तसंयोगवत्त्वान्मध्यत्वोपपत्तेः; साजात्यं च सङ्ख्याविभाजकरूपेण बोध्यम; मूले वृक्षस्संयोगीत्यादाविव सप्तम्या अवच्छेदकत्वार्थकतया मध्येबाहुमित्यस्य वक्षो-

ऽवच्छेदेनेत्यर्थः। न च--मूले बाह्वोर्दधन इति श्रुतौ बाहुमूले सुदर्शनधारणविधानात् तद्विरोधप्रसङ्ग इति--वाच्यम्; वक्षसोऽपि सुदर्शनस्थानत्वस्य वैकल्पिकस्य सम्भवात्। न च--अष्टदोषापत्त्या विकल्पो न युक्त इति--वाच्यम्; तथा सति व्रीहियवविकल्पस्याप्यष्टदोषदुष्टत्वेन परित्यागप्रसङ्गात्। वचनबलं च तुल्यं। वक्षोऽवच्छेदेन सुदर्शनमदधत् अदधानः, वह्नितप्तसम्यसयोगजन्यकिणवत्त्वरूपसम्बन्धप्रयोजकव्यापाराभाववानित्यर्थः। भिद्यमानं--महापातकोपपातकादिरूपेण विभज्यमानः सुषणं--अन्तकरः मरणादिरूपनाशप्रयोजकं पापमितिसामर्थ्याल्लभ्यते; षो अन्तकर्मणीत्यस्य छान्दसाकारलोपे ल्युटि च रूपम्। निचिक्षेप--निहितवान्, निपूर्वस्य क्षिपतेः घटंनिक्षिपतीत्यादौ स्थापनवाचित्वदर्शनात्, स्थापनं चाधेयताप्रयोजकव्यापारः, आधेयतायाश्चाधिकरणसाकाङ्क्षत्वात् स्वात्मनीत्यध्याहारः। तथा च--वक्षोऽवच्छेदेन सुदर्शनधारणाभाववान् स्वात्मनिरूपितपापनिष्ठाधेयताप्रयोजकव्यापाराश्रय इत्युक्त्या धनवान् सुखीत्यादौ धनस्य सुखप्रयोजकत्ववदुक्ताभावस्य पापप्रयोजकत्वलाभात् पापप्रयोजकीभूताभावप्रतियोगित्वरूपनित्यत्वलाभः॥

न च--वक्षोऽवच्छेदेन सुदर्शनधारणाभावस्य पापप्रयोजकत्वे बाहुमूले सुदर्शनधारणवतोऽपि प्रत्यवायापत्तिरिति--वाच्यम्; बाहुमूलावच्छेदेन तदभावविशिष्टस्य वक्षोऽवच्छेदेन तदभावस्य प्रत्यवायप्रयोजकत्वाभ्युपगमात्, विशिष्टस्यानतिरिक्ततया वक्षोऽवच्छेदेन तदभावस्य प्रत्यवायप्रयोजकत्वानपायात्॥

सुदर्शनधारणाभावे दोषान्तरमप्याह--विष्णोरित्यादिना। तं पुरुषं, विष्णोरिदं विष्णुसम्बन्धि सुदर्शनं, दिवानक्तं प्रधर्षति सदा हिनस्तीत्यर्थः। तादृशपुरुषाधिकरणकालत्वव्यापकत्वमेव प्रधर्षणे विवक्षितं, केवलकालत्वव्यापकत्वस्य बाधात्। तादृशशरीरोपलक्षितात्मप्रधर्षण-

परत्वे च केवलकालत्वव्यापकत्वस्यापि सम्भवः; प्रधर्षतीति वर्तमानत्वस्य चाविवक्षैव, प्रयोजनविरहात्—इति ध्येयम् ॥

तत्र हेतुमाह—भूरिदामिति, भूरि द्यति खण्डयति, दो अवखण्डन इति धातोः। तत्रापि हेतुमाह—भूरि तेज इति; भूरि तेजो बलं यस्य तद्भूरितेजः; 'तेजो बले प्रभावेऽग्नौ रोचिष्यर्चिषि रेतसि'—इति वैजयन्ती। तत्—तस्मात्, उक्तहेतुद्वयात्; जनास—जनाः, आज्जसेरसुगित्यसुगागमः। सुदर्शनमित्यनुषङ्गः; बिभृयुरिति—वह्निसन्तप्तस्वसंयोगजन्यकिणवत्त्वरूपसम्बन्धप्रयोजको यः इष्टसाधनत्वकृतिसाध्यत्वाश्रयव्यापारः तदाश्रयाः ॥—इत्यर्थः ॥

एतच्छ्रुतेर्व्याख्यानान्तरं **सच्चरित्ररक्षायां वेदान्ताचार्यैः** कृतं; तच्च तत्रैव द्रष्टव्यम् ॥

**अत्र भास्करः**—निचिक्षेप सुषणमिति श्रुतिर्न सुदर्शनधारणे प्रमाणं, निचिक्षेप सुषणमित्यनेन चक्रधारणनिषेधस्यैव प्रतीतेः। मध्येबाहु—बाहु; मूले, चक्रं, योऽदधत्—न दधाति, दधातेश्शत्रन्तस्य नञ्समासे रूपं. सः—चक्रधारणरहितः पुमान्, चक्रधारणविरोधिसङ्कल्पेन, भिद्यमानं सुषणं—अन्तकरं पापं, निचिक्षेप—अतिशयेन क्षिप्तवान्, तिरस्कृतवान्—इत्यर्थः ॥ यद्वा—वसुसुषणनानि सन्त्वित्यत्र सुषणशब्दस्य षणसम्भक्ताविति धातुनिष्पन्नस्य सम्भजनीयशोभनवाचित्वदर्शनेन निपूर्वकस्य क्षिप प्रेरण इति धातोस्स्थापनरूपनिधानवाचितया भिद्यमानं अनेकविधं शोभनं स्वात्मनि निचिक्षेप निहितवानित्यर्थो ग्राह्यः ॥ यद्वा—अदधदिति न सुबन्तः, किन्तु तिङन्तः। तथा च—यस्सुदर्शनमदधत् दधार, असौ सुषणं शोभनानि, निचिक्षेप—नितरां तिरस्कृतवान्। एवं प्राथमिकव्याख्याद्वयानुसारेण तद्धारणाभावे फलमुक्त्वा तद्धारणे अनिष्टफलमाह—तृतीयपादेन। तृतीयव्याख्याने तु सुदर्शनधारणे शोभनतिरस्कार उक्तः। तत्र हेतुरुच्यते—'विष्णोरिदं भूरिदं

तिरस्कारार्थकत्वकल्पनं प्रथमतृतीयव्याख्ययोरयुक्तम् ॥

**यत्तु**—तज्जना विष्णुजना दासीदासादयो बिभृयुरित्यर्थ —इति। **तन्न**–तत्पदस्य भरणकर्मसुदर्शनपरतया भिन्नपदत्वात्, सुदर्शनमित्य-स्यानुषङ्गे तच्छब्दस्य हेतुपरत्वात्। ऐकपद्येऽपि–तज्जना विष्णुजनाः, तद्भक्ताः--इत्यसङ्कोचेन भगवद्भक्तानां सुदर्शनधारणविधौ विरोधाभा-वाच्च। किं च--अस्यामेव श्रुतौ बिभृयुस्तज्जनास इति चक्रधारणविधा-नान्निचिक्षेपेत्यादेर्न तन्निषेधपरत्वम्, विध्यपेक्षितस्तुत्यादिसमर्पकत्व-स्यैवोचितत्वात्। अपि च-चक्रधारणस्य प्रत्यक्षशतपथश्रुतिविहित-त्वाद्रागादिभिरप्राप्तत्वाच्च कथमस्य मन्त्रस्य तन्निषेधपरत्वम् ॥

**यत्तु**---पञ्चरात्रप्रामाण्यभ्रमवतस्तद्विहितचक्रधारणस्यापि प्राप्तत्वेन तन्निषेधोपपत्तिः, 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति शाक्यागम-प्राप्तासत्त्वानुवादेन 'कथमसतस्सज्जायेत' इति निषेधदर्शनात्॥ यद्वा-पञ्चरात्रागमप्रामाण्येऽपि तद्विहितचक्रधारणस्य देवलकादिविषयतया सर्वत्रैवर्णिकविषयत्वाभावेन भ्रमात्सर्वत्रैवर्णिकविषयतया प्रसक्तस्य चक्रधारणस्य निषेधोऽस्तु। यद्वा–वक्ष्यमाणप्रकारेणास्य मन्त्रस्य भूर्ज-पत्रादिलिखितशङ्खचक्रादिधारणविषयत्वमस्तु---इति। **तन्न**; भग-वच्छास्त्रप्रामाण्यस्य स्थापयिष्यमाणतया प्रमाणसार्वभौमेन तच्छास्त्रेण प्राप्तस्य निषेधायोगात्, शतपथे तप्तं चक्रं द्विभुजे धार्यमित्यधिका-रिविशेषानादरेण विहितस्य तस्य सर्वत्रैवर्णिकविषयत्वावश्यंभावात्, देवलकादिमात्रविषयत्वाभावात्; 'दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्' इतिसर्वत्रैवर्णिकविषयत्वश्रयणाच्च। तत्रत्यविप्रशब्दस्य 'जायमानो वै ब्राह्मणस्त्रिभिऋणवा जायते' इतिश्रुतिगतब्राह्मणशब्दवत् सर्वत्रैवर्णिकपरत्वात्; 'न कळञ्जं भक्षयेत्', 'न परदारान् गच्छेत्' 'सत्यान्न प्रमदितव्यम्' इत्यादिष्वधिकारिविशेषानादरेण विहितेषु सर्व-धर्मत्वदर्शनात्; स्वाराज्यकामो राजा राजसूयेन यजेतेत्यादौ प्रनिय-

तकर्मविधायकेऽधिकारिविशेषोपादानदर्शनाच्च ; वक्ष्यमाणस्मृतिशतैस्सर्वत्रैवर्णिकविषयत्वसिद्धेश्चेति ॥

एवमस्य मन्त्रस्य भूर्जपत्रादिलिखितचक्रादिधारणपरत्वमपि न युक्तम् ;

"हरिचर्यासु युक्तस्य विघ्नं कुर्वन्ति राक्षसाः ।
तद्विघ्नशमनार्थं तु पूजाविल्लाम्बतन्द्रितः ॥
हेमपत्रेऽथवा भूर्जपत्रे वाऽपि सुदर्शनम् ।
निलिख्य पट्टे संवेष्टय बिभृयाद्दक्षिणे भुजे ॥"

इति सुदर्शनाध्यायगतवक्ष्यमाणवचने रेखासुदर्शनाश्रयभूर्जपत्रधारणस्य प्रतिपादनेन तस्य सुदर्शनधारणरूपत्वाभावेनास्याः श्रुतेस्तत्परत्वासम्भववत्, रेखावटादिवटादिपदमुख्यार्थत्वाभावाद्रेखासुदर्शनस्यापि तत्पदमुख्यार्थत्वाभावात् । अस्तु वा तादृशपत्रधारणस्यापि परम्परया सुदर्शनधारणरूपत्वं, तथाऽप्युक्तश्रुतिप्रतिपाद्यसुदर्शनधारणस्य नोक्तवचनप्रतिपाद्येन तेनाभेदसम्भवः; श्रुतौ वक्षसि उक्तवचने च दक्षिणभुजे विधानेन स्थानभेदात् । श्रुतौ पापनिवृत्त्यात्मकफलस्य वचने च भगवदाराधनप्रतिबन्धकीभूतविघ्ननिवारणरूपफलस्यावगमेन फलभेदाच्च । गुणोपसंहारपादे न वाऽविशेषादित्यत्र 'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्' इत्यारभ्योक्ताया बृहदारण्यकगतायास्सत्यविद्याया आदित्यमण्डलाक्षिरूपस्थानभेदेन भेदस्य व्यवस्थापनेन स्थानभेदस्य भेदकत्वावगमात्; 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इति शाखान्तराधिकरणसूत्रे फलसंयोगाविशेषस्य कर्मैकत्वोपपादकत्वोक्त्या तद्भेदस्य तद्भेदव्याप्यत्वावगमात् ॥ एवं—रक्षोघ्नान्वा मन्त्रान् जपेदिति भूर्जपत्रलिखितसुदर्शनधारणस्य रक्षोघ्नमन्त्रपाठेन सह विकल्पस्य वक्ष्यमाणतया श्रुतेस्तादृशसुदर्शनधारणपरत्वे नित्यवच्छ्रवणानुपपत्तिरिति ॥

**साम्नि मैत्रायणीयशाखायां** श्रूयते—"पवित्रमित्यग्निः,
अग्निर्वै सहस्रार, सहस्रारो नेमिः, नेमिना तप्ततनूः, ब्रह्मण
स्सायुज्यं सलोकतामाप्नोति ॥" —इति ॥

**अयमर्थः**—अस्याः श्रुतेः पवित्रं त इति श्रुतिव्याख्यानरूपत्वात्पवित्रमित्यग्निरित्यस्य पवित्रं त इत्यत्र यत्पवित्रपदं तत्तात्पर्यविषयोऽग्निसंसृष्टं सुदर्शनमित्यर्थः। अनेन च पवित्रं त इत्यत्र तापहेतुत्वेन विवक्षितोऽग्निसंयोग उक्तो भवति। 'अग्निर्वै सहस्रार'—अग्निरिति तदेकतापन्नं चक्रमुच्यते, सहस्रार इति सहस्रारपदवाच्यत्वं, सहस्रारो नेमिरिति सहस्रारपदवाच्यस्य नेमिपदवाच्यत्वं चोच्यते, 'चक्रश्चाक्रः पविर्नेमिः पृथक्चक्रस्य वाचका' इति नामानुक्रमण्या माधवाचार्येण नेमिशब्दस्यापि चक्रवाचकत्वाभिधानात्। अत्र—यद्यप्यग्निसंसृष्टस्य चक्रस्य सहस्रारपदवाच्यत्वाभावात् केवलचक्रस्यैव तत्पदवाच्यत्वादग्निर्वैसहस्रार इति न युज्यते; तथाऽप्यग्निसंसृष्टचक्रस्यापि चक्रत्वेन सहस्रारपदवाच्यत्वान्न दोषः॥ ब्रह्मणस्सायुज्यमिति। सायुज्यं—समानभोगादियुक्तत्वं; परमं साम्यमुपैतीतिश्रुतेः, "मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति स्मृतेः, भोगमात्रसाम्यलिङ्गाच्चेति सूत्राच्च । सालोक्यादित्रयस्यापि ब्रह्मसायुज्यान्तर्भावज्ञापनायात्र सालोक्याभिधानं; देवतान्तरप्राप्तौ सालोक्यादिभेदसम्भवेऽपि मुक्तानां तारतम्याभावेन ब्रह्मप्राप्तौ तदसम्भवात्। यद्वा—भगवत्प्राप्तावपि श्रीविष्णुलोकादिषु द्वारकादिष्विव तथाविधभेदसम्भवात्तत्प्राप्तीच्छावतां तादृशफलभेदद्योतनाय सालोक्यस्य पृथङ्निर्देशः। यथाऽऽहुः—

"लोकेषु विष्णोर्निवसन्ति केचित्समीपमिच्छन्ति च केचिदन्ये।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः॥"

—इति॥ यथाभिलषितं ब्रह्मप्राप्तिकामश्चक्रेण तप्ततनूर्भवेदित्युक्तं भवति॥

मया निरूढलक्षणात्वेनादोषात् । उक्तं च **लघुचन्द्रिकायां ब्रह्मानन्देन**—

"मिथ्याशब्दार्थत्वेन रूपेण मिथ्याशब्देन मिथ्यात्वस्य बोधने तु निरूढलक्षणैव, वृक्षो महीरुह इत्यादिकोशवाक्ये व्याख्यानवाक्ये च महीरुहादिपदस्य तत्तत्पदार्थपरत्वेन भूरिप्रयोगात् ॥" —इति ॥

किं च अस्य मन्त्रस्य मृतशरीरसंस्कारपरत्वे [illegible] विनियोगानुपपत्तिः । **पारमेश्वरसंहितायां** चक्रप्रतिष्ठायां विनियुज्यमानमन्त्राणां 'तत्तत्स्थापनकाले तु तत्तन्मन्त्रान् जपेत्' इति सुदर्शनस्थापनाय 'सुरो हरेति [illegible]' इत्यस्य मन्त्रस्य विनियोगाभिधानात् । एवं हारीतस्मृतिविरोधः । यथोक्तं **हारीतस्मृतौ**—

"प्रतप्तशङ्खचक्राद्यैर्[illegible] ।
दक्षिणे तु भुजे चक्रं वामांसे शङ्खकं च ॥
गदां च बाहुमध्ये [illegible] तथा ।
मस्तके तु तथा [illegible] तथा ॥
एवं तापक्रिया [illegible] कलुषापहा ।
अनङ्कयित्वा चक्रेण [illegible] सञ्चरेत् ॥
तत्सर्वं याति विफलमिह पूर्तादिकं नृप ।
अचक्रधारणो विप्रस्सर्वकर्मसु गर्हित ॥
अवैष्णवत्वमाप्नोति नरकं चैव गच्छति ।
चक्रादिचिह्नरहितं ब्राह्मणं कलुषान्वितम् ॥
अवैष्णवं तु तं दूरात् श्वपाकमिव सन्त्यजेत् ।
तस्माच्चक्रं विधानेन तप्तं वै धारयेद्द्विज ॥
सर्वाश्रमेषु समता स्त्रीणां च श्रुतिबोधनात् ।
पवित्रमिति चैवाग्निरग्निर्वै चक्रमुच्यते ॥

अग्निरेव सहस्रारस्सहस्रारो नेमिरुच्यते।
नेमितप्ततनुस्सूर्यो ब्रह्मणस्समतां व्रजेत् ॥
यत्ते पवित्रमर्चिष्मदग्ने तेन पुनीहि न ।
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ॥
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ।
इत्यादिश्रुतिभिः प्रोक्तं विष्णोश्चक्रस्य धारणम् ॥
पुराणेष्वितिहासेषु सात्त्विकेषु स्मृतिष्वपि ।" —इति ॥

यत्तु--प्रथमश्रुतस्याग्निशब्दस्याप्रतीतसम्बन्धपुरस्कारेण सुदर्शने लक्षणाप्रसङ्गः--इति। तन्न; "सोमसूर्यदहनप्रभोज्ज्वलं चक्रमेतदुदितं महामुने" इत्यादिवचनशतैस्तापकालीनप्रत्यक्षेण चाग्निमयत्वसिद्ध्या अग्निसुदर्शनयोस्सम्बन्धस्याप्रतीतत्वाभावात्, तात्पर्यानुपपत्तिवशेन प्राथमिकस्याप्यग्निशब्दस्याग्निर्वै ब्राह्मण इत्यादाविव लक्षणास्वीकारे बाधकाभावात्, तात्पर्यानुपपत्तितदभावयोरेव लक्षणातदभावयोर्बीजतया तत्र प्रथमचरमश्रुतत्वयोरप्रयोजकत्वात्। अग्निपरत्वपक्षे प्राथमिकस्य पवित्रशब्दस्य रूढित्यागो दोषः, पवित्रशब्दस्याग्नौ रूढत्वविरहात्। सुदर्शने रूढिश्च प्रागेव प्रपञ्चिता। अकारप्रश्लेषकल्पनमपि न युक्तं; सुदर्शनधारणाभावस्य मोक्षप्रयोजकत्वेऽपि नातिरात्रे षोडशिनं गृह्णातीत्यादाविव प्रतियोगिनोऽनिष्टसाधनत्वाबोधेन तन्निषेधकत्वायोगात॥ तस्मादियं श्रुतिस्सुदर्शनधारणपरेति सिद्धम् ॥



ऋग्वेदे खिले श्रूयते—"चक्रं बिभर्ति वपुषाऽभितप्तं बलं देवानाममितस्य विष्णोः । स एति नाकं दुरिता विधूय प्रयान्ति यद्यतयो वीतरागाः ॥" —इति ॥

अयमर्थः॥ देवानां बलं—देवानां रक्षकं; इष्टप्राप्त्यनिष्टनिवृत्त्यन्यतरसाधनत्वरूपरक्षकपदार्थैकदेशेऽन्यतरस्मिन्देवसम्बन्धित्वस्य षष्ठ्य-

न्तार्थस्यान्वयः। देवानामित्यस्य वक्ष्यमाणरीत्याऽमितस्येत्यत्रान्वयपक्षे तु सर्वेषामित्यर्थाल्लभ्यते । देवानामित्यस्यैव वा उभयत्रान्वयः । अमितस्य—परिमाणसामान्यशून्यस्य ; अस्थूलमनण्वह्रस्वमदीर्घमित्यनेन ब्रह्मणि चतुर्विधपरिमाणनिषेधात्, परिमाणसामान्याभावविशिष्टद्रव्यत्वमेव विभुत्वमित्यागमप्रामाण्ये स्पष्टत्वात्। यद्वा—परममहत्परिमाणवत्त्वरूपविभुत्वमेवामितत्वं, परिमाणरूपगुणान्तरास्वीकारपक्षे द्रव्यत्वसमानाधिकरणभेदप्रतियोगितानिरूपितसंयोगसम्बन्धावच्छिन्नावच्छेदकताशून्यत्वरूपसर्वद्रव्यसंयुक्तत्वमेवामितत्वं; विभूनामपि परस्परसंयोगाङ्गीकारेण कालादिसंयोगस्यापि विष्णौ सत्त्वात् ॥

**यद्यप्यत्र**—विष्णोरित्यनेनापि निरुक्तव्यापकत्वस्य प्रतीत्या पौनरुक्त्यम्। **तथाऽपि**—विशिष्टवाचकानामिति न्यायेन विष्णोरित्यस्य श्रीपतित्वावच्छिन्ने रूढ्यर्थे तात्पर्याङ्गीकारेऽपि व्यापकत्वरूपयोगार्थे तात्पर्यानङ्गीकारान्न दोषः; अथवा—देवानाममितस्य देवानामपि सङ्ख्यातुमयोग्यगुणसमुदायाश्रयस्य अमितपदस्यार्शआद्यजन्तस्यामिताश्रयपरत्वात्, देवसमवेतापेक्षाबुद्धिजन्यसङ्ख्यापर्याप्त्यनुयोगितावच्छेदकत्वाभाववत्स्वसमवेतगुणत्वव्यापकसमुदायत्वकस्येति यावत्, तेन दशादिगुणेषु देवाद्यपेक्षाबुद्धिजन्यदशत्वादिसङ्ख्यासत्त्वेऽपि न क्षतिः ॥ तादृशस्य विष्णोस्सम्बन्धि; अभितप्तं—वह्नितप्तं, चक्रं; वपुषा बाहुमूलेन; यो बिभर्ति—स्वसंयोगजन्यकिणवत्त्वरूपसम्बन्धप्रयोजकव्यापाराश्रयः। सः—तादृशसुदर्शनधारणविशिष्टः; दुरिता—पुण्यपापे, न सुकृतं न दुष्कृतमित्युक्त्वा 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति दहरविद्यायां पाप्मशब्देनोभयोर्ग्रहणवदत्रापि दुरितशब्देन बन्धहेतुत्वेनोभयोर्ग्रहणात्। स्वसामानाधिकरण्यस्वसमानकालीनत्वोभयसम्बन्धेन दुरितविशिष्टान्यस्तद्ध्वंसोऽवधूननं, प्रतियोगित्वं द्वितीयार्थः; तथा च दुरितप्रतियोगिकतादृशध्वंसोत्तरकालमित्यर्थः; तस्य च नाकमेतीत्य-

स्यार्थे परमपदप्राप्तावन्वयात् चक्रधारणविशिष्टस्तादृशदुरितध्वंसोत्तरकालीनपरमपदप्राप्तिमानित्यर्थे उद्देश्यतावच्छेदकस्य चक्रधारणस्य धनवान् सुखीत्यादाविव विधेयभूतपरमपदप्राप्तौ प्रयोज्यतासम्बन्धेन भानात् अलौकिकश्रेयस्साधनत्वरूपं धर्मत्वं चक्रधारणस्योक्तश्रुत्या प्रतीयते। तदेव परमपदं विशिनष्टि प्रयान्तीत्यादिना। नाकपदस्य परमपदपरत्वं, परमपदस्य यतिप्राप्यत्वं च—'परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति' इति तैत्तिरीयश्रुतिसिद्धम्। अत्र यद्यपि परमपदस्थस्य ब्रह्मणो यतिप्राप्यत्वमुक्तं; तथाऽपि तद्गतस्य प्राप्यतायास्तस्य प्राप्यतावच्छेदकान्तरेणासम्भवात्परमपदस्य प्राप्यत्वमप्युक्तश्रुत्या आक्षेपात्प्रतीयत इति बोध्यम्। वीतरागत्वं च—भगवत्प्राप्तितत्प्रयोज्यकैङ्कर्याद्यतिरिक्तविषयकेच्छासामान्याभाववत्त्वं, तेन मुक्तेष्वपि भगवत्कैङ्कर्यादिकामनायाः 'स यदि पितृलोककामो भवति' इत्यादिश्रुतिसिद्धायाः पितृलोकादिकामनायाश्च सत्त्वेऽपि न क्षतिः; तादृशकामनयोर्भगवत्प्राप्तिप्रयोज्यविषयकत्वेन तदतिरिक्तविषयकत्वाभावात्॥

अत्र भास्करः—असौ श्रुतिर्न सुदर्शनधारणपरा। तथा हि—

"सुदर्शनमयं रूपं धृत्वा स्वर्गापवर्गदम्।
ग्रहज्वरादिसन्तप्तान्बिभर्ति भगवान् हरिः॥"—

इत्याद्युपबृंहणानुसारेण। देवानां बलं विष्णोर्वपुषा वपुरित्यर्थः, आकारादेशश्छान्दसः; एवम्भूतं चक्रं कर्तृकारकं; ज्वरादिभिरभितप्तं सन्तप्तं नरं बिभर्ति रक्षतीत्यर्थः। यद्वा—वपुषा देहेनाभितप्तं सन्तप्तं, केवलदेहस्यात्मसन्तापहेतुत्वाभावात्सन्तप्तेन देहेनेति; अक्ष्णा काण इत्यादौ विकृतेनाक्ष्णेतिवत्सामर्थ्याल्लभ्यते; एवम्भूतमात्मानं बिभर्ति रक्षतीत्यर्थः। सः चक्रेण रक्षितः पुमान् दुरितानि विधूय नाकमेति, यत्र यतयो वीतरागाः प्रयान्तीत्यर्थपरत्वात्। तथा चैहिकामुष्मिकफलकामस्सुदर्शनं पूजयेदिति विध्यर्थः फलति॥ —इति॥

**तन्न**—यद्वाक्यस्य यद्विषयकविधिवाक्यकल्पकत्वं तद्वाक्यस्य तद्विषयकशब्दवृत्त्यर्थापत्त्यन्यतरप्रयोज्यबोधजनकत्वमिति व्याप्तेः पूर्वं स्वयमुक्ततया चक्रं बिभर्तीत्यादिश्रुतेश्चक्रपूजाविषयकबोधजनकत्वाभावेन पूजाविषयकविधिवाक्यकल्पकत्वायोगात् । न च—उक्तश्रुतेरर्थापत्त्या पूजाविषयकबोधजनकत्वं, पूजां विना तस्य फलप्रदत्वासम्भवादिति—वाच्यम्; पूजाया अभावेऽपि ध्यानेन धारणेन योगेन स्तुत्या वा फलप्रदत्वसम्भवेन फलदानस्य पूजाक्षेपकत्वायोगात् । भवदुदाहृतोपबृंहणे सुदर्शनस्य ज्वरादिसन्तापनिवर्तकत्वमात्रबोधेऽपि पूजाध्यानधारणादिरूपद्वारविशेषानुक्त्या कस्यचित् द्वारत्वे कल्पनीये 'न व्याधिदोषस्तस्यास्ति धृतं येन सुदर्शनम्' इत्युपबृंहणान्तरे धारणस्यैव द्वारत्वोक्त्या भवदुदाहृतोपबृंहणस्यापि तत्परत्वकल्पनस्यैव युक्तत्वात् ।

"अग्निनैव तु संयुक्तं चक्रमादाय वै द्विजः ।
धारयेत्सर्ववर्णानां हरिसालोक्यसिद्धये ॥"—

इति वृद्धपराशरवचनानुसारेणैतच्छ्रुतिगतस्य बिभर्तीत्यस्य लेट्कल्पनया एतच्छ्रुतेरेव विधायकत्वोपपत्तौ विधिवाक्यान्तरकल्पनाया अयुक्तत्वात्, धर्मिकल्पनान्यायात्; मन्मते यच्छब्दाध्याहारेऽप्यनेकपदघटितवाक्यकल्पनाविरहेण लाघवानपायात् । विष्णोर्वपुषेत्यस्य चक्रविशेषणत्वमपि न युक्तं, वपुषेत्यस्य विष्णोरित्यनेनान्वये व्यवहितान्वयप्रसङ्गात्, आकारस्य छान्दसत्वकल्पनाप्रसङ्गात्, तादृशविशेषणोपादानस्य व्यर्थत्वाच्च । विशेष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगिवाचकस्य नीलो घट इत्यादौ घटान्तरव्यावृत्त्यर्थमुपात्तस्य नीलादिविशेषणस्य, ज्ञानरूपं ब्रह्मेत्यादौ ज्ञानस्वरूपत्वज्ञापनार्थमुपात्तस्य ज्ञानस्वरूपादिविशेषणस्य, चैत्रः पण्डित इत्यादौ उत्कर्षोपादकस्य च विशेषणस्य दर्शनेऽपि 'यस्य पृथिवी शरीरं' "यस्यात्मा-

शरीरं' 'जगत्सर्वं शरीरं ते' 'तानि सर्वाणि तद्वपुः' इत्यादिश्रुतिस्मृतिसिद्धस्य सर्वसाधारण्यादव्यावर्तकत्वाज्ज्ञातत्वादुत्कर्षानापादकत्वाच्च ॥

न च—सुदर्शनमयं रूपं भूत्वेत्युपबृंहणे जीवाद्वारकधारणस्य विवक्षितत्वाज्जीवानधिष्ठितत्वविशिष्टशरीरत्वं रामकृष्णाद्यवतारेष्विवात्रापि सुदर्शने विवक्षितमिति तादृशविशेषणस्योत्कर्षापादकत्वमिति—वाच्यम्; जीवानधिष्ठितत्वविशिष्टशरीरत्वस्यापि घटादिसाधारण्येनोत्कर्षानापादकत्वात् । न च—जीवानधिष्ठितत्वविशिष्टसाधुपरित्राणादिविषयकसङ्कल्पजन्यशरीरत्वमुत्कर्षप्रयोजकमत्र वपुश्शब्देन विवक्षितमिति—वाच्यम्; तथा सति भवन्मतेऽपि वपुश्शब्दस्य लक्षणापत्त्या अस्मन्मत एव वपुश्शब्दलक्षणादोषोद्भावनस्यानुचितत्वात् । न च—वपुषा सन्तप्तमिति द्वितीयव्याख्याने वपुश्शब्दलक्षणा नेति—वाच्यम्; तत्कल्पे ज्वरादिभिरिति करणाध्याहारावश्यकतया वपुषेत्यस्य वैयर्थ्यस्यैव प्रसङ्गात्, वैयर्थ्यापेक्षया लक्षणाकल्पनस्य ज्यायस्त्वात् । न च—वपुश्शब्दस्य ज्वरादिनप्तदेहपरत्वान्न वैयर्थ्यमिति—वाच्यम्; तथा सति लक्षणाया दुर्वारत्वात्; चक्रपदस्य प्रतिकृतौ लक्षणा च प्रागेव निरस्तेति ॥

---

**अथर्वणि श्रूयते—**

"एभिर्वयमुरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवाम, तद्विष्णोः परमं पदं ये गच्छन्ति हि लाञ्छिताः ॥" —[illegible]॥

**अयमर्थः**—ये यादृशास्तादृशा अपि ब्राह्मणत्वतदभावान्यतरवन्त इति यावत्; उरुक्रमस्य, उरु—अधोभागत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपाधोलोकव्यापकत्वाधोलोकस्थसर्वप्राणिपापनिवर्तकत्वादिरूपप्रभाववान्, क्रमः—पादसंयोगात्मकपादविक्षेपो यस्य

तस्य त्रिविक्रमस्य विष्णोरिति यावत्; तस्य चिह्नैः—विष्णुत्वानुमापकलिङ्गैः। 'राजा निदेशकृदभूदिति धातृसूनोरन्तर्मुदो निरवधेरिदमास चिह्नम्', राजचिह्नमिदमित्यादौ चिह्नशब्दस्य लिङ्गे प्रयोगदर्शनात् ॥

यद्यपि—चक्रादीनां मुक्तादिसाधारण्याद्विष्णुत्वव्याप्यत्वरूपविष्णुत्वानुमापकलिङ्गत्व न सम्भवति। तथाऽपि—स्वाश्रयत्वस्वाश्रयसमानभोगवत्त्वान्यतरसम्बन्धेन विष्णुत्वस्य चक्रादिव्यापकत्वसत्त्वान्नानुपपत्ति। अङ्किता—वह्निसन्तप्ततत्संयोगजन्यकिणवन्त', तद्विष्णोः परमं पदं गच्छन्ति; ज्ञानानन्दात्मकलोकत्व नाशाप्रतियोगित्वादिरूपोत्कर्षवत्त्व—परमशब्देन विवक्षित, तथा च—अङ्किता गच्छन्तीत्युद्देश्यविधेयभावमहिम्ना धनवान् सुखीत्यादिवत् प्रयोज्यप्रयोजकभावलाभादलौकिकश्रेयस्साधनत्वरूपं धर्मत्वमुक्त भवति। अतो वयमप्युरुक्रमस्य चिह्नैरङ्कितास्सन्तो लोके वैकुण्ठलोके सुभगाः शोभनैश्वर्यशालिनः भवाम; शोभनैश्वर्याश्रयनिष्ठमदिच्छाविषयीभूतासाधारणधर्मवन्त इत्यर्थः ॥

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः।
ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा॥"—

इति विष्णुपुराणवचनेन भगशब्दस्यैश्वर्यवाचकत्वाद्भूधात्वर्थासाधारणधर्मे सुभगपदार्थस्याधेयतासम्बन्धेन लोडर्थस्येच्छाविषयत्वस्य च स्वरूपसम्बन्धेनान्वयेनोक्तार्थलाभात् ॥

**महाचार्यास्तु**—य इति तृतीयार्थे व्यत्ययेन प्रथमा, यैश्चिह्नैताास्तद्विष्णोः परमं पदं स्थानं गच्छन्ति, एभिरुरुक्रमस्य चिह्नैरङ्किता वयं तस्मिन् लोके सुभगा भवामेति मुमुक्षूणामनुसन्धानमनेन मन्त्रेण प्रतिपाद्यते—**इत्याहुः** ॥

**न च**—मुमुक्षूणामस्मच्छब्देन परामर्शो न सम्भवति, तस्य स्वतन्त्रोच्चारणकर्तृतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तेः, स्वातन्त्र्यस्य च स्वार्थतात्पर्यकान्यदीयोच्चारणानधीनोच्चारणत्वरूपत्वात्, अहं गच्छामीति स्वतन्त्रोच्चारणस्यापि कश्चित् को गच्छतीत्यादिप्रश्नवाक्योच्चारणाधीनतया तत्स[illegible] स्वार्थपरत्वमुच्चारणविशेषणम्। प्रश्नवाक्यस्य चाहं गच्छामीत्यादि[illegible]गतत्वर्थविशेषणत्वाभावान्नानुपपत्तिः। प्रकृते वयमिति मुमुक्षूच्चारणस्य वाक्यान्तरोच्चारणाधीनत्वेन निरुक्तस्वातन्त्र्याभावादिति वाच्यम्। स्वातन्त्र्यस्य निरुक्तरूपत्वे, यत्र चैत्रेणान्यदीयाचैत्रस्सुन्दर इति वाक्याद[illegible]तीत्याऽहं सुन्दर इति प्रयुज्यते, तत्र स्वातन्त्र्यवाक्यान्तरोच्चारणसापेक्षत्वात्स्वातन्त्र्यानुपपत्तेः ; एवं स्वपाठे[illegible]निपुणपण्डितानामस्य- अयमहं पण्डित इति जानातीत्युच्चारणस्य स्वातन्त्र्यापत्तेश्च। अतो वाक्यान्तरस्थक्रियाकर्मतापन्न[illegible]तया स्वार्थप्रत्यायनेच्छानधीनोच्चारणमेव स्वतन्त्रोच्चारणम्। अहमागच्छामीति चैत्र उवाचेति मैत्रवाक्ये—इत्युवाचेति वाक्यान्तरस्थक्रियाकर्मतया तदर्थघटितवाक्यार्थं प्रतिपादयितुमेव मैत्रेण तद्वाक्यप्रयोगान्मैत्रोच्चारणे स्वातन्त्र्याभावान्मैत्रस्य नाहंपदाद्बोधः। निरुक्तस्वतन्त्रोच्चारणं च वेदस्यास्मच्छब्दस्योपपद्यत इति ॥

**अथैवमपि**—वयमिति बहुवचनानुपपत्तिः ; चैत्रोच्चरितादस्मत्पदात्पदान्तरोच्चारयितुर्मैत्रादेः प्रतीतिप्रसङ्गवारणाय स्वीयस्वतन्त्रोच्चारणकर्तृतावच्छेदकावच्छिन्नेऽस्मच्छब्दस्य शक्तेस्स्वीकरणीयतया वयमित्येकपदस्य बहुभिरुच्चारणासम्भवात्तेन पदेन स्वोच्चारयितुरेकस्यैव बोधात्। न च—तत्पदोच्चारयितुरेकत्वेऽपि ‘अस्मदो द्वयोश्च’ इत्यनुशासनेन बहुवचनविधानादेकव्यक्तिपरस्यापि वयमित्यस्य साधुत्वोपपत्तिः—इति वाच्यम्, ‘सविशेषणस्य प्रतिषेधः’ इति विशेषणपूरित-

स्यास्मच्छब्दस्यैकत्वे बहुवचननिषेधात्, 'एभिर्वयमुरुक्रमस्य चिह्नै-रङ्किता ' इति श्रुतावस्मच्छब्दस्य सविशेषणत्वात्—इति चेन्न । वयमि-त्यस्य स्वघटितसमुदायत्वाश्रयेषु मुमुक्षुषु लाक्षणिकत्वात्तत्र बहुवच-नार्थबहुत्वान्वयोपपत्तेः; अत एव—'त्वं राजा वयमप्युपासितगुरु-प्रज्ञाभिमानोन्नताः', 'वयमनातङ्का विशङ्कामहे'—इत्यादयः कवि-प्रयोगा उपपन्नाः ॥

**यदपि**—सविशेषणस्येति प्रतीकमुपादाय 'इदं मुख्यार्थे बहुवचन-निषेधाय; यदा त्वस्मच्छब्दस्य स्वघटिते उद्भूतावयवभेदे समुदाये लक्षणा, तदा बहुवचनं भवत्येव; तेन त्वं राजा वयमपीत्यादि सिद्धम्'—इत्युक्तं शेखरे । तन्न; लक्षणाङ्गीकारे बहुत्वान्वययोग्यार्थ एव लक्षणाङ्गीकारसम्भवेन तत्रास्मदो द्वयोश्चेत्यनुशासनाप्रवृत्त्या सवि-शेषणस्येत्यस्य सुतरामप्रवृत्तेः, मुख्यार्थ एवेदमिति सङ्कोचकल्पनाया अयुक्तत्वात्—इत्यलमप्रस्तुतविचारेण ॥

**अत्र भास्करः**—मन्त्रार्थवादेतिहासपुराणादिषु भगवतो रूपं तच्चिह्नानि श्रीवत्सकौस्तुभवनमालादीन्युपश्रुत्य तद्रूपध्याने कृत-निश्चयवतां—

"यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति;
स क्रतुं कुर्वीत, तं यथा यथोपासते तथैव भवति ।"
"यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥"—

इत्यादिश्रुतिस्मृतिभिः प्रयाणानन्तरममुष्मिन् लोके स्वेषामपि भगव-च्चिह्नादिप्राप्तिं तादृशदिव्यविग्रहलाभं च भाविनं निश्चिन्वतां मुमु-क्षूणामनुसन्धानमनेन मन्त्रेण निबध्यते । तथा चायमर्थः—सुभगा, भगशब्देन मोक्षार्था बुद्धिरुच्यते; मोक्षार्थज्ञानवन्त इत्यर्थः ।

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥"

इति स्मरणात्। अत्र स्मृतौ ज्ञानशब्देन मोक्षार्था बुद्धिरुच्यते; 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' इत्यमरकोशाभिधानात्। तथा च सुभगाः- मुमुक्षवो वयं, एभिः- मन्त्रार्थवादादिप्रतिपन्नैः, उरुक्रमस्य चिह्नैः—श्रीवत्सकौस्तुभादिभिः, अङ्किताः—लाञ्छिताः, लोके—वक्ष्यमाण-परमपदाख्ये, भवेमेति- मुमुक्षूणां प्रयाणानन्तरभाविभगवत्सारूप्यानु-सन्धानम्। कोऽयं लोक इत्यत्राह -'तद्विष्णोः परमं पदम्' इति। तच्छ-ब्देन लोकः परामृश्यते; स लोक इत्यर्थः; लोकशब्दसमानाधिकरण-स्यापि तच्छब्दस्य पदशब्दापेक्षया नपुंसकलिङ्गनिर्देशः; स लोको-विष्णोः परमं स्थानं; तत्स्थानं विशेषयति 'येऽनुगच्छन्ति लाञ्छिताः' इति। लाञ्छिताः भगवल्लाञ्छनयुक्ताः भगवत्सारूप्यमापन्नाः विष्वक्से-नादयो ये विष्णुमनुगच्छन्ति, नैरन्तर्येणाभितमिति योग्यक्रियाध्याहा-रेण—"यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याद्यै-स्सर्वत्र कटुरेव सः ॥" इत्यत्र वृश्चति सिञ्चत्यर्चयतीति योग्यक्रिया-ध्याहारेणेव पूरणीयम्—इति ॥

तन्न—तथा सति सुभगा इत्यस्य श्रीवत्सकौस्तुभादिप्रकारकध्यान-वन्त इत्यर्थो वाच्यः; अन्यथा यथाक्रतुन्यायविरोधात्, तत्पुरुष-प्राप्यत्वव्यापकं तद्गुणोपास्यत्वमिति न्यायार्थात्। स्पष्टं चेदं तत्क्रतुन्यायवादार्थे ॥ भगवच्छब्दस्य तादृशध्यानवाचकत्वं चा-प्रामाणिकं; उदाहृतविष्णुपुराणवचने ज्ञानशब्दस्य मोक्षहेतुभूत-श्रीवत्सकौस्तुभादिप्रकारकध्यानपरत्वे परमात्मनो भगवच्छब्दमुख्या-र्थत्वानुपपत्तेः, तत्र तादृशध्यानाभावात्। न चेष्टापत्तिः;

"तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥"

-इति योगार्थतावच्छेदकरूढ्यर्थतावच्छेदकयोः परमात्मनि सत्त्वात्तत्र भगवच्छब्दस्य मुख्यत्वमित्यस्य वक्ष्यमाणत्वात्, पूज्यपदार्थोक्ति:— अवयवार्थनिष्ठा शक्ति, योग इति यावत्; परिभाषा—रूढिः, ताभ्यां समन्वित इत्यर्थात्। एवं वक्ष्यमाणयोगरूढिशक्तिप्रतिपादनोपयोगितया प्रवृत्ते भगवच्छब्दार्थविवरणरूपे भवदुदाहृतवचने भगवच्छब्दस्य परमात्मावृत्तिध्यानार्थकत्वकथनस्यात्यन्तमयुक्तत्वात्। किं चात्र लाञ्छिताः सुभगा इत्यनयोर्मध्ये कस्यचिद्धेतुपरत्व कस्यचित्फलपरत्व च युक्तं; उभयोरपि फलपरत्वे हेतुवाचकपदाध्याहारस्य, हेतुपरत्वे च फलवाचकपदाध्याहारस्य प्रसङ्गात्; तत्र च क्रियापदासन्निहितस्याङ्किता इत्यस्यैव वयंपदसन्निहिततया हेतुसमर्पकतायास्सुभगपदस्य क्रियापदसन्निधानेन फलसमर्पकतायाश्च युक्तत्वात्, एव च—नाविहितस्य फलमिति न्यायेन चक्राद्यङ्कनविधिसिद्धे ॥

**यच्चूक्तं**—तद्विशिनष्टि 'येऽनुगच्छन्ति लाञ्छिताः' इति। लाञ्छिताः—भगवल्लाञ्छनयुक्ता विष्वक्सेनादयो ये विष्णुमनुगच्छन्ति तैरतिशोभितमिति पूरणीयम्—इति। तन्न; द्वितीयान्तस्य विष्णुपदस्य अतिशोभितपदस्य चाध्याहारप्रसङ्गात्। न च—अनुगच्छन्तीति पदमहिम्ना उक्ताध्याहारद्वयं न दोषायेति—वाच्यम्, अनुगच्छन्तीति पाठासिद्धेः, गच्छन्तीत्येव पाठात्, सच्चरित्ररक्षासुदर्शनमीमांसादौ तथैवोदाहृतत्वाद्व्याख्यातत्वाच्च। अनुगच्छन्तीति पाठस्य प्रामाणिकत्वेऽपि गच्छन्तीतिपाठ इव पदमित्यनेनैवान्वयोपपत्तेरध्याहारस्यायुक्तत्वात्। न च—अनुपूर्वकगमिधातोर्गमनान्वयव्यतिरेकानुविधायिगमनपरतायाः—

"स्थितः स्थितामुच्चलितः प्रयाता निषेदुषीमासनबन्धधीरः।
जलाभिलाषी जलमाददाना छायेव तां भूपतिरन्वगच्छत्॥"

इत्यादौ दृष्टत्वात् विष्णुमिति पदाध्याहार आवश्यकः, विष्णुगमनान्वयव्यतिरेकानुविधायिगमनानुकूलकृतिमन्त इत्यर्थात्; तत्र

विष्णोर्धात्वर्थतावच्छेदकफलशालित्वाभावेन कर्मणि द्वितीयेत्यनेन द्वितीयाया अप्राप्तावपि कर्मप्रवचनीययुक्त इत्यनेनैव तदुपपत्तेरनोः कर्मप्रवचनीयसञ्ज्ञावत्त्वादिति--वाच्यम् । 'अनु स्वर्गं विन्दति, य एतेन हविषा यजते' इत्यादौ हविर्यागजन्यस्वर्गप्राप्तिमानिति बोधवदत्रापि लाञ्छिता अनुगच्छन्तीत्यनेन लाञ्छनजन्यपरमपदप्राप्तिमन्त इति बोधात् । यज्ञमनुप्रावर्षदित्यादावनुपदस्य जन्यत्वार्थकताया दृष्टत्वात् । अत्र निरूपितत्वरूपद्वितीयार्थस्य यज्ञान्वितस्यान्वर्थे जन्यत्वे तस्य चाश्रयतया वृष्टावन्वयेन यज्ञनिरूपितजन्यतावद्वृष्ट्यनुकूलव्यापारवानिति बोधात् ॥

---

ऋचि बाष्कलशाखायां श्रूयते--

"प्र ते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तरितवे चर्षणीन्द्राः ।
मूले बाह्वोर्दधतेऽन्ये पुराणा लिङ्गान्यङ्गे तावकान्यर्पयन्ति ॥"
---इति ॥

**अयमर्थः** ॥ हे विष्णो, पवित्रे--प्रत्यवायाभावप्रकारकभगवत्सङ्कल्पहेतुभूते । ते अब्जचक्रे--त्वत्सम्बन्धिशङ्खचक्रे, अब्जचक्रपदार्थयोर्द्वयोरेव त इति षष्ठ्यर्थान्वयात् ॥

**ननु**---एवमब्जपदस्य चक्रपदेन साकं समासानुपपत्तिः ; तस्य वृत्त्यघटकपदार्थानन्वितस्वार्थपरत्वरूपसामर्थ्याभावात् षष्ठ्यर्थेनाब्जपदार्थस्यान्वयात् । न च--चैत्रस्य दासभार्या, शरदः शातितपत्रः इत्याद्युपपत्तये वृत्त्यघटकपदार्थानन्वितत्वस्याभेदान्वयस्य विवक्षणीयत्वाद्नानुपपत्तिरिति--वाच्यम् ; तथा सति चैत्रपुत्रदेवदत्तोभयानयनतात्पर्येण चैत्रस्य पुत्रदेवदत्तावानयेति प्रयोगापत्तेः अभेदान्वयनिवेशासम्भवात् , तन्निवेशेऽपि वृत्त्यघटकपवित्रपदार्थेनाभेदान्वयस्यैव सत्त्वेन समासासाधुतापत्तेर्दुर्वारत्वाच्च ॥ मैवं- समासजन्यबोधे

प्रकारभूतो योऽर्थस्तदुपस्थापकपदे सामर्थ्यापेक्षणेऽपि विशेष्यभूतार्थोपस्थापकपदे तदनपेक्षणात्; चैत्रस्य पुत्रदेवदत्तावित्यादिप्रयोगाभावे तादृशसमभिव्याहारस्य तादृशबोधौपयिकाकाङ्क्षात्वाकल्पनादेव तादृशप्रयोगस्य वारणात्। तादृशे अब्जचक्रे, चर्षणीन्द्राः—ज्ञानिश्रेष्ठा, मूले बाह्वोः—बाहुमूलावच्छेदेन, प्रदधते—प्रकृष्टवह्निमन्तप्तस्वसंयोगजन्यकिणवत्त्वरूपसम्बन्धप्रयोजकव्यापाराश्रया इत्यर्थः, व्यवहिताश्चेत्यनुशासनात् प्रशब्दस्य दधत इत्यनेनान्वयात्। धारणघटकसम्बन्धे प्रकर्षश्च शरीराधिकरणकालत्वव्यापकत्वरूपयावद्देहभावित्वम्। धारणस्य फलमाह—जन्माम्भोधि तरन्ति इति। अत्र जन्मशब्देन जन्मजरामरणादिप्रयोजक प्रकृतिमण्डलं लक्षणयाऽभिधीयते, तस्य दुस्तरत्वातिविशालत्वादिना समुद्रसाम्यात्तत्त्वेन रूपणं; तरणं च तीरसंयोगानुकूलव्यापारः, नदीं तरतीत्यादौ स्वाश्रयसंयोगसम्बन्धेन नदीनिष्ठो यस्तीरसंयोगस्तदनुकूलव्यापारकर्तेति बोधात्। उक्तसम्बन्धेन तादृशसंयोगरूपधात्वर्थतावच्छेदकफलवत्त्वाच्च नद्याः कर्मत्वं—जन्माम्भोधेस्तीरं च वैकुण्ठलोक एवेति तत्प्राप्तेरेव सुदर्शनधारणेऽन्वयात्तरणेच्छाधीनेच्छाविषयत्वस्य तरणहेतुत्वव्याप्यत्वादाक्षेपात्तरणहेतुत्वलाभः; उपायेच्छां प्रति फलेच्छायाः कारणत्वात्। एवं शङ्खचक्रे केचिद्धारयन्ति; अपरे तु पुनः परिपूर्णानुष्ठायिनो धर्मप्रवर्तकाः पुरातनाः परमर्षयः पञ्चाप्यायुधरूपाणि तावकानि लिङ्गानि तद्व्याप्यानि पञ्चस्वपि भुजशिखरयुगललाटमध्यहृदयाख्येषु स्वावयवेषु धारयन्तीत्याह—अन्ये पुराणा इति। अत्रायुधं प्रति भगवतो व्यापकत्वं तादात्म्यसमानभोगवत्त्वान्यतरसम्बन्धेन विवक्षितं; अतो मुक्तेषु चक्राद्यायुधसत्त्वेऽपि न क्षतिः, तथा च विकल्पतः पञ्चानामायुधानां शङ्खचक्रयोश्च धारणविधिः॥

अत्र भास्करः- अस्य मन्त्रस्य हरिपूजावसरे अङ्गुलिविन्यासरचित-शङ्खचक्राभिनयधारणविधिपरतया भूर्जादिपत्रलिखितयन्त्रधारणविधि-परतया वोपपत्तेस्तप्तकिणधारणविधिपरत्वमसिद्धम् । इत्थं हि सुदर्श-नाध्यायेऽनुक्रम्यते---

"हरिचर्यासु युक्तस्य विघ्नं कुर्वन्ति राक्षसाः ।
तद्विघ्नशमनार्थं तु पूजावेलास्वतन्द्रितः ॥
हेमपट्टेऽथवा भूर्जपत्रे वाऽपि सुदर्शनम् ।
विलिख्य पट्टं संवेष्ट्य बिभृयाद्दक्षिणे भुजे ॥
शङ्खरेखाङ्कितं चापि पट्टं सव्यस्य मूलतः ।
अथवाऽङ्गुलिमुद्राभिस्सव्यदक्षांसदेशयोः ॥
दर्शयेच्छङ्खचक्रे द्वे रक्षोघ्नान्वा मनून् जपेत् ।" ---इति ॥

तथा चायामर्थः । हे विष्णो चर्षणीन्द्राः- ज्ञानवन्तः, अब्जचक्रे प्र-दधते-यन्त्ररूपेण प्रकर्षेण धारयन्ति ; अन्ये पुराणाः-पुरातना मुनयः, तावकानि लिङ्गानि-तुलसीमाल्यादीन्यपि, स्वाङ्गे अर्पयन्ति-बिभ्र-तीत्यर्थः । किणधारणपरत्वे साक्षाद्विष्णुचक्रस्यास्माभिर्धारणासम्भवात् प्रतिकृतिलोहमुद्रायाश्च दाहकाले बाहूमूले संयोगसत्त्वेऽपि धारणाभावा-त्प्रतिकृतिसिद्धकिणे चक्रादिपदस्य लक्षणा कर्तव्या। मदुक्तार्थस्वीकारे तु तदभिनयादौ लक्षणामात्रमिति मदुक्तार्थपरतैव युक्ता ॥---इति ॥

तन्न। अभिनयधारणपरत्वे अब्जचक्रे इत्यस्य शङ्खचक्रप्रतीति-जनकचेष्टारूपशङ्खचक्राभिनये लक्षणाप्रसङ्गस्य तादृशलक्ष्यार्थैकदेश-योश्शङ्खचक्रयोस्त इत्यस्यान्वयापत्तेश्च दुर्वारत्वात् ; एवं सिद्धपदार्थ-प्रतियोगिकसम्बन्धानुकूलव्यापारस्यैव दधात्यर्थतया तादृशाभिनयस्य चासिद्धत्वेन दधातेरुत्पत्त्यनुकूलव्यापारे लक्षणापत्तेश्च; द्वितीयकल्पे अब्जचक्रपदयोस्तद्व्यञ्जकरेखालाक्षणिकत्वस्य त इति षष्ठ्यर्थस्यैकदेशा-न्वयस्य च प्रसङ्गात् । सिद्धान्ते अब्जचक्रपदयोर्लक्षणाविरहश्च

पवित्रमन्त्रार्थविचार एव प्रपञ्चित ॥ किञ्च—उक्तवचनेषु भूर्जादिपत्र-लिखितचक्रधारणस्य रक्षोघ्नमन्त्रपाठेन सह विकल्पतो विहितत्वाच्छ्रुतौ शङ्खचक्रधारणस्य पञ्चायुधधारणेन साकं विकल्पतो विहित-त्वात्तयोरैक्यासम्भवः; भूर्जादिपत्रलिखितचक्रधारणे विघ्नध्वंसकामस्या-धिकारित्वाच्छ्रुतिविहिते च चर्षणीन्द्रपदाभिधेयस्य विदुषोऽधिकारित्वेन अधिकारिभेदाद्विघ्ननिवृत्तिजन्माम्भोधितरणरूपफलभेदाद्वचनविहितस्य पूजाकालमात्रावच्छेद्यत्वेन श्रुतिविहितस्य तथात्वाभावेन रूपभेदाच्चा-भिनयपरताकल्पे श्रुतौ धारणविधानेन 'दर्शयेच्छङ्खचक्रे द्वे' इति वचने च प्रदर्शनस्य विधानेन चोदनाभेदात् ॥

**यदपि**—विष्णुपूजाप्रतिबन्धकदुरितनिवर्तनद्वारा पूजाङ्गस्यापि पूजाफलभूतजन्माम्भोधितरणसाधनत्वं सम्भवति, अङ्गिफलस्याङ्गे सम्भवात् । सन्न्यासस्य श्रवणाङ्गत्वपक्षे 'एतमेव प्रव्राजिनो लोकमि-च्छन्तः प्रव्रजन्ति' इति वाक्ये श्रवणफलस्य ब्रह्मलोकश्रवणाङ्गे सन्न्यासे प्रतिपादनदर्शनात्—इति । **तन्न;** भक्तिप्रपत्त्यन्यतरस्यैव जन्माम्भोधितरणहेतुतया विष्णुपूजाया अपि तत्फलकत्वाभावेन पूजाङ्गे तत्फलस्य प्रतिपादनमित्यस्यासम्भवात्, पूजाङ्गकभक्त्यादिफलस्य पूजाफलत्वात्तस्य तदङ्गप्रतिपादनमिति परम्पराकल्पने च क्लेशाधि-क्यात्, अस्माकं चर्षणीन्द्रा इति मोक्षहेतुभूतोपासनस्योक्ततया तद्द्वारा जन्माम्भोधितरणसाधनत्वस्य चक्रादिधारणे सम्भवात् ॥

**अपि च**--अस्याश्श्रुतेः पाद्मपुराणे तप्तसुदर्शनधारणपरतयोपबृंह-णान्न भवदुक्तार्थपरत्वसम्भवः । तथा हि **पाद्मे** —

"सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः ।
विधिना वैष्णवं चक्रं धार्यं हि श्रुतिचोदनात् ॥
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥

एवं महोपनिषदि प्रोक्तं चक्रादिधारणम् ।
तथैव साम्नि यजुषि ऋचि प्रोक्तं शुभानने ॥
प्र ते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तरतवे चर्षणीन्द्राः ।
मूले बाह्वोर्दधतेऽन्ये पुराणा लिङ्गान्यङ्गे तावकान्यर्पयन्ति ॥
चरणं पवित्रं विततं पुराणं वाङ्मयं शुभम् ।
तेन चक्रेण सन्तप्ता स्तरेयुः पातकाम्बुधिम् ॥
पवित्रं ब्राह्मणस्पत्यं जगद्व्याप्तं हरेस्सदा ।
तेनातप्ता तनूर्येषां न ते यान्ति परं पदम् ॥
तेन तप्ता तनूर्येषां ते प्रयान्ति हरेः पदम् ॥"

—इत्यादि ॥

**एतेन**—हे विष्णो अब्जचक्रे ते बाह्वोर्मूले दधते धारयन्तीति णिजर्थलक्षणया विष्णुप्रतिमाया बाहुमूले चक्रादिधारणं विधीयते—इति **परास्तम्**। उक्तगाथवचनविरोधात्; पाचयतीत्यादौ पाककर्तृताप्रयोजकव्यापारबोधेन कर्तृताप्रयोजकव्यापारस्यैव णिजर्थतया विष्णुप्रतिमायां धारणानुकूलकृतिमत्त्वरूपधारणकर्तृत्वासम्भवेन णिजर्थलक्षणाकथनस्यायुक्तत्वाच्च ॥ न च--आधेयताप्रयोजकव्यापार एव दधात्यर्थः, त्वत्सम्बन्धिबाहुमूलनिरूपिताब्जचक्रनिष्ठाधेयताप्रयोजकव्यापारबोधादिति—वाच्यम्; तथाऽपि दधातेर्लक्षणादोषात् ॥

**यत्तु**---त्वन्मते चर्षणीन्द्रास्स्वस्वबाहुमूले दधत इत्यर्थाङ्गीकारात्स्वस्वेति पदद्वयाध्याहारकल्पनापत्तेरश्रुतपदाध्याहाराच्छ्रुतपदलक्षणा ज्यायसी--इति। **तन्न**; देवदत्तश्चक्षुषा पश्यतीत्यादौ स्वीयसाक्षात्कारजनकत्वस्यान्यचक्षुष्यसम्भवात् चक्षुष्ट्वेन स्वचक्षुष एव बोधवत्, अब्जचक्रे बाहुमूले दधत इत्यनेन बाहुमूलावच्छेद्यधारणानुकूलकृतिमत्त्वबोधात्स्वकृतिजन्यधारणावच्छेदकत्वस्यान्यबाहावसम्भवेन बाहुत्वेन स्वबाहोरेव बोधात्, स्वस्वेतिपदाध्याहारासिद्धेः अध्याहाराल्लक्षणाया ज्याय-

स्त्वे पिधेहीत्यादेरपि द्वारकर्मकपिधाने लक्षणासम्भवाद्द्वारपदाध्याहारा-नापत्त्याऽध्याहारमात्रोच्छेदापत्तेः, तेशब्दस्याब्जचक्राभ्यां प्रथममन्वितस्य जन्माम्भोधिमित्याद्यसम्बन्धिवाचकपदेन व्यवहितस्य 'व्यवायान्नानुषज्यते' इति न्यायेनानुषङ्गासम्भवे त्वन्मतेऽपि बाह्वोरित्यत्रान्वयार्थं तेपदाध्याहारदोषस्याप्यावर्जनीयत्वात्। उत्तरार्थोक्तिस्विष्टकृते समवद्यतीत्यादिपूत्तरार्थादिशब्दानामिव बाहुशब्दस्यापि ससम्बन्धिकत्वेन सन्निहितचर्षणीन्द्रान्वयस्यैवावश्याभ्युपेयत्वाच्चेति ॥

---

यजुष्यपि कठशाखायां श्रूयते—

"धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ॥
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम् ॥"

—इति ॥

अयमर्थः—धृतोर्ध्वपुण्ड्रः—धारणजन्यसम्बन्धप्रतियोग्यूर्ध्वपुण्ड्राश्रयः ॥ क्तप्रत्ययस्यातीतत्ववाचकत्वेऽपि तस्याविवक्षितत्वान्न बाधः। तथा च—तिलकी कर्म कुर्वीतेत्यादौ कर्मकरणे तिलकसमानकालीनत्वभानवदुद्देश्यतावच्छेदकीभूतस्योर्ध्वपुण्ड्रस्य समानकालीनत्वसम्बन्धेन ध्याने भानाद्ध्यानकाले ऊर्ध्वपुण्ड्रस्यावश्यकत्वलाभः। कृतचक्रधारी—कृतिसाध्यचक्रधारणाश्रयः, कृतश्चासौ चक्रधारश्च सोऽस्यास्तीति कृतचक्रधारीति व्युत्पत्तेः। न च—'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इत्यनुशासनविरोध इति—वाच्यम्; मन्त्रभूतत्वस्याधिकरणकालत्वव्यापकत्वरूपयावद्देहभावित्वादिरूपप्राशस्त्यस्य विवक्षिततया तादृशप्राशस्त्यस्य च मतुपा बोधसम्भवेऽपि बहुव्रीहिणा तदबोधाद्बहुव्रीहेस्तदर्थप्रतिपत्तिकरत्वाभावात्। अत्र चक्रशब्दस्य चक्रशङ्खोभयस्मिन् लक्षणा, वचनान्तरानुरोधात्। परं—बद्धाचेतनोभयव्यावृत्तं, परात्परं—मुक्तसमुदायाद्व्यावृत्तं, महतो महान्तं—स्वरूपतो

गुणतो वा ये पदार्थाः उत्कर्षवन्तस्तेभ्यस्सर्वेभ्योऽप्यतिशयोत्कर्षवन्तं, स्वव्यधिकरणसङ्कल्पाप्रयोज्यसंसारसामान्याभावनिरूपितनिरवच्छिन्नाधिकरणतावद्भिन्नमिति यावत्, तेन च नित्यव्यावृत्तिः। जगत्कारणत्वादिरूपोत्कर्षस्य महतो महान्तमित्यनेन विवक्षणे च परं परात्परमिति पदयोर्वैयर्थ्यापत्तिः; सत्यं ज्ञानमित्यत्रेवात्रापि बद्धाचेतनमुक्तनित्यव्यावर्तकतया विशेषणत्रयसार्थक्यात्। सत्य ज्ञानमिति श्रुत्यर्थविचारश्च लक्षणवादार्थे स्पष्टः। एतादृशं स्वरेण मन्त्रेण सदा हृदि स्थितं—प्रणवाख्येन मन्त्रेण सदा उपस्थितं, प्रणवस्य सर्वकर्माङ्गत्वेन सर्वदा ज्ञायमानत्वात्, ज्ञायमानेन तेन प्रतिपाद्यतया सर्वदा ज्ञातमित्यर्थः। स्वरशब्दस्य प्रणवपरत्वं च—'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः' इति तैत्तिरीयेऽभिधानात्, एकायनब्राह्मणे च 'ओङ्कारस्स्वरः, मकारो व्यञ्जनं, यस्स्वरस्सा प्रकृतिः' इत्युक्तत्वाच्च सिद्धम्॥ स्वरेण मन्त्रेण ध्यायतीति योजनामङ्गीकृत्य प्रतिपाद्यतासम्बन्धेन प्रणवप्रकारकध्यानस्य विवक्षणं तु न युक्तं, तथा सति प्रणवप्रकारकध्यानमात्राङ्गत्वसिद्धावपि सुदर्शनधारणस्योपासनसामान्याङ्गत्वासिद्धिप्रसङ्गात्। तथा च—तेन मन्त्रेण सदोपस्थितं विष्णुं यो ध्यायति स महात्मा भवति। महात्मत्वं च—परमं साम्यमुपैतीति श्रुतिसिद्धमोक्षकालीनपरब्रह्मसाम्यवत्त्वं विवक्षितं, तेन न फलाकथनप्रयुक्तन्यूनता। अत्र यद्धर्मावच्छिन्नविशिष्टपुरुषकर्तव्यत्वप्रकारकयद्धर्मावच्छिन्नविषयकबोधजनकवाक्यत्वं यत्र तत्र तद्धर्मावच्छिन्नाङ्गकतद्धर्मावच्छिन्नपरत्वमिति नियमात्, "शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" इत्यादेश्शमादिविशिष्टकर्तव्यताप्रकारकध्यानविशेष्यकबोधजनकस्य शमाद्यङ्गकध्यानपरतावदूर्ध्वपुण्ड्रचक्रधारणविशिष्टकर्तव्यताप्रकारकतादृशध्यानविशेष्यकबोधजनकस्य धृतोर्ध्वपुण्ड्र इत्यादिकस्योर्ध्वपुण्ड्रचक्रधारणा-

ङ्कध्यानपरत्वावश्यकत्वात्, ध्यायतीत्यादेस्तदङ्गकध्याने लक्षणयोदीच्यमानसन्नोधेनैव तादृशतात्पर्यस्य निर्वाह्यत्वाच्चक्रधारणादेर्मोक्षहेतुभूतोपासनसामान्याङ्गत्वसिद्धिः । न च—परत्वादिप्रकारके विष्णुं परं ध्यायतीत्याद्युक्तोपासने चक्रधारणादेरङ्गत्वसिद्धावपि न ध्यानसामान्याङ्गत्वमिति सद्विद्यादिनिष्ठानां न तद्धारणापेक्षेति—वाच्यम् । **आनन्दादयः प्रधानस्य**—इत्यधिकरणे मोक्षहेतुभूतोपासनसामान्ये सत्यत्वज्ञानत्वानन्तत्वप्रकारकत्वोक्त्या—परं परात्परं महतो महान्तम्—इति विशेषणत्रयस्य सत्यत्वादिधर्मत्रयार्थकतया परत्वादिप्रकारकोपासनसामान्याङ्गत्वस्य परविद्यासामान्याङ्गत्वरूपत्वात्सद्विद्यादिनिष्ठैरप्यनुष्ठेयत्वसिद्धेः। यद्वा—स्वरेण मन्त्रेण विष्णुं ध्यायतीति योजनाङ्गीकारात् 'यत्पुनरेत त्रिमात्रेणोम्' इत्यनेन परमपुरुषमभिध्यायीतेत्याद्युक्तोपासनविशेषाङ्गत्वमेव चक्रादिधारणस्य बोध्यते; तथाऽपि सद्विद्यादिनिष्ठैरप्यनुष्ठेयमेव तद्धारण, उपवीतादिवदङ्गत्वप्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वरूपनित्यत्वात्मकप्राधान्ययोर्द्वयोरेव सत्त्वात् । 'विशिखोऽनुपवीतश्च यत्करोति न तत्कृतम्' इत्यनेनोपवीतादेस्सर्वकर्माङ्गत्वस्य, 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च' इत्यनेन नित्यत्वस्य च प्रतिपादनवच्चक्रादिधारणस्यापि धृतोर्ध्वपुण्ड्र इत्यादिनोपासनाङ्गत्वस्य, 'अतप्ततनूर्न तदामो अश्नुते' इत्यनेन प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वरूपनित्यत्वस्य च सिद्ध्या सर्वेषामप्यावश्यकतासिद्धेः ॥ एतेनास्य मन्त्रस्य भूर्जादिपत्रलिखितचक्रधारणपरत्वमिति निरस्तं; तस्य पूजाङ्गत्वादेतस्य परविद्याङ्गत्वात्, तत्र विघ्नध्वंसकामस्यात्रोपासकस्याधिकारित्वेनाधिकारिभेदात्फलभेदात्, अस्य मन्त्रस्य तप्तमुद्राधारणपरत्वप्रतिपादकपूर्वोदाहृतपाद्योपबृंहणविरोधाच्च ॥

यदपि—कृतश्चक्रधारी येन स कृतचक्रधारीति बहुव्रीहिसमासा-श्रयणादस्य मन्त्रस्य विष्णुप्रतिमानिर्माणविधिपरत्वम्—इति। तन्न—लक्षणावतो बहुव्रीहिसमासात्तच्छून्यस्य कर्मधारयस्य ज्यायस्त्वात्, निरादस्थपत्यधिकरणे लक्षणावत्त्वेन गुरुत्वात्कर्मधारयस्य तद्विरहेण समाश्रयणीयतया व्यवस्थापनात्; स्वरेण मन्त्रेणेति श्रुत्या प्रणवसं-युक्तस्य ब्राह्मणस्यैव प्रतीत्या तस्य शूद्रकर्तृके प्रतिमानिर्माणेऽधि-काराभावाच्च। न च—अस्याश्श्रुतेस्सुवर्णादिभिर्विष्णुप्रतिमां कारयित्वा तद्ध्यानादिविधिपरत्वात्न ब्राह्मणाधिकारिकत्वानुपपत्तिः, कृतचक्रधारी-त्यस्य कारितचक्रधारीत्यर्थात्;

"सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम्।
कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः॥
तामर्चयेत्तां प्रणमेत्तां जपेत्तां विचिन्तयेत्।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्॥"—

इति विष्णुधर्मे विष्णुप्रतिमानिर्मापणपूर्वकं तद्ध्यानविधानात्तत्रापि कृत्वेत्यस्य कारयित्वेत्यर्थादिति वाच्यम्। तथा सति कृतपदस्यापि लक्षणाप्रसङ्गात्। शतपथे- 'तप्तं चक्रं द्विभुजे धार्यमित्यूर्ध्वपुण्ड्र-मालिखेत्' इति तप्तचक्रधारणोर्ध्वपुण्ड्रयोस्सहविधानादिहापि तत्सह-चरितस्योर्ध्वपुण्ड्रस्य विधानेन तत्प्रत्यभिज्ञानाच्चक्रधारशब्देन तप्त-चक्रधारणस्यैव आम्नातया उचितत्वात्॥



अथर्वणि महोपनिषदि ब्रह्मसूक्ते श्रूयते—

"दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः॥" —इति॥

अयमर्थः—विप्रो ब्राह्मणः, भगवच्चिह्नभूतं सुदर्शनं शङ्खं च, बिभृ-यात्—प्रत्ययार्थप्रयोजकीभूताभावप्रतियोगितप्तचक्रादिकर्मकभरणानुकूल-

कृतिमानित्यर्थः। अत्र च धनवान् सुखीतिवद्विप्रो बिभृयादित्यनेन विप्रत्वप्रयुक्तं तद्धारणमिति प्रतीयते; विप्रत्वं हि सर्वान्तरात्मत्वसर्वशेषित्वप्रकारकवासुदेवविशेष्यकज्ञानवत्त्वं, तादृशज्ञानस्य स्वात्मगतशेषत्वानुरूपे शेषिभूतवासुदेवलाञ्छनशङ्खचक्रधारणे प्रयोजकत्वसम्भवात्। अस्य च मन्त्रस्य भूर्जपत्रादिलिखितचक्रधारणपरत्व तूपबृंहणविरोधादिभिः पूर्ववन्निरसनीयम्॥

यत्तु—'तथा चक्राङ्कितो विप्रस्सर्वकर्मसु गर्हित' इति चक्राङ्कितस्य सर्वकर्मनिषेधसामर्थ्यात् 'दक्षिणे तु भुजे विप्र' इत्यत्र विप्रपदं पतितविप्रविषयं विज्ञायते--इति। तन्न; तथाचक्राङ्कित इत्यत्र तथा अचक्राङ्कित इति पदच्छेदात्, अन्यथा एतच्छ्रुतिविरोधेन स्मृतेरेवाप्रामाण्यप्रसङ्गात्॥

यदपि—'दक्षिणे तु भुजे विप्र.' इत्यस्यागमिकमन्त्रत्वेन श्रुतित्वासिद्धेर्न तद्विहितचक्रधारणस्य श्रौतत्वम्—इति। तन्न; पाद्मे—

"सर्वाश्रमेषु वसतां ब्राह्मणानां विशेषतः।
विधिना वैष्णवं चक्रं धार्यं हि श्रुतिचोदनात्॥
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः॥
एवं महोपनिषदि प्रोक्तं चक्रादिधारणम्॥"—

इत्यस्य मन्त्रस्य महोपनिषद्गतत्वाभिधानाच्छ्रुतित्वस्य दुर्वारत्वात्।

"दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्।
सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः॥
इत्यादिश्रुतिभिः प्रोक्तं विष्णोश्चक्रस्य धारणम्॥'—

इति हारीतस्मृतौ तन्मन्त्रस्य कण्ठत एव श्रुतित्वाभिधानाच्च॥

यदपि—पाद्मवचनस्थमहोपनिषत्पदेन पञ्चरात्रस्यैव परामर्शः। महाभारते—'इदं महोपनिषदं चतुर्वेदसमन्वितम्।
साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥'—

इति पञ्चरात्रस्य महोपनिषत्संज्ञया व्यवहारदर्शनात्तत्प्रक्रियानुवादि-पाञ्चवचनस्थितमहोपनिषत्पदेन तत्संहिताविशेषपरामर्शस्योचितत्वात्, चक्रादिधारणस्य पाञ्चरात्रविहितत्वमुभयसम्प्रतिपन्नमिति तत्प्रोक्त-त्वस्यैव दृष्टान्तीकर्तुं युक्तत्वाच्च. प्रसिद्धमहोपनिषदि दक्षिणे तु भुजे विप्र इत्यस्यादर्शनाच्च। तथा च यथा चक्रादिधारणं पञ्चरात्रविहितं तथैव मानवेदादिविहितमिति सदृष्टान्तं श्रुतिचोदितत्वं समर्थितमिति न पाञ्चवचनबलात् दक्षिणे तु भुज इत्यस्य श्रुतित्वसिद्धि'---इति॥

तन्न। महाभारते हि मोक्षधर्मे द्विषष्टिशततमेऽध्याये उपरि-चरवसुवृत्तान्तं पाञ्चरात्रप्रामाण्यप्रकाशकमभिधाय त्रिषष्टिशततमे-ऽध्याये---

"तमुवाच न तं मूर्धा देवानामादिरव्ययः।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः॥
इमं देशमनुप्राप्ता मम दर्शनलालसाः।
न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन॥
ऋते ह्येकान्तिनश्श्रेष्ठात्त्वं चैवैकान्तिनो मतः।"---

इत्यादिना एकान्त्यप्रभावं व्यूहजगत्कारणत्वं चाभिधाय, चतुष्षष्टि-शततमे---

"इदं महोपनिषदं चतुर्वेदसमन्वितम्।
साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥
नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः।
ब्रह्मणस्सदने तात यथादृष्टं यथाश्रुतम्॥
श्रुत्वा ब्रह्ममुखाद्रुद्रस्स देव्यै कथयत्पुनः।

युधिष्ठिरः---

एतदाश्चर्यभूतं हि माहात्म्यं तस्य धीमतः।
किं ब्रह्मा न विजानीते यतश्शुश्राव नारदात्॥

पितामहोऽपि भगवान् तस्माद्देवादनन्तरः ।
कथं स न विजानीयात्प्रभावममितौजसः ॥

भीष्मः—

सर्वस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः ।
जानाति देवप्रवरं भूयश्चातोऽधिकं नृप ॥
येऽप्यन्ये ब्रह्मसदने सिद्धसङ्घास्समाहिताः ।
तेभ्यस्तच्छ्रावयामास पुराणं वेदसम्मितम् ॥"—

इत्यादिका फक्किका दृश्यते ॥ तत्र 'इदं महोपनिषदम्' इत्यत्रेदंपदेनाव्यवहितपूर्वपूर्वस्तुतभगवन्माहात्म्यस्यैव परामर्शो युक्तः, न तु पञ्चरात्रस्य; वसुवृत्तान्तप्रस्तावस्य विच्छिन्नत्वेन तद्घटकपञ्चरात्रस्याप्यनुपस्थितेः । इदं—प्रस्तुतं भगवन्माहात्म्यं, महोपनिषदं—अतिरहस्यं, चतुर्वेदसमन्वितं—चतुर्वेदतात्पर्यविषयीभूतं, पञ्चराात्रानुशब्दितं—पाञ्चरात्रप्रोक्तमित्यर्थात् । इदंमहोपनिषदमित्यस्य पाञ्चरात्रपरत्वे यथादृष्टं यथाश्रुतमित्यस्यासङ्गतिः; पाञ्चरात्रे दृष्टत्वश्रुतत्वयोरसम्भवत्, तयोश्च चाक्षुषज्ञानविषयत्वशाब्दबोधविषयत्वरूपत्वात्, भगवन्माहात्म्ये च तयोस्सम्भवात्; इदंमहोपनिषदमित्यादिना नारदस्य भगवन्माहात्म्यश्रावयितृत्वानुक्तौ—ब्रह्मणः कथं श्रोतृकोटिप्रवेशः, तस्य भगवन्माहात्म्यज्ञानवत्त्वादित्येवंरूपस्य युधिष्ठिरचोद्यस्य 'एतदाश्चर्यभूतं हि माहात्म्यं तस्य धीमतः' इत्यादिनोक्तस्यासङ्गतेः । तथा च—भारतस्थमहोपनिषच्छब्दस्य पाञ्चरात्रपरत्वाभावान्न पाद्मवचनस्थतत्पदस्यापि तत्परत्वमिति ॥

**यदि च**—वसुवृत्तान्ते पञ्चरात्रस्य प्रस्तुतत्वात्तत्प्रधानार्थस्यैकान्त्यस्य व्यूहजगत्कारणत्वादेश्चैतावत्पर्यन्तमनुवृत्तत्वाच्च इदं महोपनिषदमित्यत्र इदमिति पञ्चरात्रस्यैव परामर्शः, ऐकान्त्यस्य श्वेतद्वीप-

निवासिषु दर्शनात्, व्यूहजगत्कारणत्वादेर्भगवतोपदिष्टत्वेन श्रुतत्वाच्च; दृष्टार्थकत्वश्रुतार्थकत्वाभिप्रायेण यथादृष्टं यथाश्रुतमित्यस्योपपत्तेः, पाञ्चरात्रप्रतिपाद्यभगवन्माहात्म्यज्ञानवत्त्वात्कथं पाञ्चरात्राध्येतृत्व ब्रह्मण इत्यभिप्रायेण युधिष्ठिरप्रोक्तस्यान्येषां तदर्थापरिज्ञातॄणां सिद्धानामध्येतृत्वप्रतिपादनेन तत्परिहारस्य च सङ्गतेः। अत एव– 'तेभ्यस्तच्छ्रावयामास पुराणं वेदसम्मितम्' इति सङ्गच्छते; पाञ्चरात्रस्य वेदसाम्यवत्त्वेऽपि माहात्म्यस्य तथात्वविरहात्। अत एव च महाचार्यैः परिकरविजये इदं महोपनिषदमित्यादिकं पाञ्चरात्रपरं व्याख्यातम्---इति विभाव्यते। तदाऽपि न दोषः, पाञ्चरात्रानुशब्दितमिति पदसमभिव्याहाररूपबाधकबलेन महाभारतगतस्य महोपनिषत्पदस्य उपनिषदतिब्रह्मण्यव्यवधानेन वर्तत इत्यव्यवधानेन ब्रह्मप्रतिपादकत्वे सति महत्त्वरूपयोगार्थमादाय लक्षणया वा पाञ्चरात्रपरत्वेऽपि पाठवचनं बाधकानुपलम्भेन रूढ्यर्थत्यागायोगात्॥ न च- तन्मन्त्रस्येदानीन्तनमहोपनिषत्कोशेष्वनुपलम्भेन श्रुतित्वाभाव एव बाधक इति–वाच्यम्; इषेत्वेत्यादेरपि महोपनिषत्कोशेष्वनुपलभ्यमानतया श्रुतित्वाभावप्रसङ्गात्॥

न च–महोपनिषद्घटकश्रुतित्वाभावं प्रति महोपनिषत्कोशेष्वनुपलभ्यमानत्वव्याप्यतया न दोष इति–वाच्यम्; महोपनिषत्कोशेष्वनुपलभ्यमानत्वं हि यत्किञ्चित्कोशेष्वनुपलभ्यमानत्वं कोशसामान्ये वा? । नाद्यः, लेखकप्रमादादिदुष्टकोशेष्वनुपलभ्यमानत्वस्य तद्घटकमन्त्रेष्वेव सत्त्वेन व्यभिचारात्। न द्वितीयः, अस्मदादीनां कोशसामान्यज्ञानाभावेन हेतोर्दुर्ज्ञेयत्वात्। प्रत्यक्षाविषयीभूतकोशसामान्येऽनुपलभ्यमानत्वस्य हेत्वर्थत्वेऽपि न निस्तारः; तादृशहेतोः सर्वस्य वशिन इत्याद्यष्टवात्मकब्रह्मसूक्तघटकेऽस्मिन्मन्त्र इव तत्सूक्तेऽपि सत्त्वेन

त्वस्यापि महोपनिषद्घटकश्रुतित्वाभावप्रसङ्गात् । न चेष्टापत्तिः; पारमेश्वरसंहितायां प्रतिष्ठाध्याये—

"एवं संस्थाप्य विधिवन्नवभि कलशैस्तत. ।
स्नापयेद्ब्रह्मसूक्तस्थैर्मन्त्रैरष्टाभिरेव च ॥"                    —इति;

तथा स्नापनाध्याये—

"पौरुषेण तु सूक्तेन समस्तेन शनैश्शनै. ।
स्नापयेद्देवदेवेशं मध्यस्थनवकेन तु ॥
यद्वा सर्वस्य वशिन इत्याद्यैर्मनुभि क्रमात् ।
महोपनिपदन्तस्थैर्दिक्स्थितै. कलशाष्टकै ॥
एक एव नारायण इति मध्यगतेन तु ।"—

इत्यादिवचनेन तत्सूक्तस्य तदन्तर्गतत्वनिश्चयात् । अत्र महोपनिषन्मध्यगता हि सहस्रशीर्षेत्याद्या एकोनविंशतिर्मन्त्रा., तत्रोपरितना अष्टौ मन्त्रास्सर्वस्य वशिन इत्याद्या ब्रह्मसूक्तम्, तत्र दक्षिणे तु भुजे विप्र इति पञ्चमो मन्त्रः, एक एव नारायण इति महोपनिषदाद्यो मन्त्र इति बोध्यम् । किं च महोपनिषत्कोशेष्वनुपलभ्यमानत्वान्महोपनिषद्घटकत्वाभावे पाञ्चरात्रेपु तन्मन्त्रपाठस्य क्वाप्यनुपलम्भेनागमिकमन्त्रत्वस्याप्यभावप्रसङ्गात् । अपि च 'विधिना वैष्णवं चक्र धार्यं हि श्रुतिचोदनात्' इत्युक्ते केयं श्रुतिरित्याकाङ्क्षायां, 'दक्षिणे तु भुजे विप्रः' इत्यस्य तन्निवर्तकत्वेन पाठनाद्नागमिकमन्त्रत्वं; अन्यथा आकाङ्क्षाया अनिवृत्तेरिति ॥

यदपि—'तेन पवित्रेण शुद्धेन पूताः' 'गोविन्दुर्द्रप्स आयुधानि बिभ्रत्' 'मध्ये बाहुमदधत्सुदर्शनं' 'मूले बाह्वोर्दधतेऽन्ये पुराणाः' 'बिभृयाद्वै सुदर्शनं' 'धृतोर्ध्वपुण्ड्रः कृतचक्रधारी' इत्यादिपु सुवर्ण भार्यमित्यादाविवाभरणरूपेणैव बालग्रहनिवारणार्थं सुदर्शनादिधारण विधी-

यते। तथाऽऽह बृहस्पतिः—

"जातस्य तु कुमारस्य धारयेत्पञ्चमे दिने।

चक्रं कृत्वा सुवर्णेन पद्मरं मन्त्रसंयुतम् ॥" —इति ;

शाण्डिल्योऽपि—

"कारयित्वा सुवर्णेन पञ्चायुधगणं हरेः।

बध्नीयात्कण्ठदेशेषु बालानां सूतिकागृहे ॥

मुक्तामणिसुवर्णाद्यैः कृत्वा चक्रादिभूषणम्।

यथार्हं बिभृयुस्सर्वे पुमांसस्त्रीजनोऽपि वा ॥" —इति।

एवं स्मृतिपुराणादिष्वपि द्रष्टव्यम्—इति॥ तदपि न सत् ; तेन पवित्रेण शुद्धेनु पूताः, गोविन्दुर्द्रप्स आयुधानि बिभ्रत्, मध्ये बाहुमदधत्सुदर्शनं, मूले बाह्वोर्दधतेऽन्ये पुराणाः, धृतोर्ध्वपुण्ड्रः कृतचक्रधारी—इत्यादिषु प्रतिपन्नं चक्रधारणं 'जातस्य तु कुमारस्य' इत्याद्युक्तसुवर्णाभरणरूपचक्रधारणाद्भिन्नं; फलभेदात्, वचनोक्तस्य बालग्रहनिवारणफलकत्वात्, श्रुत्युक्तस्य च पापनिवृत्तिद्वारा ब्रह्मप्राप्तिफलकत्वात्; अधिकारिभेदाच्च, वचनोक्ते बालस्य श्रुत्युक्ते च मुमुक्षोरधिकारित्वात्। एवं तादृशश्रुतिप्रतिपन्नचक्रधारणं तप्तमुद्राधारणाभिन्नं; तत्समानफलकत्वात्। फलैक्ये कर्मैक्यं, फलभेदे भेदश्च सर्वशाखाप्रत्ययसर्ववेदान्तप्रत्ययन्यायाभ्यां सिद्धः; समानफलकानां नानाशाखोक्तानामग्निहोत्राणामैक्यस्य सर्वशाखाप्रत्ययन्यायेन पूर्वतन्त्रे व्यवस्थापनात्, उत्तरतन्त्रेऽपि समानफलकानां छान्दोग्यबृहदारण्यकोक्तानां वैश्वानरविद्यानामैक्यस्य व्यवस्थापनात्। न चैवमपि—'दक्षिणे तु भुजे विप्रः' 'धृतोर्ध्वपुण्ड्रः कृतचक्रधारी' इति श्रुत्युक्तधारणयोस्तप्तमुद्राधारणरूपत्वं न सिध्यति, तयोः फलाश्रवणादिति—वाच्यम्; प्रागुदाहृतपाद्मवचनेन हारीतस्मृतिवचनेन च 'दक्षिणे तु भुजे विप्रः' इत्यस्य तप्तचक्रधारणपरतयोपबृंहितत्वात्तत्परत्वस्य, धृतोर्ध्वपुण्ड्र

इत्यस्य च 'तप्तं चक्रं द्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिखेत्' इति शतपथश्रुत्यनुसारेण तप्तमुद्राधारणपरत्वस्य सिद्धेरिति ॥

यत्तु—'निचिक्षेप सुपर्णं भिद्यमानं' 'पवित्रमित्यग्निः' 'एभिर्वयमुरुक्रमस्य चिह्नैः' 'प्र ते विष्णो' 'धृतोर्ध्वपुण्ड्रः'—इत्यादिमन्त्राणां प्रचरदवस्थशाखास्वनधीयमानतया श्रुतित्वसन्देहात्कथं चक्रधारणे प्रामाण्यम्—इति । तन्न; प्रचरदवस्थशाखास्वनधीयमानत्वस्य श्रुतित्वतदभावसहचरितत्वेन साधारणधर्मतया श्रुतित्वसन्देहप्रयोजकत्वेऽपि तादृशसन्देहविशेष्यत्वस्याप्रामाण्यव्याप्यत्वाभावात्; महाभारते सारस्वतोपाख्याने तैत्तिरीयशाखायाश्श्रुतित्वसन्देहस्य प्रतिपादनेन तादृशसन्देहविशेष्यस्यापि प्रामाण्यदर्शनात् ॥

न च—सारस्वतोपाख्याने चतुष्षष्टिमुनिगणसहस्रेषु चतुष्षष्टिसहस्रवेदानध्यापितेषु साकल्येन तैत्तिरीयशाखामधीतवतां केषांचिन्मुनीनामनुष्ठानक्रमानुगुणपाठक्रमाभावेन शाखान्तरविलक्षणायां तैत्तिरीयशाखायां श्रुतित्वसन्देहवतां सनत्कुमारप्रभृतिभिर्ब्रह्मर्षिभिरपि तच्छाखायां वेदत्वस्य निश्चेतुमशक्यतया चतुर्मुखनिकटं गतानां तद्वचनेन तच्छाखायां वेदत्वनिश्चयस्य जातत्वान्नानुपपत्तिः । वेदत्वनिश्चयाभावे तज्जन्यबोधे प्रामाण्यनिश्चयाभावेनाप्रामाण्यशङ्कासद्भावादप्रामाण्यज्ञानानास्कन्दितप्रमात्मकबोधजनकत्वरूपप्रामाण्यासद्भावाद्वेदत्वप्रकारकनिश्चयाविशेष्यत्वस्याप्रामाण्यव्याप्यताया विवक्षितत्वादिति—वाच्यम्। तथा सति स्मृत्यादेरप्यप्रामाण्यापत्तेः, तस्यापि वेदत्वप्रकारकनिश्चयाविशेष्यत्वात् । वेदत्वतन्मूलकत्वान्यतरप्रकारकनिश्चयाविशेष्यत्वस्य शब्दगतप्रामाण्याभावव्याप्यत्वमित्यपि न सम्भवति; 'यज्ञोपवीतं परमं पवित्रं', 'प्रसुग्मन्ता धियसानस्य सक्षणि' इत्यादिमन्त्राणां प्रचरदवस्थशाखास्वनधीयमानत्वेन श्रुतित्वनिश्चयाभावेन प्रामाण्याभावापत्तेः ॥

न च–कल्पसूत्रकारोपात्तत्वाद्यज्ञोपवीतादिमन्त्राणां श्रुतित्वनिश्चय-सम्भव इति–वाच्यम्; तथा सति परमाप्तप्रणीतभगवच्छास्त्रोपात्तत्वा-दमीषामपि मन्त्राणां श्रुतित्वसिद्धेर्निष्प्रत्यूहत्वात्। तथा हि पारमे-श्वरसंहितायामुत्सवाध्याये–

"दक्षिणे तु भुजे विप्र इति प्राक्संस्थितेन तु।
निचिक्षेप सुपर्णमिति वह्निगतेन तु॥
प्र ते विष्णो अब्जचक्रे इति याम्यगतेन तु।
एभिर्वयमुरुक्रमस्येति यातुधानगतेन तु॥
धृतोर्ध्वपुण्ड्र कृतचक्रेति पश्चिमगेन तु।
पवित्रमित्यग्निरिति ततो वायुगतेन तु॥
चरणं पवित्र विततमिति सोमगतेन तु।
लोकस्य द्वारमर्चिमदिति रुद्रगतेन तु॥
मन्त्रैरेतैस्तु चाष्टाभिरन्यैस्सौदर्शनैस्तथा।
संस्नाप्य मन्त्रकुम्भेन शुद्धादैरभिषिच्य तु॥" —इति,

तथा कालोत्तरसंहितायां सुदर्शनसमाराधनाध्याये–

"एवं प्रासादशिखरे चक्रं संस्थापयेद्बुधः।
द्वादशारमथाष्टारं षडरं वा महामते॥
संस्थाप्य विधिवत्कुम्भे मन्त्रैर्द्वादशभिः क्रमात्।
दक्षिणे तु भुजे विप्र इति क्षीरेण सेचयेत्॥
निचिक्षेप सुपर्णमिति दधिना स्नापयेत्ततः।
प्र ते विष्णो इत्यनेन घृतेनैवाभिषेचयेत्॥
एभिर्वयमुरुक्रमस्येति मधुना स्नापयेद्बुधः।
धृतोर्ध्वपुण्ड्रः कृतचक्रेतीति इक्षुरसेन तु॥
पवित्रमित्यग्निरिति पञ्चगव्येन सेचयेत्।"

इति नानाप्रदेशेष्वेतेषां मन्त्राणामुपादानसत्त्वात्, कल्पसूत्रोपात्तमन्त्र-वदमीषामपि श्रुतित्वस्य दुर्वारत्वात्॥

यत्तु—सत्यमेते पाञ्चरात्रोपात्ताः, नैतावतैतेषां मन्त्राणां श्रुतित्वं सिध्यति, तान्त्रिकमन्त्रत्वेनाप्युपपत्तेः । तान्त्रिकमन्त्राणामपि 'अलाभे वेदमन्त्राणां पाञ्चरात्रोदितेन वा'—इतिवाराहवचनेन तत्तत्कर्मसु विनियोगदर्शनात्—इति—तन्न ; उक्तमन्त्राणां पाञ्चरात्रवचनत्वे प्रतीकग्रहणपूर्वकविनियोगानुपपत्तेः । न च—आश्वमेधिकादौ 'नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत्' इत्यादिना

"नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥"

इत्यादीनां प्रतीकग्रहणपूर्वकविनियोगाच्छ्रुतित्वापत्तिरिति—वाच्यम् ; इष्टत्वात्, 'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्'—इत्यादीनां श्रीविष्णुपुराणे पाठसत्त्वेऽपि श्रुतित्ववत्तस्य श्रीविष्णुधर्मादौ पाठसत्त्वेऽपि श्रुतित्वाविरोधात् । छान्दसशब्दबाहुल्यविशिष्टप्रतीकग्रहणपूर्वकविनियोगवत्त्वस्य श्रुतित्वव्याप्यत्वाङ्गीकारेण नमो ब्रह्मण्यदेवायेत्यादेः श्रुतित्वविरहेऽपि बाधकाभावात् । एवं तादृशप्रतीकग्रहणपूर्वकविनियोगस्य श्रुतित्वासाधकत्वे यज्ञोपवीतादिमन्त्राणामपि श्रुतित्वानुपपत्तिः ; स्मृत्युपात्तस्य स्मार्तमन्त्रत्वेनाप्युपपत्तेः, स्मृतिवाक्यानामपि 'यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान्' इत्यादिना ब्रह्मयज्ञे विनियोगदर्शनात् । किं च पारमेश्वरसंहितायामेव चक्रप्रतिष्ठाध्याये—

"तत्तत्स्थापनकाले तु तत्तत्संज्ञान् मनून् जपेत् ।
विद्यां गदामित्याद्यं यत्पाठयेत्तद्विदो जनान् ॥
चमूषच्छ्येन इति प्र ते विष्णो इति त्वृचौ ।
पाठयेद्बह्वृचान्पश्चाच्छाकुनं सूक्तमेव च ॥
धृतोर्ध्वपुण्ड्रः कृतचक्रेति मन्त्रं कठान् परम् ।
पवित्रं ते विततमित्येतन्मन्त्रं यजुर्मयान् ।
क्षुरो हरेति सामज्ञानपवित्रमित्यग्निरित्यपि ॥

एभिर्वियमुरुक्रमस्येत्याथर्वणविदो जनान् ।
एवं संस्थाप्य त्रिधिवन्नवभिः कलशैस्ततः ॥"

इत्यादिना तत्तच्छाखाध्यायिपुरुषजप्यत्वेन तन्मन्त्राणां विधानं दृश्यते । तद्विधानं च तत्तच्छाखिनां तत्तच्छाखास्थमन्त्राध्ययनसम्भवेन जपशैघ्र्यरूपदृष्टप्रयोजनार्थम् ; तच्च दृष्टं फलं तेषां मन्त्राणां तत्तच्छाखागतत्वमन्तरेणानुपपन्नमिति तेषां तत्तच्छाखागतत्वं सिध्यति॥

यदपि—चमूषन्मन्त्रशाकुनसूक्तपवित्रादिमन्त्राणां जपशैघ्र्यप्रत्यायनायैव तत्तच्छाखिपुरुषविशेषाणामुपादानात्, तथाऽऽनुषङ्गिकतया 'प्र ते विष्णो' इत्याद्यागमिकमन्त्राणामप्युपादानम्—इति ॥

तन्न—विकल्पासहत्वात् । तथा हि--आनुषङ्गिकतया आगमिकमन्त्राणामुपादानमित्यस्य कोऽर्थः ? । जपशैघ्र्यप्रत्यायनरूपफलमनुद्दिश्यैव पुरुषविशेषजप्यत्वेन विधानमित्यर्थः, उत पुरुषविशेषजप्यत्वे तात्पर्यमेव नास्तीत्यर्थो वा ? नाद्यः—तादृशफलोद्देशाभावे सामान्यतो जपविधानस्यैव युक्तत्वेन पुरुषविशेषकर्तृकजपविधानानुपपत्तेः ; न चादृष्टार्थं तथाविधानमिति वाच्यम् ; चमूषन्मन्त्रादौ दृष्टप्रयोजनमत्रादृष्टप्रयोजनमित्यर्धजरतीयन्यायापत्तेः । न द्वितीयः—पुरुषविशेषजप्यत्वेन स्फुटतरविधानसत्त्वे तथा तात्पर्यं नास्तीत्यस्य वक्तुमशक्यत्वात्, चमूषन्मन्त्रादौ पुरुषविशेषजप्यत्वे तात्पर्यं, प्र ते विष्णो इत्यादौ तथा तात्पर्यं नास्तीति वैषम्याङ्गीकारे बीजाभावात्, विनिगमनाविरहेण वैपरीत्यप्रसङ्गाच्च ॥

यत्तु—एते नैकस्मिन्नेव संहिताविशेषे पठिताः, किं तु कस्मिंश्चित्संहिताविशेषे कश्चिन्मन्त्रः, ते च संहिताविशेषा आपस्तम्बादिकल्पा इव तत्तच्छाखिनः प्रतिव्यवस्थिता एव । तथा च—अनेकसंहिताविशेषयुक्तस्य पाञ्चरात्रस्य य एव कश्चित्संहिताविशेषः केनचिच्छाखिना नियमेन परिगृहीतः, तच्छाखिनस्तत्संहिताविशेषगतो

मन्त्र आगमिकोऽपि स्वभ्यस्तो भवतीत्यनेनाभिप्रायेण तत्तच्छाखाध्यायिपुरुषजप्यत्वविधानं भवति सुतरां दृष्टार्थम् । यथा हि गौतमधर्मशास्त्रस्य च्छन्दोगैरेव परिगृहीतत्वात्तद्घटकसूत्रवाक्यान्यपि छन्दोगानामेव स्वभ्यस्तानि भवन्तीति तत्सूत्रवाक्यपरिज्ञानाय छन्दोगा एवान्विष्यन्ते; तथा धृतोर्ध्वपुण्ड्र इति मन्त्रः कठशाखिपरिगृहीतपञ्चरात्रसंहिताविशेषगत इति तन्मन्त्रजपाय कठान्वेषणमुपपद्यते। कथं पुनरवगम्यते—पञ्चरात्रसंहिताविशेषेषु काश्चित्संहिताविशेषः कस्य चिदेव शाखिनो नियत इति? पारमेश्वरसंहितादिवचनैरिति वदाम.। इत्थं हि पारमेश्वरसंहितावचनम्—

"समेत्य मुनयस्सर्वे भगवन्तमथाब्रुवन् ।
भगवंस्त्वत्कृतं शास्त्रं त्वत्कृतत्वेन नित्यशः ॥
न शक्ता वयमध्येतुमुपायं त्वत्र नो वद ।
इति विज्ञापितस्तैस्तु वासुदेवस्सनातनः ॥
अनेकसंहिताभेदैः पञ्चरात्रं विभज्य तु ।
एकैकं संहिताभेदं प्रादादेकैकशाखिने ॥
ते तु तत्संहिताभेदस्थितैर्मन्त्रैः पृथक्पृथक् ।
आराध्य समनुप्राप्ता वैष्णवं परमं पदम् ॥" —इति ॥

तस्मात्सिद्धमेतेषां मन्त्राणामागमिकत्वेऽपि तत्तच्छाखाध्यायिपुरुषजप्यत्वविधानं दृष्टार्थमुपपन्नमिति न तद्बलादेतेषां मन्त्राणां श्रुतित्वसिद्धिः ॥ —इति ॥

अत्रोच्यते—तत्तच्छाखिपुरुषजप्यत्वविधानस्य तत्तच्छाखिकर्तृकशीघ्रजपकर्मत्वकल्पकतया तस्य च तत्तच्छाखिपुरुषाभ्यस्तमन्त्रत्वव्याप्यतया तदनुमापकत्वमेव, न तु तत्तच्छाखाघटकमन्त्रत्वानुमापकत्वं ; तत्तच्छाखिपुरुषाभ्यस्तसंहिताघटकमन्त्रस्यापि तत्तच्छाखिपुरुषकर्तृकशीघ्रजपकर्मत्वसम्भवात्तद्व्याप्यताविरहात्—इति हि भवदभिप्रायः ।

स न्यायुक्त ; तत्तच्छाखिपुरुषकर्तृकशाखाजपकर्मत्वस्य, तत्तच्छाखाघटक मन्त्रत्वाव्याप्यत्वेऽपि छान्दसशब्दबाहुल्यविशिष्टस्यागमाघटकत्वविशिष्टस्य वा तस्य तत्तच्छाखाघटकत्वव्याप्यतया तत्तच्छाखाघटकत्वसिद्धेर्दुर्वारत्वात् । आगमाघटकत्वं च पारमेश्वरसंहितायामन्यस्यां वा एतेषां मन्त्राणां पाठाभावादेव सिद्धम् । पारमेश्वरसंहितायां प्रतीकग्रहणेऽपि नागमिकमन्त्रत्वं, तथात्वे पवित्रमन्त्रादेरपि तथात्वप्रसङ्गादिति बोध्यम् ॥

एवमेतेषां मन्त्राणामभियुक्तोपदेशादपि तत्तच्छाखागतत्वं श्रुतित्वं च सिध्यति ॥

यत्तु—यो हि यमर्थं दृढतरप्रमाणेन निश्चित्य परस्मै वाक्यं प्रयुङ्क्ते स तस्मिन्नर्थेऽभियुक्तो भवति ; न चाधुनिकानां त्वदीयानां बाष्कलशाखादिपरिज्ञानं सम्भवति, तासां प्रचरद्वस्थत्वाभावेन ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्त इत्यापस्तम्बादिवचनैश्चिरकालमेवोच्छिन्नत्वावगमात् ; विप्रकीर्णशाखापक्षेऽप्यर्वाचीनानां तावच्छाखापरिज्ञाने सामर्थ्याभावात्—इति । तत्रोच्यते ; दृढतरप्रमाणजन्ययादृशार्थविषयकनिश्चयप्रयोज्ययादृशार्थविषयकबोधेच्छाधीनवाक्यप्रयोक्तृत्वं यस्य तस्य तादृशार्थेऽभियुक्तत्वमिति हि भवता विवक्षितम् ; तन्न युक्तम् ; गीतोपदेष्टुर्भगवतः प्रमाणजन्यनिश्चयाभावेन तस्य तदर्थेऽभियुक्तत्वाभावापत्तेः । न च—निश्चये प्रमाणजन्यत्वमनिवेश्य प्रमाणाजन्यत्वजन्यत्वोभयाभाववत्त्वं विवक्षितं, भगवत्साक्षात्कारस्य जन्यत्वे प्रमाणजन्यत्वस्य सत्त्वात्, अजन्यत्वपक्षे च जन्यत्वस्यैवासत्त्वेनोभयाभाववत्त्वसत्त्वान्नानुपपत्तिरिति—वाच्यम् ; तथाऽपि निरुक्ताभियुक्तत्वस्यास्मदाचार्यव्यावृत्तत्वाभावात्, अस्मदाचार्याणामुक्तश्रुतिषु तत्तच्छाखागतत्वस्य श्रुतित्वस्य चाप्तोपदेशादिभिर्ज्ञातत्वात्, आप्तोपदेशस्य च प्रमागतायास्सर्वैरङ्गीकार्य

स्यात्; अन्यथा भवतां ब्राह्मण्यगोत्रविशेषशाखाविशेषादीनामसिद्धि-प्रसङ्गात्; अयं ब्राह्मणः अयममुकगोत्रः अयमेतच्छाखावानित्यादे-रुपदेशपरम्परयैव ज्ञातत्वात्, बाष्कलशाखादीनां प्रचरदवस्थत्वा-भावेन तच्छाखाया अपरिज्ञानेऽप्युदाहृतमन्त्रविशेष्यकतच्छाखात्व-प्रकारकज्ञाने सम्पूर्णशाखापरिज्ञानस्यानुपयोगात्। न हि—इषेत्वे-त्यादिमन्त्रे यजुर्वेदत्वज्ञानं सम्पूर्णयजुर्वेदज्ञानाधीनं; किं तु याद्दशश्रुतौ यजुष्ट्वादिकं ज्ञातव्यं ताद्दशश्रुतिज्ञानाधीनम्; प्रकृते च सम्पूर्णबाष्कलशाखापरिज्ञानाभावे श्रुतिव्यक्तिविशेषे तच्छाखात्व-ज्ञानमाप्तोपदेशादेर्दुरपह्नवम्॥

यदपि—कल्पसूत्रकारादिपरिग्रह एव वेदत्वसाधको नाधुनिक-परिग्रहमात्रं; अन्यथा महाव्रतस्य पञ्चविंशतिसामिधेन्य इति बह्वृचशाखागतपञ्चमारण्यके आश्वलायनसूत्रेऽध्येतॄणां वेदत्वव्यवहा-राद्वेदत्वं स्यात्। न चेष्टापत्तिः; भाट्टसारादौ विद्यारण्य-श्रीचरणैः पञ्चमारण्यकगतकर्मचोदनास्वर्थवादभागानुपलम्भेन प्रसिद्ध-वेदवैलक्षण्याद्वेदत्वाभावस्य समर्थितत्वात्; तरणिर्विश्वदर्शत इति यजुर्वेदारण्यकगतानुवाकपञ्चकस्य द्रविडव्यतिरिक्ताध्येतृभिर्यजुस्सं-हितामध्येऽधीयमानत्वेऽपि तदारण्यकगतत्वस्य यजुर्वेदसर्वानुक्रम-णिकालक्षणग्रन्थैरेव निश्चेतव्यत्वाच्च सामगानामूहग्रन्थेऽध्यायानध्याय-पुरस्सरगुरुशुश्रूषापूर्वकनियमाध्ययनसत्त्वेऽपि सर्वाध्येतॄणामविगानेन तत्र वेदव्यवहारसत्त्वेऽपि वेदत्वाभावस्य ऊहत्वसमाख्यानात्; 'यद्योन्यां गायति तदुत्तरयोर्गायति' इति योनिकग्गानस्य उत्तरयो ऋचोरतिदेशसामर्थ्याच्च सिद्धत्वात्, उक्तातिदेशेन योनावध्ययन-सिद्धस्य उत्तरयोरनुष्ठानावगमात्, पौरुषेयतायास्स्पष्टत्वात्। न हि—तिसृष्वप्यधीतस्य यद्योन्यां तदुत्तरयोरिति वादो घटत इत्यादि-न्यायैर्नैवेम ऊहस्य वेदत्वाभावसमर्थनात्; तस्मादुक्तमन्त्राणां भवदीये-

राधुनिकैर्वेदत्वेन व्यवहारेऽपि न वेदत्वादिसिद्धिः—इति ॥

तदयुक्तं—असति बाधके आधुनिकव्यवहारस्याप्यर्थसाधकत्वात्; अन्यथा शाखागोत्रब्राह्मण्याद्यसिद्धेरुक्तत्वात्, सति बाधके कल्पसूत्रकारादिवचनानामप्यर्थसाधकत्वाभावात्, अङ्गं वा समभिव्याहारादविशेषाद्‌भौ वेत्यादिकल्पसूत्राणामप्रामाण्यस्य पूर्वतन्त्रसिद्धत्वात्। तथा हि—पिण्डपितृयज्ञो दर्शकर्मणोऽङ्गं अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति दर्शकर्मवाचकामावास्याशब्दसमभिव्याहारादिति प्रथमसूत्रार्थः। चतुर्थे पितृयज्ञस्स्वकालत्वादनङ्गं स्यादित्यत्रामावास्याशब्दस्य कालवाचित्वमेव, तादृशापराह्णशब्दसमभिव्याहारात्। तथा च दर्शकर्मसमभिव्याहाराभावान्न तदङ्गं पिण्डपितृयज्ञः; किं तु स्वतन्त्र इति व्यवस्थापितम्। दर्शपूर्णमासयोराग्नेयं चतुर्धा करोतीत्युक्तचतुर्धाकरणे कल्पसूत्रमविशेषाद्‌भौ वेति, अग्निसम्बन्धाविशेषादाग्नेयाग्नीषोमीयावुभावपि चतुर्धा कुर्यात्—इति तदर्थः। सत्यप्यग्नीषोमीयस्याग्निसम्बन्धेनासावाग्नेयशब्दो नाभिधातुं शक्यः, तत्र केवलस्याग्नेर्देवतात्वाभावेन तद्धितानुपपत्तेः; ततः केवलाग्नेयस्यैव कल्पसूत्रस्यार्थसाधकत्वे तादृशस्याभियुक्ताधुनिकवचनस्याप्यर्थसाधकत्वादुक्तमन्त्राणां श्रुतित्वं दुर्वारम्, उक्तमन्त्राणां श्रुतित्वे बाधकप्रमाणानुपलम्भात्, प्रत्युत पाञ्चरात्राद्युपादानरूपस्य साधकस्यैव सत्त्वात्; 'महाव्रतस्य पञ्चविंशतिसामिधेन्यः' इत्यादौ बाधकसत्त्वात्साधकाभावाच्च केवलाधुनिकव्यवहाराद्वेदत्वासिद्धेर्युक्तत्वात्। किं च—स्मृतिकल्पसूत्रकाराद्युदाहृतानामेव श्रुतित्वमिति नियमे 'ऊर्जाय पशूनाप्नोत्यूर्जैवावरुध्य' इत्यादिशाबरभाष्योदाहृतानां, तथा विरोधाधिकरणे औदुम्बरी सर्वा वेष्टयितव्येति स्मृत्तिमूलतया वार्त्तिककारोदितानामूर्ध्वदशेन वाससा परिवेष्टयन्तीत्यादीनां, यथाह्ययं ज्योतिरात्मा विवस्वानित्यादिशङ्करभाष्योदाहृतानां च वाक्यानां श्रुतित्वानिश्चयापत्तिः।

अबाधितवैदिकपरिग्रहात्तेषां श्रुतित्वे चोक्तमन्त्राणामपि श्रुतित्वं दुरपह्नवम् ॥

**यदपि**—उक्तवाक्यानां श्रुतित्वविप्रतिपत्तौ 'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे' इत्यादिपठ्यमानतैत्तिरीयशाखागतमेव वाक्यं तत्रोदाहरणमस्तु, न्यायनिष्ठत्वादाचार्यस्य नोदाहरणमादर्तव्यमिति न्यायेन तदुदाहरणस्यानादरणीयत्वात्; तत्समानार्थकप्रत्यक्षवेदवाक्यालाभे तथाविधकल्पसूत्रस्मृत्याद्युदाहृततत्समानार्थकस्मृतिपुराणादिभ्यो वा तदर्थनिर्णयोऽस्तु, तथा विधस्मृत्यादीनामलाभे तदर्थनिर्णयासिद्धेरिष्टत्वात्। सुदर्शनधारणे तु त्वदुदाहृतखिलमन्त्राणां श्रुतित्वानिश्चयात्तत्समानार्थकप्रत्यक्षवेदवाक्यानुपलम्भाच्च केवलस्मृतिपुराणाद्युपन्यासे च तस्य स्मार्तत्वसिद्धावपि न श्रौतत्वसिद्धि'—**इति॥ तदपि न ;** वार्त्तिककारोदाहृतश्रुतिसमानार्थकश्रुत्यन्तरानुपलम्भेन तदभिमतार्थासिद्धिप्रसङ्गात्, सुदर्शनधारणे खिलश्रुतिसमानार्थकानां बहूनां शतपथब्राह्मणादिगतानां पठ्यमानश्रुतिवाक्यानामुदाहृतत्वेन तस्य धर्मत्वसिद्धेरप्रत्यूहत्वात्; केवलस्मृतिपुराणादिभिस्स्मार्तत्वसिद्धावपि धर्मत्वसिद्ध्या श्रौतत्वासिद्धावपि क्षतिविरहात्; तप्तमुद्राधारणं धर्म इत्यत्र न तावत्प्रत्यक्षं प्रमाणमित्युपक्रममाणेन भवता तस्य श्रौतत्वखण्डनस्यानवसरग्रस्तत्वाच्चेति दिक् ॥

**इदं तु बोध्यं**—तप्तमुद्राधारणे पूर्वोदाहृतानि शतपथवाक्यानि खिलश्रुतिवाक्यानि च मूलप्रमाणानि ; तत्रापि खिलश्रुतिवाक्यापेक्षया शतपथवाक्यानि प्रबलानि ; पठ्यमानत्वाद्विधिविभक्तिमत्त्वाच्च। अत एव तान्येव प्रथममुदाहृतानि परिकरविजये महाचार्यैः। पवित्रचरणत्वमूपन्मन्त्रास्त्वभ्युच्चयप्रमाणानि ; पवित्रादिमन्त्रापेक्षया खिलश्रुतीनां प्राबल्यसूचनायैव प्रथमं खिलश्रुतय एवोपात्तास्सच्चरित्ररक्षायां, अनन्तरं च पवित्रादिमन्त्राः ; तेषामपि सम्भवमात्रेण तत्र प्रमाणतयो-

दाहरणमिति ॥ एवं बहुश्रुतिविहिते तप्तमुद्राधारणे कानि चित्परदृष्टानि पौरुषेयवाक्यानि दृश्यन्ते ॥

अत्र भास्करः—सुदर्शनधारणे निषेधवचनान्यपि बहूनि सदाचारसङ्ग्रहे समुदाहृतानि दृश्यन्ते ; तथा हि श्वेताश्वतराणां संहितोपनिषदि तावच्छ्रूयते—

"अग्नेयो वै ब्राह्मणो देवतया तस्माद्ब्राह्मणेनाग्निचिह्नं धार्यम्, ऐन्द्रो राजन्यस्तस्माद्राजन्येनेन्द्रचिह्नं धार्यं, मारुतो वैश्यस्तस्माद्वैश्येन मरुच्चिह्नं धार्यं, सूर्य आत्मा जगतस्तस्थुषश्च तस्माज्जगता सूर्यचिह्नं धार्यं, प्रजापतिर्वै प्रजानामधिपतिस्तस्मात्प्रजाभिः प्रजापतिचिह्नं धार्यं, विष्णुर्वै सर्वान्धर्मानभिपाति, तस्माद्धार्मिकेण विष्णुचिह्नं धार्यं; सर्वो वै रुद्रस्तस्मात्सर्वेण रुद्रचिह्नं धार्यम् इति ॥ तदाहुर्ब्रह्मवादिनो नैव चिह्नं बिभृयात् । यदि कस्यै चिद्देवतायै चिह्नं बिभृयात्, प्रान्यस्यै देवतायै च्यवते पापीयान् स्यात् ; सर्वदेवतासमाश्रयो हि ब्राह्मणः, तस्माद्ब्राह्मणेन न कस्यापि चिह्नं धार्यम् । श्रद्धायजनाभ्यां हि तद्देवतो भवति, तस्माच्छ्रद्धया सा सा देवता यष्टव्या पूजनीया च तावता तद्देवतो भवति । यदि राजन्यो बिभृयात्अलक्ष्मीः पलायेत नैनं राज्येऽभिषेचयेयुः, न ह्यस्य पुत्रा राज्यं लभेरन्, प्र प्रतिष्ठायाश्च्यवेत ; तस्माद्राजन्येन न कस्यापि चिह्नं धार्यम् । यदि वैश्यो बिभृयात्सामिदग्धकण्ठपटवन्नैनमन्ये निरीक्षेरन्, नाप्यनेन ब्राह्मणाः सम्बन्धं कुर्युः ; तस्माद्वैश्येन न कस्यापि चिह्नं धार्यम् । यदि शूद्रो बिभृयान्न ब्राह्मणशुश्रूषामर्हेत्, नैनं ग्रामे वासयेत्प्रतिलोमजातिसधर्माणं कुर्यात् ; तस्माच्छूद्रेण न कस्यापि चिह्नं धार्यम् । कामं तु

प्रतिलोमजा यथा दैवतं बिभृयुरिति तथा नैव सुदर्शनं धारयेन्नो वा शङ्खं, पाषण्डपतितानां हि तद्भवति ॥" —इति ॥

**तथा छन्दोगानां सात्यमुद्गलशाखायां श्रूयते—**

"पतिता ये च पाषण्डा नास्तिका वेदनिन्दकाः ।
तेषां सुदर्शनं धार्यं नानूचानैः कदाचन ॥" —इति ॥

एवमन्यान्यपि निषेधवचनानि तत्रैव द्रष्टव्यानि, विस्तरभयान्न लिख्यन्ते ॥ —इति ॥

**अत्रोच्यते**—आप्तपरिग्रहादिरूपश्रुतित्वसाधकमानाभावेन त्वदुपन्यस्तवाक्यानां श्रुतित्वासिद्धेस्सदाचारसङ्ग्रहस्य क्वाप्यनुपलब्धत्वादुपलम्भेऽपि तत्कर्तुराप्तत्वासिद्धेः; निषेधवचनान्युदाहृत्यान्यपरतां वर्णितवद्भिरस्मदीयैस्तप्तमुद्राधारणखण्डनदुरभिनिवेशदूषितचित्ततया प्रतिक्षणं निषेधवचनानि मार्गमाणैर्भवदीयैश्चानुदाहृतत्वेनोक्तवाक्यानां श्रुतित्वासिद्धेः; अस्तु वा श्रुतित्वं, तथाऽपि न क्षतिः; यद्रूपव्याप्यधर्मावच्छेदेन बलवदनिष्टानुबन्धित्वतात्पर्यकविधिवाक्यकत्वे सति यद्रूपावच्छेदेन बलवदनिष्टानुबन्धित्वबोधकनिषेधवाक्यत्वं यत्र, तत्र व्याप्यधर्मावच्छिन्नभेदविशिष्टव्यापकधर्मावच्छेदेन बलवदनिष्टानुबन्धित्वतात्पर्यकत्वमिति व्याप्तेः; 'न हिंस्यात्सर्वा भूतानि' 'अग्नीषोमीयं पशुमालभेत' इत्यादौ दृष्टत्वात्। तत्र हिंसात्वव्याप्ययागीयहिंसात्वावच्छेदेन बलवदनिष्टाननुबन्धित्वबोधकविधिवाक्यकत्वे सति हिंसात्वावच्छेदेन बलवदनिष्टानुबन्धित्वबोधकनिषेधवाक्यत्वस्य यागीयहिंसातिरिक्तहिंसात्वावच्छेदेन तद्बोधतात्पर्यकत्वस्य च सत्त्वात्। अत्र वाक्यद्वयेऽपि श्रुतित्वं निवेश्यं; विधिनिषेधयोरश्रुतित्व एवोत्सर्गापवादन्यायस्य निरुक्तव्याप्तिरूपस्य प्रवृत्तेः। बलवदनिष्टानुबन्धित्वबोधकत्वं च तादृशबोधौपयिकाकाङ्क्षावत्त्वं, तेन तात्पर्यविरहेण न हिंस्यादित्यादिवाक्यात् हिंसात्वावच्छेदेन, तत्प्रकारक-

बोधानुपपत्तावपि न क्षतिः ; तद्धर्मावच्छेदेन बलवदनिष्टाननुबन्धित्व-तात्पर्यकविधिवाक्यकत्वे सति तद्धर्मावच्छेदेन बलवदनिष्टानुबन्धित्व-बोधकवाक्यत्वं यत्र, तत्र तद्धर्मावच्छिन्नाभावविषयकेष्टसाधनत्वादि-तात्पर्यकत्वमिति व्याप्तेः; अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीत्यादौ दृष्टत्वात्तत्र षोडशिग्रहणत्वावच्छेदेन बल-वदनिष्टाननुबन्धित्वबोधकविधिवाक्यकत्वे सति तदवच्छेदेन बल-वदनिष्टानुबन्धित्वबोधकस्वरूपयोग्यवाक्यत्वस्य षोडशिग्रहणाभावे इष्टसाधनत्वादितात्पर्यकत्वस्य च सत्त्वात् ; प्रकृते सुदर्शनधारण-विधायकशतपथादिवाक्यानां बहूनामुदाहृतत्वेन व्याप्यव्यापकभावा-पन्नधर्मभेदेन विधिनिषेधयोः प्रवृत्तावुत्सर्गापवादन्यायस्य एकधर्मा-वच्छेदेन तयोः प्रवृत्तौ विकल्पस्य च प्राप्त्या सर्वेषां सुदर्शनधारणस्य धर्मत्वाप्रतिषेधात्; विधायकश्रुतिसद्भावस्थले निषेधोदाहरणस्याकिञ्चि-त्करत्वात् । किं च—प्रकृते तप्तं चक्रं द्विभुजे धार्यमिति तप्तचक्रधारण-त्वरूपव्याप्यधर्मावच्छेदेन विधेर्नैव सुदर्शनं धारयेदिति निषेधस्य तप्तातप्तोभयसाधारणसामान्यधर्मावच्छेदेन प्रवृत्तेरुत्सर्गापवादन्यायस्यैव प्रवृत्तेर्न तप्तमुद्राधारणनिषेधसिद्धिः ॥

**केचित्तु**—'विष्णुर्वै सर्वान्धर्मान्पाति, तस्माद्धार्मिकेण विष्णुचिह्नं धार्यं' इत्यनेन परमैकान्तिनां तप्तमुद्राधारणं विधाय तादृशतप्त-मुद्राधारणस्य लोकोत्तरधर्मत्वेन तस्यायोग्येष्वप्रवर्तनीयत्वमुच्यते—तदाहुरित्यादिना । **भगवद्गीतायां** सारतमार्थं भक्तिप्रपत्त्यादिरूपं विधाय—

"इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥"—

इति तस्यानधिकारिष्वप्रवर्तनीयत्वाभिधानदर्शनात् । सर्वदेवतासमा-श्रयो हि ब्राह्मणस्तस्माद्ब्राह्मणेन न कस्यापि चिह्नं धार्यमिति निषेध-

वाक्ये सर्वदेवतासमाश्रयत्वस्य पारमैकान्त्यविरुद्धस्याभिधानेन निषेधस्यापरमैकान्तिविषयत्वावगमात्। धार्मिकेण विष्णुचिह्नं धार्यमिति विधिवाक्ये सर्वदेवतासमाश्रयत्वप्रतिकोटिभूतैकदेवतासमाश्रयत्वगर्भपारमैकान्त्यरूपधर्माश्रयस्य धार्मिकशाब्दितत्वात्। एकस्मिन्नन्तो निश्चयः एकविशेष्यकप्राप्यत्वप्रापकत्वोभयप्रकारकनिश्चय एकान्तः। तत्र पारम्यं चान्यविशेष्यकोपायत्वप्राप्यत्वदेवतात्वप्रकारकनिश्चयाभावसामानाधिकरण्यं; प्राप्यत्व चेतरप्राप्तीच्छानधीनप्राप्तिकर्मत्वम्। तेन परमैकान्तिनामप्यर्चिरादौ प्राप्तिकर्मत्वप्रकारकनिश्चयसत्त्वेऽपि न क्षतिः। निरुक्तप्राप्यत्वस्य ब्रह्ममात्रनिष्ठाभिप्रायेणैव मुक्तोपसृप्यव्यपदेशादिति सूत्रितं; अन्यथा मुक्तप्राप्यत्वस्यार्चिरादिसाधारण्येन व्यभिचारात्; परमात्मत्वे साध्ये तस्य हेतुत्वानुपपत्तेः। पारमैकान्त्यमनन्यदेवताकत्वघटितमिति च—

"चतुर्विधा मम जना भक्ता एव हि ते श्रुताः।
तेषामेकान्तिनश्श्रेष्ठास्ते चैवानन्यदेवताः॥
अनन्यदेवता भक्ता ये मद्भक्तजनप्रियाः।
मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्तिताः॥"—

इत्यादिशास्त्रसिद्धम्॥ तथा च निषेधश्रुतेः प्रामाण्येऽपि न विरोधः॥

—**इति वदन्ति**॥

**अन्ये तु**—अस्तु वा परोक्तानां वाक्यानां श्रुतित्वं; तथाऽपि न सुदर्शनधारणनिषेधसिद्धिः। तथा हि—आग्नेयो वै ब्राह्मण इत्यादिना तत्तद्देवताचिह्नधारणविधानाद्यो यद्देवतामाश्रितस्तस्य तद्देवतापेक्षया अन्यस्यादेवतायाश्चिह्नं न धार्यमिति तदाहुरित्यादिना निषिध्यते; कस्यै चिद्देवतायै इत्यस्य स्वानुपास्यदेवताप्रसादोद्देशेनेत्यर्थात्, अन्यस्यै देवतायै च्यवत इत्यस्य स्वानुपास्यदेवताभिन्नस्वोपास्यदेवताप्रसादाविषयो भवतीत्यर्थात्। तत्र देवतान्तराश्रितस्य देवतान्तर-

चिह्नधारणे कथं प्रवृत्तिः, प्राप्त्यभावादित्यत आह—सर्वदेवतासमाश्रयो हि ब्राह्मण इति । तथा च देवतान्तराश्रितस्यापि पुरुषस्य सर्वदेवतासमाश्रयत्वात्पक्षपातं विना देवतान्तरचिह्नमपि धार्यमिति प्रकृतप्रसक्तिरिति भावः । आग्नेयो वा इत्यादेर्यद्देवताचिह्नधारणविधिपरत्वं तदाहुरित्यादेस्तद्देवताचिह्ननिषेधपरत्वे विरोधादुक्तार्थस्यैवाङ्गीकार्यत्वान्न विरोधः । न च—आग्नेयो वा इत्यादेर्न विधिपरत्वं, किं तु तदाहुरित्यादिना विधीयमानस्य निषेधस्य प्रतियोगिप्राप्तिप्रदर्शकत्वमिति—वाच्यम्; तथा सति अग्निचिह्नं धार्यमिन्द्रचिह्नं धार्यम्मरुच्चिह्नं धार्यमित्यादीनामप्रामाण्यापत्तेः, तस्य विधिप्रत्ययबोध्यस्य बलवदनिष्टाननुबन्धित्वस्य धारणे बाधात् । न च—'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यादेरिव तादृशविधिवाक्यानामपि परमतानुवादपरत्वान्नानुपपत्तिरिति—वाच्यम्; तत्र एक आहुरित्यनेन मतान्तरत्वस्य स्फुटमवगमेऽपि प्रकृते तादृशगमकाभावेन मतान्तरत्वकल्पनायोगात्; किं च सुदर्शनधारणस्येष्टसाधनत्वाभावाद्रागतः प्राप्त्यभावान्मण्डलीकरणादिवदसच्छास्त्रतः प्राप्त्यभावाद्यथाकथंचित्प्राप्तावपि येन रूपेण प्राप्तिस्तद्रूपेणैव निषेधापत्तेः । तप्तं चक्रं द्विभुजे धार्यमित्यादिप्रत्यक्षश्रुत्या, 'दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्' इति खिलश्रुत्या च विहितस्य सुदर्शनधारणस्य निषेधासम्भवाच्च नानया श्रुत्या सुदर्शनादिधारणनिषेधः । न च—सुदर्शनधारणविधायकानां पाञ्चरात्रिकविषयत्वं, तथा च प्रमात्सर्वत्रैवर्णिकविषयत्वप्रसक्तेस्तन्निषेधोपपत्तिरिति—वाच्यम्; तप्तं चक्रं द्विभुजे धार्यमित्यविशेषेण सर्वाधिकारिकत्वप्रतीतेर्दक्षिणे तु भुजे विप्र इति विप्रमात्रस्याधिकारित्वप्रतीतेश्च सङ्कोचस्याप्रामाणिकत्वात्——इत्याहुः ॥

भागवतपरिहासार्थं जीवनार्थं वा यत् सुदर्शनधारणं क्रियते तन्निषेधपरं 'नैव सुदर्शनं धारयेन्नो एव शङ्खम्' इत्यादिकं श्रुतिवचनम् ।

अत एव–तच्छ्रुतौ 'पाषण्डपतितानां हि तद्भवानि' 'पतिता ये च पाषण्डा नास्तिका वेदनिन्दकाः, तेषां सुदर्शनं धार्यम्' इत्युक्तं; नास्तिकादयो हि साधुपरिहासाद्यर्थं चक्रधारणं कुर्वन्ति। तथा च–नैव सुदर्शनं धारयेदित्यस्य साधुपरिहासादिप्रयोजनकसुदर्शनधारणं न कार्यमित्यर्थः; अन्यथा उक्तशतपथादिश्रुतिविरोधात्—**इत्यपि वदन्ति** ॥

**वस्तुतः**–पतिता ये च पाषण्डा इति वचनस्य पतितादिसम्बन्धि-सुदर्शनमनूचानैः न धार्यमित्यर्थः। पतितादिसम्बन्धश्च तदाराधित-त्वादिः; तेषां सुदर्शनं नानूचानैर्धार्यमित्येकवाक्यतयैव बोधात्, सम्भवत्येकवाक्यत्वे वाक्यभेदकल्पनस्यान्याय्यत्वात्। अन्यथा–तेषां सुदर्शनं धार्यमित्यत्र तृतीयार्थे षष्ठीकल्पनस्य नानूचानैरित्यत्र सुदर्शनं धार्यमितिपदयोरनुषङ्गस्य चापत्त्या गौरवादिति दिक् ॥

इति
श्रीशेषार्यवंशमुक्ताफलस्य श्रीयादवाद्रिनिवासरसिकस्य
श्रीमदनन्तार्यवर्यस्य कृतिषु
**सुदर्शनसुरद्रुमे**
**प्रथमपरिच्छेदः ॥**



## अथ द्वितीयपरिच्छेदः ॥

**अथेदानीं पाञ्चरात्रविहितसुदर्शनधारणस्य पराभिमतं देवलकमात्रविषयत्वं निरस्यते ॥**

पाञ्चरात्रागमे हि सुदर्शनाद्यङ्कनमधिकारिविशेषानादरेण विधीयमानत्वात्सर्वपुरुषधर्मः । तथा हि विहगेश्वरसंहितायां तावत्सुदर्शनधारणं विधीयते—

"तद्धारणविधिं वक्ष्ये महापातकनाशनम् ।
चक्रं शङ्खं समाराध्य गन्धपुष्पादिभिश्शुभैः ॥
ततः पावकमभ्यर्च्य जुहुयाद्वैष्णवाहुतीः ।
वेदादिभिस्तथा मन्त्रैस्स्रुचैव जुहुयाद्धृतम् ॥
चक्रं च पाञ्चजन्यं च तस्मिन्नग्नौ विनिक्षिपेत् ।
अग्निनैव तु संयुक्तं चक्रमादाय मामकम् ॥
दक्षिणं बाहुमूलं स्वं दहेद्विगतसाध्वसः ।
अथवाऽन्येन केनापि वैष्णवेन महात्मना ॥
लाञ्छितं बिभृयाच्चक्रं पाञ्चजन्यं तथैव च ।
उच्चारयन्निमं मन्त्रं भूदेवो मां विचिन्तयेत् ॥
'सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥'
इति मन्त्रं समुच्चार्य दक्षिणं बाहुमङ्कयेत् ।
'पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय ॥
पाहि मां पापिनं घोरसंसारार्णवतारण ।'
इति मन्त्रं समुच्चार्य दहेत्सव्यं भुजं तथा ॥" —इति ॥

एवं पारमेश्वरसनत्कुमारादिसंहिताभेदेष्वपि सुदर्शनधारणविधानानि द्रष्टव्यानि ॥

ननु—पाञ्चरात्रस्यैवाप्रमाणत्वात्कथं तद्विहितसुदर्शनधारणं धर्मः— इति चेत्। मैवम्; न तावत्पाञ्चरात्रस्य भ्रान्तपुरुषप्रणीतत्वेनाप्रामाण्यं, तत्प्रणेतुर्नारायणस्य मोहाद्यभावस्य सार्वज्ञ्यस्य च 'कारणरूपमेकाकारं परब्रह्म शोकमोहविनिर्मुक्तं विष्णुं ध्यायन्न सीदति' इति,

'वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥"—

इत्यादि श्रुतिस्मृतिसिद्धत्वात् ॥ न च—पाञ्चरात्रं नारायणप्रणीतमित्यत्र मानाभावः, 'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्' इत्यादिवचनात् ॥

न चैवं—

"एकाग्रमनसश्शान्ता ऋषयस्संशये रताः ।
नारायणानुशिष्टा हि तथा देवी सरस्वती ॥
विवेश तानृषीन् सर्वान् लोकानां हितकाम्यया ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ॥"—

इत्यादिमोक्षधर्मगतमुनिप्रोक्तत्वप्रतिपादकवचनविरोधः, तथा—

"वासुदेवेन यत्प्रोक्तं शास्त्रं भगवता स्वयम् ।
तद्दिव्यं ब्रह्मरुद्राद्यैः ऋषिभिश्च तपोधनैः ॥
स्वयं प्रणीतं यच्छास्त्रं तद्विद्धि मुनिभाषितम् ।"—

इत्यादिपाञ्चरात्रवचनविरोधश्चेति—वाच्यम् । नित्येऽपि वेदे काठकादिव्यवहारवत्, व्यासप्रोक्त एव महाभारते संहिताविशेषे वैशम्पायनसंहितादिव्यवहारवच्च—कार्त्स्न्येन भगवत्प्रणीत एव पाञ्चरात्रे ब्रह्मादिप्रवक्तृकत्वमादाय तत्प्रणीतत्वव्यवहारसम्भवेनाविरोधात् ॥

न च—भगवत्प्रणीतत्वोक्तिरेव तत्प्रवक्तृकत्वाभिप्राया, ब्रह्मादि-
णीतत्वोक्तिस्तु तत्कर्तृकत्वाभिप्रायैवेति कुतो न वैपरीत्यमिति—
च्यम् । साङ्ख्यं योगः पाञ्चरात्रमित्यत्रास्य साङ्ख्यादिभिस्सह पाठ-
मित्तसादृश्यभ्रमं निरसितुं भगवता बादरायणेन साङ्ख्यस्य वक्ता
पिल इत्यादिना साङ्ख्यादीनां सम्भावितभ्रमकपिलादिकर्तृकत्वेनाप्रा-
ण्यमभिधाय, 'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्' इति
ाङ्ख्यादिभ्योऽतिशयेन प्रामाण्यसिद्ध्यौपयिकतया निरस्तविभ्रमाशङ्क-
गवदभिमतत्वस्योक्ततया, साङ्ख्यादौ कपिलाद्यभिहितत्वोक्तेरिव
ाञ्चरात्रे भगवदभिहितत्वोक्तेरपि तत्कर्तृकत्वाभिप्रायस्यैव स्वयमिति
ाशेषमहिम्ना वक्तुं युक्तत्वात्; तत्प्रवक्तृकत्वमात्रेण साङ्ख्यादि-
योऽतिशयासिद्धेः ;

'तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ।
स्वयं प्रणीतं यच्छास्त्रं तद्विद्धि मुनिभाषितम् ॥'—

त्युदाहृतमोक्षधर्मपाञ्चरात्रवचनाभ्यां प्रेत्युपसर्गमहिम्ना ब्रह्मादीनां
ावक्तृत्वस्यैवोक्तेश्च । प्रवचनं च व्याख्यानमेव; 'स्वाध्यायप्रवच-
नाभ्यां न प्रमदितव्यम्' इत्यादौ तेन प्रोक्तमित्यादिपाणिनिसूत्रे च
प्रवचनशब्दस्य व्याख्याने प्रयोगात् ॥ तस्मान्न भ्रान्तपुरुषप्रणी-
तत्वेनाप्रामाण्यम् ॥

ननु—तथाऽपि श्रुत्यादिविरुद्धजीवोत्पत्तिप्रतिपादकत्वात्पाञ्चरात्र-
मप्रमाणम् । तत्र हि—'वासुदेवात्सङ्कर्षणो नाम जीवो जायते, सङ्कर्षणा-
त्प्रद्युम्नसंज्ञं मनः, मनसश्चानिरुद्धाख्योऽहङ्कारः' इति जीवोत्पत्तिः
प्रतिपाद्यते । सा च—'न जायते म्रियते वा विपश्चित्', 'ज्ञाज्ञौ द्वाव-
जावीशनीशौ' इत्यादिश्रुतिविरुद्धा । न च—सङ्कर्षणो नाम जीवो
जायत इति जीवत्वसामानाधिकरण्येनोत्पत्तिप्रतिपादकस्यागमस्याज्ञ-
त्वविशिष्टस्वरूपजीवत्वव्याप्यधर्मावच्छेदेनोत्पत्त्यभावप्रतिपादकश्रुत्या

कथं विरोधः, जीवत्वसामानाधिकरण्येनोत्पत्तितदभावयोरविरोधादिति—वाच्यम्; न जायते म्रियते वेति श्रुतेर्गीतायां जीवसामान्यनित्यत्वप्रतिपादकतयोपबृंहणाज्जीवत्वावच्छेदेन तादृशश्रुतेरुत्पत्त्यभावप्रतिपादकत्वसिद्धेः। तत्र द्वितीयाध्याये जीवसामान्यस्य नित्यत्वं प्रस्तुत्येयं श्रुतिस्तत्र प्रमाणतया स्मारिता 'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः' इति। अत्र विपश्चित्पदस्थाने कदाचिदिति निर्देशात्केवलजीवस्यैवोत्पत्त्यभावावच्छेदकत्वं; अयमित्यस्य पूर्वनिर्दिष्टजीवसामान्यपरत्वात्। तथा च वेदविरुद्धार्थप्रतिपादकत्वादप्रामाण्यम्। एवं कर्तुर्जीवात्करणस्य मनस उत्पत्तिरपि न सम्भवति; 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति परस्मादेव ब्रह्मणो मनस उत्पत्तिश्रवणात्। न च—परब्रह्मजन्यस्यापि जीवजन्यत्वसम्भवः, घटादौ दण्डचक्रकुलालादीनामिवैकस्मिन्कार्ये बहूनां जनकत्वसम्भवादिति—वाच्यम्; श्रुतिपुराणादौ क्वापि मनसो जीवजन्यत्वानुक्तेस्तत्र तज्जन्यत्वस्याप्रामाणिकत्वात्तादृशार्थप्रतिपादकस्य प्रामाण्यायोगात्। सङ्कर्षणात्प्रद्युम्नसंज्ञं मन इत्यस्य श्रुतिविरुद्धार्थप्रतिपादकत्वकथनं श्रीभाष्यादौ श्रुत्यनभिमतार्थप्रतिपादकत्वपरं, न तु जीवोत्पत्तिप्रतिपादकवाक्यस्येव श्रुतिजन्यबोधप्रतिबध्यतावच्छेदकविषयताशालिबोधजनकत्वपरं; ब्रह्मजन्यत्वज्ञानस्य जीवजन्यत्वज्ञाने प्रतिबन्धकताविरहात्॥ —इति चेत्॥

**अत्रोच्यते**—जीवस्य स्वरूपत उत्पत्त्यसम्भवेऽपि सङ्कर्षणशरीरविशिष्टस्य तत्सम्भवात्, स्वाधिकरणक्षणध्वंसानधिकरणक्षणसम्बन्धरूपोत्पत्तिशरीरे तादृशशरीरविशिष्टनिरूपिताधिकरणतानिवेशात्, चैत्रो जात इत्यादौ तादृशोत्पत्तेरेव प्रतीतेः। स्पष्टञ्चेदं बौद्धाधिकारगादाधर्याम्। श्रुतौ च विशेष्यनिरूपिताधिकरणताघटितोत्पत्तेरेव निषेधात्तदवगाहिज्ञानप्रतिबध्याया विशिष्टाधिकरणताघटितोत्पत्त्यवगाह्युक्तग-

मजन्यज्ञानेऽभावात् । अन्यथा—'तोयेन जीवान्व्यससर्ज भूम्यां' 'सर्वे एत आत्मानो व्युच्चरन्ति' इत्यादि श्रुतीनामपि 'न जायते म्रियते वा विपश्चित्' इत्यादिश्रुतिबाध्यता दुर्वारा स्यात् ॥

वस्तुतस्तु—पाञ्चरात्रे वासुदेवाज्जीवस्य जीवादिभ्यो मन आदीनामुत्पत्तिश्च नोक्ता, किं तु जीवमनोऽहङ्काराधिष्ठातॄणां सङ्कर्षणप्रद्युम्नानिरुद्धाख्यभगवद्व्यूहानां प्रादुर्भाव एव 'अजायमानो बहुधा विजायते' इति श्रुतिसिद्ध उक्तः । जनीप्रादुर्भाव इति जनिधातोः प्रादुर्भावार्थत्वाज्जीवादिशब्दानां नियाम्यवाचिनां तन्नियन्तृव्यूहविशेषपरत्वात्, पाञ्चरात्र एव जीवं प्रकृत्य 'स ह्यनादिरनन्तश्च परमार्थेन निश्चित.' इति जीवस्योत्पत्तिप्रतिषेधाच्च न जीवोत्पत्तिप्रतिपादकत्वम् । न च—'चतुर्षु वेदेषु पुरुषार्थमलभमानश्शाण्डिल्य इमां विद्यामधीतवान्' इति वेदानादरवचनेन वेदनिन्दावगमात्पाञ्चरात्रस्याप्रामाण्यमिति—वाच्यम्; नहिनिन्दान्यायेन तद्वचनस्य पाञ्चरात्रस्तुत्यर्थत्वेनोपपत्तेः; 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदम्' इत्यारभ्य, 'मन्त्रविदेवास्मि नात्मवित्' इति श्रुतिवाक्ये भूमविद्याप्रशंसार्थत्वस्य,

"चत्वार एकतो वेदा भारतं त्वेकमेकतः ।
समागतैस्तु ऋषिभिस्तुलामारोपितं पुरा ॥
महत्त्वाद्भारवत्त्वाच्च महाभारतमीरितम् ।"—

इत्यादौ वेदनिन्दाया महाभारतप्रशंसार्थत्वस्य च दर्शनात् । तस्मात्पाञ्चरात्रस्तुतेर्निन्दापरत्वाभावान्नाप्रामाण्यम् ॥

यद्यपि—पाञ्चरात्रागमस्येश्वरप्रत्यक्षमूलतया प्रामाण्यं न सम्भवति। पूर्वतन्त्रे 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मतत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' इति सूत्रेण धर्मस्य प्रत्यक्षगम्यत्वनिराकरणात्। तथाऽपि—तत्सूत्रे इन्द्रियजन्यप्रत्यक्षस्य धर्ममूलत्वनिराकरणेऽपि भगवत्प्रत्यक्षस्यातीतानागतसर्वपदार्थविषयकत्वाद्धर्मविषयकत्वं सम्भ-

वत्येवेति तन्मूलकतयैव भगवच्छास्त्रस्य प्रामाण्यम्। यद्वा—एकायन-शाखामूलकत्वेनास्य प्रामाण्यमभ्युपगम्यते ; न चैकायनशाखासद्भावे मानाभावः; भूमविद्यायामेकायनशाखाया अपि—

"अधीहि भगव इति होपससाद सनत्कुमारं नारदः, तं होवाच यद्वेत्थ तेन मोपसीद, ततस्त ऊर्ध्वं वक्ष्यामीति। स होवाच—ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहास-पुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्य-मेकायनं देवविद्यां ब्रह्मविद्याम् ॥"—

इत्यादिना विद्यास्थानेषु परिगणनात् ॥

इदं च पाञ्चरात्रप्रामाण्यं स्मृतीतिहासपुराणसिद्धम्। तथा हि **याज्ञवल्क्यस्तावद्योगशास्त्रे** स्वोक्तार्थे भगवच्छास्त्रं साक्षीकुर्वंस्तस्य प्रमाणमूर्धन्यतां दर्शयति—

"ओङ्काररथमारुह्य मनः कृत्वा तु सारथिम्।
ब्रह्मलोकपदान्वेषी याति विष्णोः परं पदम् ॥
पाञ्चरात्रे तथा ह्येष भगवद्वाजकस्स्मृतः।
बलं वीर्यं तथा तेजस्त्रिमात्रेति च संज्ञितः ॥
ज्ञानैश्वर्ये तथा शक्तिस्त्रिस्वभाव इति स्मृतः।
सङ्कर्षणोऽथ प्रद्युम्नो ह्यनिरुद्धस्तथैव च ॥
ते व्यूह इति निर्दिष्ट ओङ्कारो विष्णुरव्ययः।" —इति ॥

**जमदग्निस्मृतौ**—

'वैदिकेन विधानेन पूजां कुर्याद्धरेस्ततः।
अलाभे वेदमन्त्राणां पाञ्चरात्रोदितेन वा ॥" —इति ॥

अत्र वेदमन्त्रप्रतिनिधितया पाञ्चरात्रोपादानात्प्रामाण्यं स्फुटम् ॥

उत्तररामायणे—

"पुराणैश्चैव वेदैश्च पाञ्चरात्रैस्तथैव च।
ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति तम् ॥"—इति ॥

महाभारते भीष्मपर्वणि तावद्देवगुह्ये भगवन्तं प्रकृत्य पठ्यते—

"ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृतलक्षणैः।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु ॥
सात्त्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ॥" —इति ॥

शान्तिपर्वणि—

"अवश्यं वैष्णवो दीक्षां प्रविशेत्सर्वयत्नतः।
दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः ॥
वसन्ते दीक्षयेद्विप्रं ग्रीष्मे राजन्यमेव च।
शरत्समये वैश्यं हेमन्ते शूद्रमेव च ॥
स्त्रियं च वर्षाकाले तु पाञ्चरात्रविधानतः ॥"— इति ॥

तथा मोक्षधर्मे ज्ञानकाण्डे—

"गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥"—

इत्यारभ्य महता प्रबन्धेन पाञ्चरात्रशास्त्रप्रक्रियां प्रतिपाद्य,

"इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा।
आरण्यकं च वेदेभ्य ओषधीभ्यो यथाऽमृतम् ॥
इदं महोपनिषदं चतुर्वेदसमन्वितम्।
साङ्ख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम् ॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्।
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥
भविष्यति प्रमाणं वै एतदेवानुशासनम्।" -इति ॥

श्रीविष्णुपुराणे पञ्चमांशे अक्रूरः—

"यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः ।
वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्मि तम् ॥"—इति ॥

श्रीवाराहे—

"यदिदं पाञ्चरात्राख्यं शास्त्रं परमदुर्लभम् ।
तद्भवान्वेत्स्यते सर्वं मत्प्रसादान्न संशयः ॥
वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन च द्विज ।
प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विज ॥" —इति ॥

श्रीवाराह एव धरणिद्वादशीव्रते कार्त्तिकद्वादशीव्रते एकपञ्चाशेऽध्याये—

"योगेश्वरं तु सौवर्णं दापयेत्प्रयतो नरः ।
वेदाप्रचे तु समं दत्तं द्विगुणं त्वर्थवित्तमे ॥
आचार्ये पञ्चरात्राणां सहस्रगुणितं भवेत् ॥" —इति ॥

अत्र वेदविदपेक्षया पाञ्चरात्रविद उत्कर्षप्रतिपादनात्तस्य वेदापेक्षयाऽप्युत्कर्षस्सूचितः ।

श्रीभागवते प्रथमस्कन्धे—

"तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मिणां यतः ॥" —इति ॥

एकादशस्कन्धे—

"य आशु हृदयग्रन्थिं निर्जिहीर्षुरिहात्मनः ।
विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम् ॥" —इति ॥

ब्रह्माण्डेऽपि—

"ऋगाद्या भारतं चैव पाञ्चरात्रमथाखिलम् ।
मूलरामायणं चैव पुराणं चैतदात्मकम् ॥

येचानुयायिनस्तेषां सर्वे ते च सदागमाः ।
दुरागमास्तदन्ये ये न तैर्ज्ञेयो जनार्दनः ॥" —इति ॥

कौर्मे एकादशेऽध्याये—

"वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन च द्विज ।
प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षशतैरपि ॥
पाञ्चरात्रं सहस्राणां यदि कश्चिद्ग्रहिष्यति ।
कर्मक्षये च मद्भक्तो यदि कश्चिद्भविष्यति ॥
तस्य वेदाः पाञ्चरात्रं नित्यं हृदि वसिष्यति ।" —इति ॥

स्कान्दे वैशाखमाहात्म्ये अष्टादशेऽध्याये व्याधं प्रति शङ्खः—

"शास्त्रं च वेदास्स्मृतयः पुराणं च तदात्मकम् ।
इतिहासः पञ्चरात्रं भारतं च महामते ॥
एतैरेव महाविष्णुर्ज्ञेयो नान्यैः कथञ्चन ।" —इति ॥

तथा च—उक्तस्मृतीतिहासपुराणेषु पाञ्चरात्रप्रामाण्यस्य सिद्धत्वात्तद्विहितं सुदर्शनधारणं सर्वेषां धर्म इति सिध्यति ॥

अत्र भास्करः—भवतु पञ्चरात्रागमः प्रमाणं, तथाऽपि तद्विहितं सुदर्शनधारणं त्रैवर्णिकाश्शूद्रादयो वा ये तन्त्रमार्गे प्रवृत्तास्तेषामेव धर्मः, स च तन्त्रमार्गो वैदिकप्रस्थानान्तरत्वेन स्मृतिपुराणादिप्रसिद्धः । महाभारते—

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥"—

इति वचनेन पाशुपतागमवत् पाञ्चरात्रस्य वैदिकप्रस्थानात्प्रस्थानान्तरत्वप्रतिपादनात्; भागवते अक्रूरस्तुतौ—'त्रय्या च विद्यया केचित्' इत्युपक्रम्य,

"त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ।
बह्वाचार्यविभेदेन भगवन् समुपासते ॥

अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते ।
यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकम् ॥"—

इत्यादिना तन्त्रमार्गस्य वैदिकमार्गान्मार्गान्तरत्वप्रतिपादनाच्च । पाञ्च-रात्र एव तन्त्रमार्गप्रविष्टानवैदिकान्प्रति 'वैदिकं तु पुरा कृत्वा पश्चात्तन्त्रं सामाचरेत्' इति क्रमं विधाय श्रुतिकल्पसूत्रादिविहित-तत्तत्कर्मानुष्ठानानन्तरं वैष्णवसन्ध्यावन्दनाङ्कुरप्रतिसरबन्धपुण्याह-वाचनादीनां विधानदर्शनात्; एवं सीमन्तोन्नयनादिसंस्कारकर्मानुष्ठा-नानन्तरं कुण्डार्चनसहितेन वैष्णवीकरणाख्यसंस्कारेणाग्नेर्वैष्णवत्वं सम्पाद्य तस्मिन्नेव वैष्णवाग्नौ मूलमन्त्रप्रमुखैरागमिकमन्त्रैर्होमविधान-पूर्वकं सीमन्तोन्नयनादिषोडशकर्मणां विलक्षणप्रकारेण विधानदर्श-नाच्च । तथा च तादृशतन्त्रमार्गप्रविष्टानामेव तप्तमुद्राधारणं धर्मो न केवलं वैदिकानाम् ॥ —इति ॥

**तन्न** । साङ्ख्यं योगः पाञ्चरात्रमिति महाभारतवचनस्य वेदपाञ्च-रात्रयोर्भिन्नमतत्वप्रतिपादनपरत्वाभावात् । अनन्तरमेव 'साङ्ख्यस्य वक्ता कपिलः' इत्यारभ्य, 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्व-यम्' इति कर्तारं प्रख्याप्य, 'साङ्ख्यं योगः पाञ्चरात्रम्' इतिश्लोक-प्रतिपन्नस्य नानामतत्वस्य पाञ्चरात्रेऽप्यन्वयभ्रमं निरसितुं 'सर्वेष्वे-तेषु राजेन्द्र ज्ञानेष्वेतद्विशिष्यते' इत्यनेन पाशुपतादिभ्य उत्कर्ष-प्रतिपादनेन वेदपाञ्चरात्रयोर्भिन्नमतत्वाभावप्रतिपादनात् । अत्र ज्ञायते-ऽनेनेति व्युत्पत्त्या ज्ञानशब्दस्य ज्ञानसाधनशास्त्रपरत्वात्, एत-च्छब्दस्य साङ्ख्यं योगः पाञ्चरात्रमिति प्रस्तुतसाङ्ख्यादिपरामर्श-कत्वात्, तदनन्तरं च—

"पाञ्चरात्रविदो ये तु यथाकामपरा नृप ।
एकान्तिभावोपगतास्ते हरिं प्रविशन्ति वै ॥"—

इति तस्य मोक्षसाधनत्वप्रतिपादनाच्च। भागवतेऽक्रूरस्तुतावपि तन्त्रमार्गस्य नावैदिकत्वं प्रतिपाद्यते; वेदात्पृथङ्निर्देशमात्रेणावैदिकत्वासिद्धेः। अन्यथा

"श्रौतं कर्तुमशक्तश्चेत्स्मार्तं कर्म समाचरेत्।
पितामहेन विप्राणामादाय च हितः परः॥
धर्मो विमुक्तये साक्षाच्छ्रौतस्मार्तो द्विधा पुनः।"—

इत्यादिषु श्रौतस्मार्तयोः पृथक्परिगणनेन स्मार्तस्यावैदिकत्वप्रसङ्गात्॥ तान्त्रिकमार्गस्य वैदिकमार्गेण सह समुच्चयाङ्गीकारेण तान्त्रिकस्यापि वैदिकत्वेनैव तप्तमुद्राधारणाधिकारितया पाञ्चरात्रतन्त्रे तान्त्रिकं प्रति तस्य विधानोपपत्तेः॥

न च—'यावत्कर्म स्वगृह्योक्तं न्यूनं वाऽधिकमेव वा।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्॥"—

इति वचनाचन्त्रोक्तप्रकारस्य वैदिककर्ममध्येऽन्वयासम्भवाद्वैष्णवाग्नौ कर्तव्यानां स्वगृह्योक्ताग्निषु होमासम्भवाच्च न तयोस्समुच्चयसम्भव इति—वाच्यम्; वैदिककर्मसमाप्त्यनन्तरं वैष्णवाग्निसम्पादनपूर्वकं तान्त्रिककर्मणां प्रयोगभेदेनानुष्ठानसम्भवात्॥

यत्तु—एवमपि तान्त्रिकमार्गस्य वैदिकमार्गेण नित्यवदनुष्ठानानियमः, वैदिकानां तान्त्रिककर्माननुष्ठाने प्रत्यवायाभावात्। यस्तन्त्रमार्गेण श्रेयः प्राप्तुमिच्छति तस्य स्वेच्छया तन्त्रमार्गे प्रवेशसम्भवात्तन्त्रमार्गस्य वैदिकमार्गेण सहान्वाचय इत्येव युक्तम्। तथा च—एतादृशतन्त्रमार्गप्रविष्टान्प्रत्येव शङ्खचक्राङ्कनं शिखायज्ञोपवीतादिवत्तान्त्रिककर्मकर्तृसंस्कारतया सुदर्शनधारणं विधीयते; न तु स्वतन्त्रफलसाधनतया। तथा च पाद्मे पुराणे विंशेऽध्याये ब्रह्माणं

इति भगवता तापपुण्ड्रयोर्दीक्षाङ्गत्वं प्रतिपादितम्—

"'शृणु वत्स प्रवक्ष्यामि मन्त्रदीक्षाविधिं परम् ।
सुदर्शनं पाञ्चजन्यं सौवर्णेन प्रकारयेत् ॥
रौप्येण वाऽपि ताम्रेण कांस्येनापि प्रकारयेत् ॥
स्नाप्य पञ्चामृतैर्मन्त्रैरर्चयेत्पुरतो मम ॥
अर्चयेद्गन्धपुष्पाद्यैस्तन्मन्त्रेण विधानतः ।
तस्मिन्नग्नौ क्षिपेच्चक्रं बाह्वोर्दक्षिणसव्ययोः ॥
ऊर्ध्वपुण्ड्रधरं शिष्यं मन्त्रमध्यापयेद्गुरुः ।'

नारदः—

'एवमुक्त्वा विधातारं देवदेवो हरिः पिता ।
स्वचक्रेणाङ्कयित्वा तं तस्य मन्त्रमदात्स्वयम् ॥
सर्वलोकेश्वरो देवो ब्रह्मा मम पिता प्रभुः ।
ममापि विधिवन्मन्त्रं प्रददौ मुनिसत्तमाः ॥'" —इति ॥

तथा सुदर्शनधारणस्य दीक्षार्थत्वं वचनान्तरेणाप्यवगम्यते—

"वैष्णवत्वस्य सिद्ध्यर्थं ज्ञानसिद्ध्यै विशेषतः ।
प्रतपेच्छङ्खचक्राभ्यां होमं कृत्वा विधानतः ॥" —इति ॥

अत्र वैष्णवशब्देन तान्त्रिकदीक्षासंस्कृत एव परामृश्यते, न तु विष्णुभक्तमात्रं, कालनिर्णयादौ वैखानसागमोक्तदीक्षां प्राप्तो हि वैष्णव इति तान्त्रिकदीक्षाया एव वैष्णवपदप्रवृत्तिनिमित्तत्वेन प्रतिपादनात् ॥ —इति ॥

तत्र—

"शङ्खं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा ।
धारयित्वैव विधिवद्ब्रह्मकर्म समारभेत् ॥
सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः ।
उपनीय विधानेन पश्चात्कर्मसु योजयेत् ॥

उपवीती शिखी विप्रश्चक्रलाञ्छनसंयुतः ।
चक्रलाञ्छनहीनस्य विप्रस्य विफला क्रिया ॥"

'धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।'— इत्यादिश्रुतिस्मृतिभिर्भगवदुपासनकर्माङ्गत्वयोः प्रतिपन्नत्वेऽप्याधानवत्प्राधान्यनित्यत्वयोरपि चक्रधारणे प्रतिपन्नत्वात् । 'येन पूतस्तरति दुष्कृतानि' 'निचिक्षेप सुपर्णं भिद्यमानम्' इत्यादिश्रुतिभिः—

"ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते नरः ।
तेन तस्याशुभं नश्येच्छुभमस्य विवर्धते ॥
शरीरं दृश्यते यस्य विष्णुचक्रेण लाञ्छितम् ।
गङ्गाजलमयं मन्ये देहं तत्पापवर्जितम् ॥"—

इत्यादिभिस्तस्य प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वरूपनित्यत्वस्यावगमात् ॥ न च—उक्तवचनं सर्वं तान्त्रिकविषयमेवेति वाच्यम् ;

"अङ्कयेच्छङ्खचक्राभ्यां दक्षिणेतरपार्श्वयोः ।
विप्राणां वेदविदुषां वैष्णवानां विशेषतः ॥
उपवीतादिवद्धार्याश्शङ्खचक्रगदादयः ।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥"—

इति ब्राह्मणवैष्णवयोः पृथक्कृत्य विधानेन केवलवैदिकानामपि सुदर्शनधारणविधानसिद्धेः ॥

यदपि—अत्र ब्राह्मणग्रहणमेकवाक्यताबलेन ब्राह्मणमात्रेणापि सुदर्शनं धार्यं, किं पुनर्वैष्णवेनेति वैष्णवकर्तृकसुदर्शनधारणस्तुत्यर्थम् । अन्यथा ब्राह्मणानामपि सुदर्शनधारणविधाने वाक्यभेदापत्तेः—इति ॥ तन्न ; अत्र वाक्यभेदस्यागत्या स्वीकरणीयत्वात् । अन्यथा तद्वचनस्य वैष्णवेनापि निर्धूतपापेन सुदर्शनं धार्यं, किमुत ब्राह्मणेनेति ब्राह्मणकर्तृकसुदर्शनधारणस्तुत्यर्थत्वापत्तेः । किं च—

'लीलयाऽपि लिखेद्यस्तु बाहुमूले सुदर्शनम् ।
कुलकोटिं समुद्धृत्य स गच्छेद्वैष्णवं पदम् ॥'—

इति वामनपुराणवचने फलार्थत्वेनावगतस्याङ्गपरत्वासम्भवात् तादृशसुदर्शनधारणस्य तान्त्रिकव्यतिरिक्तविषयत्वं दुर्वारम् ॥

यत्तु—कर्षणादिपूजान्तभगवदाराधनफलस्य वैष्णवपदप्राप्त्यादेस्तदङ्गे सुदर्शनधारणे उपचर्यमाणत्वान्न सुदर्शनधारणस्य फलार्थत्वसिद्धिः ; 'ता वा एताः पञ्च स्वर्गस्य लोकस्य द्वारः, अपाघा अनुवित्तयो नाम' इत्यादौ चातुर्होत्रचयनादिफलस्य स्वर्गस्य तदङ्गभूतापाघाद्याख्येष्टिषूपचारदर्शनात्, 'वैष्णवागमनिष्ठानां वैष्णवाग्निर्विधीयते' इति वचनेन तान्त्रिकव्यतिरिक्तानां वैष्णवाग्न्युपसंहारसामर्थ्याभावेन वैष्णवाग्निसाध्यस्य सुदर्शनधारणस्य फलार्थत्वेऽपि केवलवैदिकविषयत्वायोगाच्च—इति ॥

तन्न । लीलयाऽपिलिखेद्यस्त्वित्यसङ्कोचेन प्रवृत्तस्य यच्छब्दस्य तान्त्रिकपरत्वात्मकसङ्कोचकल्पनाया अयुक्तत्वात्, स्वस्वाग्निसाध्यस्य सुदर्शनधारणस्य वैष्णवाग्निसाध्यत्वासिद्धेः । सिद्धावपि सर्वेषां तदुपसंहारसम्भवात्, 'वैष्णवागमनिष्ठानां वैष्णवाग्निर्विधीयते' इति वचनस्य वैष्णवागमनिष्ठानां वैष्णवाग्निरेवेति नियमपरतया वैदिकानामपि तादृशाग्निसम्बन्धे विरोधाभावात् ॥ अपि च--पाञ्चरात्रविहितं सुदर्शनधारणं दीक्षापूर्वकमालयस्थविष्णुपूजकानामेव धर्म इति तावन्न युक्तं; व्यवस्थापकाभावात्, शतपथादौ सुदर्शनधारणस्य भगवदुपासकमात्रधर्मत्वाभिधानेन सङ्कोचासम्भवात्; **भारद्वाजसंहितायां** परिशिष्टे प्रथमेऽध्याये---

'विद्याविभूषणं पुंसस्तस्या वृत्तं विभूषणम् ।
विष्णुभक्तिर्विभूषाऽस्य सा चक्राद्यङ्कभूषणा ॥''—

इति कथनात्, भगवच्छास्त्रेऽप्युपासकमात्रधर्मत्वस्यैवाभिधानात्, वैदिकानामपि तन्त्राधिकारस्य निष्प्रत्यूहत्वात् ॥

अत्राह भास्करः—वैदिकानां तन्त्राधिकारो नास्त्येव; तथा हि वामनपुराणे—

"स्वतन्त्रा आगमास्सर्वे निर्मूलाः परिकीर्तिताः ।
अधिकारिविभेदेन प्रवृत्ता न हि संशयः ॥"—

इति वेदाधिकारिव्यतिरिक्तानामेव तन्त्राधिकारः प्रदर्शितः । कूर्मपुराणेऽपि चतुर्दशेऽध्याये पाञ्चरात्राद्यागमानां कुमार्गव्यामोहनसम्पादकपापसहकारेण वेदाधिकारिविषये व्यामोहनार्थत्वं महापुरुषशापापादितवैदिकमार्गबहिर्भावानां तन्त्रमार्गाधिकारश्च—

"स तेषां मायया जातं गोवधं गौतमो मुनिः ।
केनापि हेतुना ज्ञात्वा शशापातीव कोपनः ॥
भविष्यथ त्रयीबाह्या महापातकिभिस्समाः ।
बभूवुस्तेन ते शप्ता ध्यायमानाः पुनः पुनः ॥
सर्वे सम्प्राप्य देवेशं शङ्करं विष्णुमव्ययम् ।
अस्तुवन्लौकिकैः स्तोत्रैरुच्छिष्टा इव सर्वतः ॥
देवदेवौ महादेवौ भक्तानामार्तिनाशनौ ।
का नो वृत्तिर्महाभाग शापात्त्रातुमर्हथः ॥
तदा पार्श्वे स्थितं विष्णुं सम्प्रेक्ष्य वृषभध्वजः ।
किमेतेषां भवेत्कार्यं प्राह पुण्यैषिणामिति ॥
ततस्स भगवान्विष्णुश्शरण्यो भक्तवत्सलः ।
गोपतिं प्राह विप्रेन्द्रानालोक्य प्रणतान् हरिः ॥
वेदबाह्ये तु पुरुषे पुण्यलेशोऽत्र शङ्कर ।
न विद्यते महादेव धर्मो वेदाद्विनिर्बभौ ॥
तथाऽपि भक्तवात्सल्याद्रक्षितव्या महेश्वर ।
तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनां ॥
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ।

एवं सञ्चोदितो रुद्रो माधवेन मुरारिणा ॥
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ।
कापालं लागुडं शाक्तं भैरवं पूर्वपश्चिमम् ॥
पाञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः ।"---

इत्यादिना तेषां कथञ्चिद्वृत्तिप्राप्तये शिवकेशवाभ्यां पाशुपतपाञ्चरात्रादयः प्रणीता इति वर्णनेन दर्शितः ॥— इति ॥

**तन्न;** भवदुदाहृतवामनपुराणवचने स्वतन्त्राणां पाशुपताद्यागमानां निर्मूलत्ववेदानधिकारिविषयत्वयोः प्रतिपादनेऽप्येकायनशाखामूलकतयाऽस्वतन्त्रस्य पाञ्चरात्रस्य निर्मूलत्वादिप्रतिपादनपरत्वासिद्धेः । **श्रीवाराहे** रुद्रगीतासु—

"एवमुक्तस्ततो देवैर्मामुवाच जनार्दनः ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥
अल्पायासं दर्शयित्वा फलं शीघ्रं प्रदर्शय ।
एवमुक्तस्ततस्तेन देवेन परमेष्ठिना ॥
आत्मा तु गोपितस्सद्यः प्रकाशं गमितस्त्वहम् ।
ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च ॥
नयसिद्धान्तमार्गेण मया शास्त्रं प्रदर्शितम् ।
पाशोऽयं पशुभावस्तु यदा प्रपतितो भवेत् ॥
तदा पाशुपतं शास्त्रं जायते वेदवर्जितम् ॥"—

इत्यगस्त्यं प्रति रुद्रवचनैः, **भविष्यत्पुराणे** द्विचत्वारिंशेऽध्याये—

"दृष्टप्रत्ययमात्राणि शास्त्राणि कृतवानहम् ।
यस्मात्पशुपतिश्चाहं मत्कृतास्शास्त्रविस्तराः ॥
सर्वे पाशुपता ज्ञेया वेदमार्गविरोधिनः ।
शिवश्चाहं यतस्तस्माच्छैवशास्त्राणि कानि चित् ॥
मया कृताश्च विज्ञेयास्ते च वैदिकनिन्दकाः ।"-

चिद्रक्षणार्थत्वे कल्पनीये 'ततस्स भगवान्विष्णुश्शरण्यो भक्तवत्सलः' इति रक्षणोपयुक्तशरण्यत्वभक्तवत्सलत्वरूपविशेषणद्वयस्य भगवत्यभिधानात्, 'तथाऽपि भक्तवात्सल्याद्रक्षितव्या महेश्वर' इति रक्षणैकप्रवृत्तेन भगवता तेषां रक्षितव्यत्वाभिधानाच्च तत्प्रोक्तं भगवच्छास्त्रमेव रक्षणार्थमिति प्रतीयते; वाराहपुराणभविष्यत्पुराणादित्यपुराणादिभिर्मोहनार्थत्वेन प्रसिद्धेषु पाशुपतादिषु रक्षणार्थत्वकल्पनाया असम्भवात् ॥

न च—पाञ्चरात्रस्य रक्षणार्थत्वे गौतमशापस्य वैफल्यं स्यादिति—वाच्यम्; शापस्य पाशुपताद्यसच्छास्त्रप्रवृत्तिद्वारा तदुक्तकर्मानुष्ठानेन चिरकालनरकानुभवफलकत्वेन साफल्यात् ॥ न चैवं—पाञ्चरात्रस्य कथं रक्षणार्थत्वमिति—वाच्यम्; तादृशनरकानुभवानन्तरमिह लोके जातानां भगवदाराधनादिप्रवर्तनद्वारा भगवत्प्राप्तिहेतुत्वे पाञ्चरात्रस्य रक्षणार्थत्वोपपत्तेः। उक्तं चैतत्कौर्म एव—

"कृत्वा तानूचतुर्देवौ कुर्वाणाश्शास्त्रचोदितम्।
पतन्तो निरये घोरे बहून् कल्पान् पुनः पुनः ॥
जायन्ते मानुषे लोके क्षीणपुण्यचयास्ततः।
ईश्वराराधनबलाद्गच्छध्वं सुकृतां गतिम् ॥" —इति ॥

अत्रेश्वरशब्देन भगवानेवाभिधीयते;

"ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम्।
भक्ता नारायणं देवं दुर्गाण्यतितरन्ति ते ॥"—

इति महाभारतादौ तस्यैव निरुपाधिकेश्वरत्वेन प्रसिद्धेः ॥ न च—ईश्वरश्शर्व ईशान इत्यादिकोशलौकिकप्रसिद्ध्यनुरोधादीश्वरशब्दस्य शिवपरत्वं युक्तमिति—वाच्यम्; भगवदाराधनस्य गौतमशापमुक्तिहेतुतायाः कूर्मपुराण एव प्रतिपाद्यमानाया अनुपपत्तेः। उक्तं च कौर्मे

एव षड्विंशोऽध्याये—

"ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः ।
सर्वे ते च जनिष्यन्ति ब्राह्मणाद्यासु योनिषु ॥
निन्दन्ति च हृषीकेशं ब्राह्मणान् ब्रह्मवादिनः ।
वेदबाह्यव्रताचारा दुराचारा दुरागमाः ॥
मोहयन्ति जनान् सर्वान् दर्शयित्वा फलानि तु ।
तमसाऽऽविष्टमनसो वैडालव्रतिकाधमाः ॥
पाञ्चरात्रविदो ये तु यथाकामं परं नृप ।
एकान्तिभावोपगतास्तं हरिं प्रविशन्ति तु ॥
पञ्चकालविधानज्ञा पूजयन्ति जनार्दनम् ।
पूजां तु तेषां द्विगुणां स तु देवः प्रयच्छति ॥"—इति ॥

**परं**- अनन्तरमित्यर्थः । तथा च—असच्छास्त्रप्रवृत्तिप्रयुक्तनरकाद्यनुभवानन्तरं पाञ्चरात्रानुरोधेन भगवन्तमाराध्य मुक्तिं गच्छतीत्यखण्डार्थः । तस्मात्कौर्मवचनैर्भगवच्छास्त्रे वैदिकाधिकारिकत्वं रक्षणार्थत्वं च सिध्यति, न तु मोहनार्थत्वादिकमिति ॥

**यदपि**—दुष्करप्रायश्चित्तपापापादितवैदिकमार्गबहिर्भावानां तन्त्राधिकारस्साम्बपुराणे दर्शितः—

"श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः ।
क्रमेण श्रुतिसिद्ध्यर्थं वैदिकस्तन्त्रमाश्रयेत् ॥
धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् ।
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ॥
भयदुर्बलचित्तानां मरणे जायते भयम् ।
तेषामेव हि रक्षार्थं खल्वहं तन्त्रमुक्तवान् ॥"—इति—**इति** ॥

**तन्न**; उक्तसाम्बपुराणवचनेन तन्त्रस्य वेदाधिकारसिद्ध्यौपयिकप्रायश्चित्तप्रतिपादकतालाभेऽपि वेदभ्रष्टानामधिकाराकथनात्, तन्त्र-

माश्रयेदित्यस्य तन्त्रोक्तप्रायश्चित्तं कुर्यादित्यर्थात्, तन्त्रोक्तकर्माधिकारं भजेदिति भवदभिमतार्थस्य प्रायश्चित्तविधानप्रकरणाननुगुणत्वात्, तादृशार्थाङ्गीकारेऽपि वैदिकानामधिकारानिषेधेन तेषामप्यधिकारस्य दुर्वारत्वात् ॥

न च—'तेषामेव हि रक्षार्थं खल्वहं तन्त्रमुक्तवान्' इत्येवकारेण तदतिरिक्तानामधिकारनिषेधः क्रियत इति—वाच्यम्; वैदिकानामधिकारप्रतिपादकोदाहरिष्यमाणवचनबलादेवकारस्याप्यर्थकत्वनिश्चयात्, 'समवायितया वाच्यत्वाभावो घट एव प्रसिद्ध' इत्यादावेवकारस्याप्यर्थकताया नैयायिकैरङ्गीकारात् ॥

**यदपि**—कौर्म एव—

"अथांशोस्सात्त्वतो नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदा वरः ॥
स नारदस्य वचनाद्वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिश्श्रितम् ॥
तस्य नाम्ना तु विख्यातं सात्त्वत नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥"—

इति सङ्करयोनिजानां तन्त्राधिकारो दर्शितः— इति ।

**तन्न**; 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः' इत्यत्र ब्रह्मक्षत्रपदयोश्चराचरसामान्यलक्षकत्ववदत्रत्य कुण्डगोलादिपदस्य त्रैवर्णिकसामान्यलाक्षणिकत्वात्। 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' 'जायमानो वै ब्राह्मणस्त्रिभि ऋणवा जायते' इत्यादौ ब्राह्मणपदस्य त्रैवर्णिकसामान्यपरतायाश्शास्त्रसिद्धत्वात्। तस्येतरपर्युदासार्थत्वे—

"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु ॥
सात्त्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ।"—

इति महाभारतवचनविरोधापत्तेः। कुण्डगोलादीनामपि भगवच्छास्त्रे पाञ्चकालिकानुष्ठानादेः प्रतिपादनाद्वैदिककर्मस्वनधिकृतानां कुण्डादीनामपि हितावहमिति प्रशंसोपपत्तेः॥ एतेन--

"तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत्।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवस्स्मृतः॥"--

इति भागवतदशमस्कन्धवचनमपि निर्व्यूढम्॥

यदपि----वाराहे तान्त्रिकभूयिष्ठम्लेच्छदेशवासादिना भ्रष्टवेदानां ब्राह्मणादीनां तन्त्रमार्गाधिकारो दर्शितः----

पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम्।
संहिताजपमास्थाय ते मां पश्यन्ति ब्राह्मणाः॥
अलाभे वेदमन्त्राणां पाञ्चरात्रोदितेन वा।
मार्गेण ये प्रपद्यन्ते ते मां पश्यन्ति मानवाः॥
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते।
शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति॥
एवं मयोक्तं विप्रेन्द्र पुरा कल्पे पुरातनम्।
पाञ्चरात्रं सहस्राणां यदि कश्चिद्ग्रहिष्यति॥
कर्मक्षये च मां कश्चिद्यदि सम्यग्भजिष्यति।
तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति॥
वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन च द्विजैः।
प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विज॥" ----इति॥

अत्र शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यतीत्यनेन तन्त्रमार्गे स्त्रीशूद्रादीनामधिकारपर्युदासो न विवक्षितः, भागवतादौ तेषामपि तन्त्राधिकारप्रतिपादनात्; महाभारतेऽपि "शूद्रैश्च कृतलक्षणैः। अर्चनीयश्च सेव्यश्च" इति शूद्राणां तन्त्राधिकारप्रतिपादनाच्च। किं तु--शूद्रादीनां सकाशादिदं शास्त्रं न श्रोतव्यमिति शूद्रादीनामुपदेष्टृत्वं निषिध्यते।

"स्त्रियश्शूद्रादयश्चापि बोधयेयुर्हिताहितम् ।
यथार्हं माननीयाश्च नार्हन्त्याचार्यतां क्वचित् ॥"—

इति शूद्रादीनामाचार्यत्वनिषेधात् ॥ —इति ॥

**तन्न**; उक्तवचनानां भ्रष्टवेदानां ब्राह्मणादीनां तन्त्रमार्गाधिकारप्रदर्शनपरत्वे 'वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन च द्विज' इत्यनेन वेदपाञ्चरात्रयोस्समुच्चयप्रतिपादनविरोधात्, वेदपाञ्चरात्रोक्तकर्मानुगृहीतया वेदपाञ्चरात्रोक्तया भक्त्या अहं प्राप्य इति तदर्थात्, केवलवेदस्य—

"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
भक्त्या त्वनन्यया शक्यः अहमेवं विधोऽर्जुन ॥"—

इति भगवत्प्राप्तिहेतुत्वप्रतिषेधात् । यद्वा—वेदेन वेदानुवचनेन, पाञ्चरात्रेण पाञ्चरात्रपाठेनेत्यर्थः । अलाभे वेदमन्त्राणामिति शूद्रादीनां वेदानधिकारित्वप्रयुक्तवेदमन्त्रालाभे पाञ्चरात्रोदितेन तान्त्रिकमार्गेण भगवदाराधनविधानपरं, न तु भ्रष्टवेदानां ब्राह्मणानां तद्विधानपरम् । तथा हि—'कथमाराध्यसे देव वर्णैर्विप्रादिभिर्विभो ।' इति ब्राह्मणादीनां सर्वेषामपि भगवदाराधनप्रकारं नारदः पप्रच्छ; अनन्तरं च भगवता तस्मै 'पौरुषं सूक्तमास्थाय ये यजन्ति द्विजोत्तमाः ।' इत्यादिना वेदाधिकारिणां स्वाराधनप्रकारो दर्शितः ; पश्चात्तु अवसरप्राप्तशूद्रादिकर्तृकतदाराधनप्रकारजिज्ञासायां अलाभे वेदमन्त्राणामित्यादिना तत्कथनस्यैवौचित्यप्राप्तत्वात् । एतेन—

"वैदिकेन विधानेन पूजां कुर्याद्धरेस्ततः ।
अलाभे वेदमन्त्राणां पाञ्चरात्रोदितेन वा ॥"—

इति जमदग्निस्मृतिवचनमपि व्याख्यातम्; तस्य वाराहवचनतुल्याकारत्वात् ।

उक्तं हि विष्वक्सेनसंहितायामुपरिभागे—

"वैदिकं तान्त्रिकं चेति तथा वैदिकतान्त्रिकम् ।
त्रिविधं कर्म सम्प्रोक्तं पाञ्चरात्रार्णवामृते ॥
वैदिकं ब्राह्मणानां तु राज्ञां वैदिकतान्त्रिकम् ।
तान्त्रिकं वैश्यशूद्राणाम्" —इति ॥

तस्मात् अलाभे वेदमन्त्राणामित्यन्योक्तार्थ एव युक्तः । शूद्राणां तु न तच्छ्रोत्रपदवीमुपयास्यतीत्यस्य कुसृष्टिकल्पनमपि न युक्तम्; शूद्रादीनां वेदवत्पाञ्चरात्रस्यापि श्रवणनिषेधरूपार्थे स्वरसतः प्रतीयमाने बाधकविरहात्; भारतादावपि शूद्रादीनां पाञ्चरात्रश्रवणाप्रतिपादनेन तद्विरोधाभावात्; तत्र तेषां तन्त्रमार्गेऽधिकारमात्रप्रतिपादनात् ॥ न चैवं—शूद्रादीनां तन्त्रोक्तकर्माधिकारोऽपि न सिध्यति, पाञ्चरात्रश्रवणाभावे तदर्थपरिज्ञानाभावादिति—वाच्यम्; तथा सति श्रुतिस्मृतीतिहासपुराणश्रवणेऽधिकाराभावेन तत्प्रतिपादितधर्मेष्वपि तेषामनधिकारप्रसङ्गात् ॥ न च—श्रुत्यादिश्रवणेऽनधिकारेऽपि तदधिकारिब्राह्मणसकाशात्तदर्थपरिज्ञानेन तदुक्तकर्मानुष्ठानोपपत्तिरिति—वाच्यम्; शूद्रादीनां पाञ्चरात्रश्रवणपठनयोरनधिकारेऽपि ब्राह्मणसकाशात्तदर्थपरिज्ञानेन तदुक्तकर्मानुष्ठानोपपत्तेरिति तुल्यम् ॥

यदपि कौर्मे—

"पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ॥"—

इति वेदभ्रष्टानां पाञ्चरात्राधिकारो दर्शितः । तथा तत्रैव—'चक्राङ्कितधराः केचित्कुले विष्णुपरिग्रहे ।' इति विष्णुपरिगृहीतकुलोत्पन्नानामनादिवैष्णवानां देवलकानां तन्त्रमार्गाधिकारो दर्शितः—इति ।

तन्न; वेदार्थस्य दुरधिगमत्वेन ज्ञानतो भ्रष्टान् अनधिकारित्वेन भ्रष्टान् गौतमशापेन च भ्रष्टांश्च रक्षितुं पाञ्चरात्रमुक्तवानिति—प्रथमश्लोकार्थात्; तेन वेदभ्रष्टानां तन्त्राधिकार इत्यस्या-

सिद्धेः । अस्तु वा तथा ; तथाऽप्याहिंसासत्यवचनादिष्विव तान्त्रिकमार्गे वेदभ्रष्टानामधिकारेऽपि वैदिकानामप्यधिकारस्य दुर्वारत्वात्, चक्राङ्कितधराः केचिदित्यस्यानादिवैष्णवानामधिकारप्रतिपादकत्वेऽपि देवलकानामेव तन्त्राधिकार इत्यर्थपरत्वाभावात् ॥

यदपि--वैदिकानां तन्त्राधिकारो न सम्भवति, 'विमोहनाय शास्त्राणि करिष्यावो वृषध्वज' इति कौर्मवचनेन पाञ्चरात्राद्यागमस्य वैदिकजनव्यामोहनार्थत्वावगमेन,

"बुद्धश्रावकनिर्गन्धाः पाञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाषण्डा ये हि ते द्विधा ॥
यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः ।
न तस्य तद्भवेच्छ्राद्धं प्रेत्य चेह न तत्फलम् ॥
वामाः पाशुपताचारास्तथा वै पाञ्चरात्रिकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥
शैवान् पाशुपतान् जैनान् लौकायतिकनास्तिकान् ।
पाञ्चरात्रमतान् दृष्ट्वा सवासा जलमाविशेत् ॥"—

इति तान्त्रिकमार्गप्रवेशननिन्दावचनैर्वैदिकानां तन्त्राधिकारनिषेधप्रतीतेस्तान्त्रिकमार्गस्यैकजातिमात्रविषयत्वपर्यवसानात् ॥—इति ॥

तन्न ; पाञ्चरात्रस्य न मोहनार्थत्वं, किं तु रक्षणार्थत्वमित्यस्य प्राक् प्रतिपादनात्, उदाहृतनिन्दावचनानां महाभारतादिविरोधेनानादरणीयत्वात्; आदरणीयत्वेऽपि पाञ्चरात्रविद इत्यादेः पाञ्चरात्रमात्रविदो वेदविद्वेषिण इत्यर्थाङ्गीकारेण वैदिकानां तन्त्राधिकारे बाधकाभावात्,

'अपाञ्चरात्रिका ये च ये च वेदविनिन्दकाः ।'
"ये नास्तिकमता ये च पाञ्चरात्रविनिन्दकाः ।
तान् दृष्ट्वाऽप्यथवा श्रुत्वा पातित्यं याति तत्क्षणात् ॥

वेदांश्च पाञ्चरात्रं च धर्मशास्त्रं च मानवम् ।
दूषयन्ति कुतर्कैर्ये तान्नराञ्चावलोकयेत् ॥
तान् दृष्ट्वाऽप्यथवा श्रुत्वा पातित्यं याति तत्क्षणात् ।
व्रजेच्च नरकान् घोरान्यावदाभूतसम्प्लवम् ॥
निन्दन्ति चतुरो वेदान् पाञ्चरात्रं च मानवाः ।
तमसा भ्रष्टविज्ञानास्सम्प्राप्ते तु कलौ युगे ॥
तद्दर्शनात्तदालापात्सद्यः पातित्यमाप्नुयात् ।
अज्ञानाद्यदि वा मोहात्तैरालापं समाचरेत् ॥
चान्द्रायणत्रयं कृत्वा दद्याद्गाञ्च पयस्विनीम् ।
मासं तैस्सह सङ्गम्य ब्रह्महत्याव्रतं चरेत् ॥"—

इत्यादिवचनानां पाञ्चरात्रिकादिनिन्दकनिन्दापराणां बहूनामुपलम्भाद्वैदिकानां तन्त्राधिकारस्यावश्याङ्गीकरणीयत्वात् ॥

किं च महाभारते मोक्षधर्मे नारायणीये षष्टिशततमेऽध्याये—

"राजोपरिचरो नाम बभूवाधिपतिर्भुवः ।
अखण्डलसखः ख्यातो भक्तो नारायणं हरिम् ॥
सात्वतं विधिमास्थाय नारायणमुखोद्भवम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥
पितॄनृषींश्च विप्रांश्च संविभज्याश्रितांश्च सः ।
पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ॥
प्रापणं भगवद्भक्तं भुञ्जते चाग्रभोजनम् ।
काम्यनैमित्तिकास्त्वं याज्ञीयाः परमक्रियाः ॥
सर्वं सात्वतमास्थाय विधिं चक्रे समाहितः ।"—

इत्यादिना वैदिकमार्गनिष्ठस्यैवोपरिचरवसोस्तान्त्रिकमार्गानुवर्तनप्रतिपादनात् कथं तान्त्रिकधर्मस्यैकजातिमात्रविषयत्वम् ॥

यत्तु—उपरिचरवसूपाख्यानस्य नाधिकारिविशेषव्यवस्थापकत्वम्, राजा राजसूयेन यजेतेत्यादाविव विध्युद्देशे द्विजातीनामधिकाराश्रवणात्; आर्थवादिकपुरुषप्रतीतेश्चाधिकारिविशेषव्यवस्थापकत्वायोगात्। अन्यथा देवा वै सत्रमासतेत्यार्थवादिकपुरुषप्रतीत्या देवादीनामपि यागाधिकारप्रसङ्गः—इति। तन्न;

"गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः॥
विधिना केन जुहुयात्।"—

इति युधिष्ठिरप्रश्नस्य पाञ्चरात्रविधिनेत्युत्तरं मनसि निधाय उपरिचरवसूपाख्यानावतारेण प्रश्नोत्तरपर्यालोचनया गृहस्थादीनां वेदमार्गनिष्ठानां द्विजातीनामधिकारसिद्धेः। उपरिचरवसूपाख्यानस्यार्थवादत्वेऽपि निरर्थकार्थवादासम्भवादर्थवादमात्रस्य विधिनियतत्वेन युधिष्ठिरप्रश्नेन भीष्मोत्तरेण च वैदिकानां द्विजानां पाञ्चरात्रमार्गाधिकारविध्युन्नयनात्। देवानां यागाद्यधिकारश्चेष्ट एव; महाभारते रामायणादौ चेन्द्रादीनां यागाद्यधिकारस्य बहुशः प्रपञ्चितत्वात्, मीमांसकैर्देवानां यागाद्यधिकारानङ्गीकारेऽपि वेदान्तिभिस्तदङ्गीकारात्, 'तदुपर्यपि बादरायणस्सम्भवात्' इत्यधिकरणे देवानामप्यधिकारव्यवस्थापनात्, 'फलार्थत्वात्तु कर्मणश्शास्त्रं सर्वाधिकारं स्यात्' इति पूर्वतन्त्रषष्ठाध्यायगतसूत्रस्य तिरश्चामन्धादीनां चाधिकारनिरासपरत्वेन तद्विरोधाभावात्। एवं भीष्मपर्वणि देवगुह्ये—

"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः।
अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु॥
सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः।
द्वापरस्य युगस्यान्त आदौ कलियुगस्य च॥"—

इति चतुर्णामपि वर्णानां पाञ्चरात्राधिकारप्रतिपादनात्तत्सिद्धिः । अपि च एकायनशाखाविहितानां तान्त्रिककर्मणां कथमेकजातिमात्रविषयत्वं, वेदोक्तकर्मणां प्रायशस्त्रैवर्णिकाधिकारिकत्वात् ॥

यत्तु—'एतया निषादं स्थपतिं याजयेत्' 'वर्षासु रथकार आदधीत' इत्यादिवेदविहितानां स्थपतीष्टिरथकाराधानादीनां शूद्रसङ्करजातिधर्मत्ववदेकायनशाखाविहिततन्त्रमार्गस्य शूद्रसङ्करजातिधर्मत्वोपपत्तिः, निषादस्थपतीष्टयङ्गयजमानमन्त्राध्ययनवच्छूद्रस्यापि तन्त्रमार्गविनियुक्तमन्त्राध्ययनोपपत्तेश्च । आथर्वणिकमार्गस्य त्रयीबाह्यविषयत्ववदेकायनशाखामार्गस्यापि त्रयीबाह्यविषयत्वस्य स्मृतिपुराणादिसिद्धत्वाच्च—इति ॥

तन्न । यस्य कर्मणो यदधिकारिकत्वं विधिवाक्यावगतं तस्य कर्मणस्तदधिकारिकत्वमवश्यमङ्गीकरणीयं; तथा च स्थपतीष्ट्यादाविव तन्त्रोक्तकर्मसु विधिवाक्याच्छूद्राधिकारिकत्वानवगमात् कथं तेषां तदधिकारिकत्वं; प्रत्युत पाञ्चरात्रतन्त्रे द्विजानामेव तन्त्रमार्गाधिकारप्रतिपादनात्, 'वैदिकं तु पुरा कृत्वा पश्चात्तन्त्रं समाचरेत्' इति वैदिकतान्त्रिकमार्गयोस्समुच्चयप्रतिपादनाच्च तन्त्रोक्तकर्मणां द्विजात्यधिकारिकत्वमावश्यकम् ॥

यत्तु—तथाङ्गीकारे वामागमेषु वामाचारस्यापि वैदिकाचारेण सह समुच्चयप्रतिपादनाद्वैदिकानामपि वाममार्गाधिकारप्रसङ्गः—इति ॥

तन्न; सद्यस्तुष्टिकरसुरापानादिविधानप्रचुराणां वामाचारोपदेशानामतिक्लेशसाध्यवैदिककर्मत्याजनार्थत्वात् गुडजिह्विकान्यायेन वैदिकमार्गश्रद्धालुश्रोत्रियजनवञ्चनायैव वामागमेषु वैदिकमार्गानुवर्तनाभ्युपगमात्तेषां वैदिककर्मानुवर्तने तात्पर्यविरहात् ॥

**यच्चोक्तं**—

"मत्तन्त्रदीक्षितास्सर्वे मत्पुत्राः परिकीर्तिताः।
अतो मदीयसर्वस्वहरणार्हास्तु ते मताः॥"—

इति तन्त्रदीक्षितानां देवालयस्वहरणे दोषाभावस्य तन्त्र एव प्रतिपादनेन, तन्त्रमार्गानुवर्तिशौनकग्रन्थे च—

"विष्णोर्गानं च गेयं च नटनं च विशेषतः।
ब्रह्मन् ब्राह्मणजातीनां कर्तव्यं नित्यकर्मवत्॥"—

इति नृत्तगीतादीनां धर्मत्वोपदेशेन च निर्विशङ्कदेवस्वहरणनिमित्ततन्त्रदीक्षोपज्ञस्य सद्यस्तुष्टिकरनृत्तगीतादिशिक्षकशैलूषदासीजनसहवासरुचिरस्य तन्त्रमार्गस्योपदेशोऽग्नीन्धनस्वाध्यायजपप्रमुखक्लेशात्मकवैदिककर्मत्याजनार्थोऽपि वैदिकच्छद्मार्थमेव वैदिकमार्गमनुरुन्धान इव वर्तत इति पौरुषेयागमानां वैदिकजनव्यामोहनार्थत्वावेदकस्मृतिपुराणादिहृदयज्ञैरभ्युपगन्तव्यमिति वैदिकमार्गप्रद्वेषनिबन्धनपाञ्चरात्रागमो वैदिकानुद्दिश्यप्रवर्तते—**इति। तन्न;** पाञ्चरात्र एव बहुशस्तन्त्रदीक्षितानां देवस्वहरणस्य प्रसिद्धतया 'मत्तन्त्रदीक्षिताः' इतिश्लोकस्य 'वैसर्जनहोमीयं वासोऽध्वर्युः प्रतिगृह्णाति' इत्यादिस्मृतिवद्देवस्वापहरणलोभेन कल्पितत्वात्, भगवच्छास्त्रप्रसिद्धभगवद्दिव्याभरणाद्यतिरिक्तभगवदुपभुक्तस्रक्चन्दनहविरादिग्रहणे भागवतानां प्राथम्यप्रतिपादनपरत्वाद्वा, "अपि पापेष्वभिरताः मद्भक्ताः पाण्डुनन्दन। मुच्यन्ते पातकैस्सर्वैः" इत्यादिभगवद्भक्तप्रशंसापरमहाभारतादिवचनवदस्यापि तत्प्रशंसापरत्वाद्वा विरोधाभावात्॥

**यदपि**—ब्राह्मणानां शैलूषादिसहवाससाध्यगीतादिधर्मत्वप्रतिपादकशौनकवचनमूलतया भगवच्छास्त्रस्यावैदिकत्वकल्पनम्। **तदपि न;** शौनकवचने गीतादेश्शैलूषादिसहवाससाध्यत्वाप्रतिपादनात्, गीतादेरष्टादशविद्यास्थानान्तर्गतगान्धर्वशास्त्राध्ययनसाध्यत्वात्, गीतादि

निषेधशास्त्रस्य च कल्पसूत्रकृता आश्वलायनेन नमश्शौनकायेति गुरुत्वेन नमस्कृतस्य शौनकस्य वचनेनाविरोधाय शैलूषादिवज्जीवनौपयिक-त्रैवर्णिककर्तृकगीतादिनिषेधपरत्वात् । अन्यथा—'एतत्सामगायन्नास्ते' इति श्रुतेः, 'बृहत्पृष्ठ भवति' 'रथन्तरं षष्ठं भवति' 'क्रतुषु रथन्तरं गायति' इत्यादिक्रत्वङ्गगीतिविधायकश्रुतीनां,

"वीणावादनतत्त्वज्ञश्श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं निगच्छति ॥
गीतिज्ञो यदि गीतेन नाप्नोति परमं पदम् ।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥"—

इति याज्ञवल्क्यस्मृतेः,

"नारायणे तिष्ठति च नारदः प्रत्यदृश्यत ।
महर्षिर्विग्रहरुचिर्विद्वान् गान्धर्ववेदवित् ॥
गाता चतुर्णां वेदानामुद्गाताप्रथमर्त्विजाम् ।
स नारदोऽथ ब्रह्मर्षिर्ब्रह्मलोकचरोऽव्ययः ॥
स्वरैश्च सप्तभिर्विष्णुं जगौ विप्रस्सनारदः ।
षड्जमध्यममाविध्यऋषभं च ततः परम् ॥
मिश्रयित्वा च गान्धारं तथा धैवतमध्यमम् ।
पञ्चमं च ततः कुर्वन्निषादं तदनन्तरम् ॥
काकलीं पञ्चमात्रान्तु ततो वेदश्रुतिप्रभौ ।
तिस्रस्तिस्रस्तथा राजन् वर्यैश्च सह सर्वशः ॥
तानातानगणानां च विविच्य क्रमशः प्रभुः ।
तैश्चापि सप्तभिर्वाच्यैर्वाचकैश्चापि सर्वशः ॥
अनन्तमीड्यं देवेशं जगौ ब्रह्मपुरस्सरम् ।
एतैस्सप्तभिराद्येशं विचिन्वन्प्रणवं तथा ॥"—

इत्यादिमहाभारतवचनजातस्य,

"पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम् ।
जातिभिस्सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥
शृङ्गारहास्यकारुण्यवीररौद्रभयानकैः ।
बीभत्सादिरसैर्युक्तं काव्यमेतदगायताम् ॥
तौ तु गान्धर्वतत्त्वज्ञौ मूर्छनास्थानकोविदौ ।
भ्रातरौ स्वरसम्पन्नौ गन्धर्वाविव रूपिणौ ॥"—

इत्यादिश्रीरामायणवचनजातस्य,

"हरिगीतं विना नान्यद्ब्राह्मणेन नरोत्तम ।
भाषागानं न गातव्यं तस्मात्पापं त्वया कृतम् ॥"—

इति मात्स्यवचनस्य,

"नृत्यतां श्रीपतेरग्रे करसंस्फोटनादिभिः ।
उड्डीयन्ते शरीरस्था महापातकपक्षिणः ॥"—

इत्यादिस्मृतेश्चाप्रामाण्यप्रसङ्गात् ॥

**यदपि** सूतगीतायां—

"राजा तु वैदिकान् सर्वांस्तान्त्रिकानखिलानपि ।
अनुकर्णतया नित्यं स्थापयेन्मतिमत्तमः ॥
तन्त्राणि तन्त्रनिष्ठानां साधकान्यपि च क्रमात् ।
बाधकानविशेषेण वेदमार्गेण वर्तिनाम् ॥
वर्णाश्रमपरिभ्रष्टः प्रायश्चित्तपराङ्मुखः ।
वेदेतरागमं गत्वा तदुक्तं धर्ममाचरेत् ॥
तन्त्रेषु दीक्षितो मर्त्यो वैदिकं न स्पृशेत्सदा ।
वैदिकश्चापि तन्त्रेषु दीक्षितं न स्पृशेत्सदा ॥"—

इति स्पष्टमेव वैदिकानां तन्त्रमार्गानधिकारः प्रतिपादितः—इति ॥

**तन्न**; वैदिकानामपि वेदाधिकारप्रतिपादकमहाभारतवचनविरोधेनोक्तवचनानामनुपादेयत्वात् । न च विनिगमनाविरहः; हरिवंशे—

"भारत सर्वशास्त्राणामुत्तमं भरतर्षभ।",

भविष्यत्पुराणे—

"त्रिदशानां यथा विष्णुर्द्विपदां ब्राह्मणो यथा।
भूषणाना च सर्वेषां यथा चूडामणिर्वरः।
यथाऽयुधानां कुलिशमिन्द्रियाणां यथा मनः।
तथैव सर्वशास्त्राणां महाभारतमुत्तमम्॥"—

इत्यादिभिर्महाभारतस्योत्कर्षावगमात्। ब्रह्माण्डे च—

"ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम्।
मूलरामायण चैव पुराणं चैतदात्मकम्॥
ये चानुयायिनस्तेषा सर्वे ते च सदागमा.।
दुरागमास्तदन्ये ये न तैर्ज्ञेयो जनार्दन.॥"—

इति महाभारतविरुद्धानामनुपादेयत्वाभिधानात्; पाशुपताद्यागमविषयतया उक्तवचनानामविरुद्धत्वाच्च॥

**यदपि**—वैदिकानां प्रयोजनाभावादपि न तान्त्रिककर्मानुष्ठानसम्भव; न हि वैदिककर्मानवाप्यस्तान्त्रिकमार्गलभ्यः कश्चित्पुरुषार्थोऽस्ति, येन तादृशपुरुषार्थलाभाय तान्त्रिकमार्गे प्रवर्तेत;

"यज्ञानां तपसां चैव शुभानां चैव कर्मणाम्।
वेद एव द्विजातीना निश्श्रेयसकरः परः॥"—

इति वेदस्यैव निश्श्रेयसकरत्वप्रतिपादनात्—इति। **तन्न**; वैदिककर्मानवाप्य पुरुषार्थशून्यत्वस्य वैदिकान्प्रत्यनुपादेयताप्रयोजकत्वे स्मृतिपुराणादेरप्यनुपादेयत्वापत्तेः, वेदविरुद्धार्थप्रतिपादकत्वस्यैव तान् प्रत्यनुपादेयताप्रयोजकत्वात्, तस्य च पाञ्चरात्रेऽभावात्। उक्तयाज्ञवल्क्यवचने च वेदशब्दो न तन्मात्रपरः, तथा सतीतिहासपुरा-

णादीनामपि निश्श्रेयसकरत्वानापत्त्या 'अजिह्मो भारतः पन्था निर्वाणपथगामिनाम्' इत्यादिमात्स्यवचनविरोधापत्तेः, वेदनिष्ठस्य निश्श्रेयसकरत्वस्य मोक्षजनकध्यानहेतुभूततत्समानाकारशाब्दबोधजनकत्वरूपस्य पुराणादावपि सत्त्वेन तन्निषेधानुपपत्तेश्च। किं तु वेदतदुपजीविप्रमाणोभयपर इति वेदानुसारिपाञ्चरात्रस्याप्युपादेयत्वमवर्जनीयम् ॥

यदपि भारते—

"संस्थिते तु नृपे तस्मिन् शास्त्रमेतत्सनातनम्।
अन्तर्धास्यति तत्सर्वमेतद्वः कथितं मया ॥"—

इत्युपरिचरवसुप्रमाणकाल एव प्रणष्टकोशस्तान्त्रिकमार्गः कथमाधुनिकैरनुवर्तयितुं शक्यः—इति। तन्न; संस्थिते तु नृप इत्यनेन नृपमरणोत्तरकालीनान्तर्धानाश्रयत्वस्य शास्त्रे बोधनेऽपि प्रणष्टकोशत्वाबोधात्। अन्तर्धानं हि स्वनिष्ठो योऽन्यकर्तृकदर्शनविषयताविरहः तदुद्देश्यकव्यापारः, उपाध्यायादन्तर्धत्ते छात्र इत्यादावुपाध्यायकर्तृकदर्शनविषयताया यस्स्वनिष्ठोऽभावस्तदुद्देश्यकव्यापारकर्ता छात्र इति बोधात्। तथा च तादृशनृपनाशे विष्णुविद्वेषिणां बहूनामुत्पत्तेस्तेभ्यश्शास्त्रस्यान्तर्धानोपपत्तिः। शास्त्रमन्तर्धास्यतीत्यस्य कोशं नङ्क्ष्यतीत्यर्थाङ्गीकारे च पुरुषार्थप्रयोजकतावच्छेदकविषयताशालिबोधजनकवाक्यसमुदायशक्तस्य शास्त्रपदस्य कोशे निरुक्तव्यापारे शक्तस्य धातोश्चनाशे लक्षणाप्रसङ्गः; घटो नश्यतीत्यादौ यत्किञ्चिद्घटनाशबोधवत् शास्त्रमन्तर्धास्यतीत्यस्य कतिपयकोशनाशेऽप्युपपत्त्या कोशसामान्यनाशाप्रतीतेः; तावता तस्य मन्दप्रचारत्वमेवावगम्यते। यथोक्तमानुशासनिके अष्टत्रिंशेऽध्याये—

"जातो मन्दप्रचारो हि धर्मः कलियुगे नृप।"—इति ॥

श्रीविष्णुपुराणेऽपि कलिधर्मे—

"कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ।
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥" —इति ॥

यदि च—अन्तर्धानप्रतिपादनस्य प्रायिकत्वाभिप्रायकत्वं नाङ्गीक्रियते, तदा श्रीविष्णुपुराणादौ कलिधर्मे—

"वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम् ।
न सामयजुऋग्धर्मविनिष्पादनहैतुकी ॥
न दाम्पत्यक्रमो नैव वह्निदैवात्मकः क्रमः ।
देवताश्च कलौ सर्वास्सर्वस्सर्वस्य चाश्रमः ॥
स्त्रिय कलौ भविष्यन्ति स्वैरिण्यो ललितस्पृहाः ।
न स्वाध्यायवषट्कारौ स्वधास्वाहाविवर्जितः ॥"—

इत्यादिना कलौ वर्णाश्रमाचाराभावप्रतिपादनात्तेषामप्यनुवृत्त्यनुपपत्तेः। तत्र प्रायिकत्वाभिप्रायकत्वे च समं प्रकृतेऽपि ॥

यदपि—पाञ्चरात्रस्य न तावदीश्वरप्रत्यक्षमूलकतया प्रामाण्यम्, सत्सूत्र एव धर्मप्रामाण्यस्य प्रत्यक्षमूलत्वनिराकरणात्; नाप्येकायनशाखामूलत्वेन प्रामाण्यम्, तत्सद्भावे मानाभावात्; भूमविद्यास्थैकायनशब्दस्य नीतिशास्त्रपरत्वेन, 'सर्वेषां रूपाणां चक्षुरेकायनं, सर्वेषां स्पर्शानां त्वगेकायनम्' इत्यादिबृहदारण्योपनिषदन्तर्गतैकायनब्राह्मणपरत्वेन वा विलक्षणप्रस्थानैकायनशाखापरत्वासिद्धेः; विलक्षणैकायनशाखाभ्युपगमेऽपि तस्य पौरुषेयागमरूपत्वेन वेदत्वासिद्धेः। एकायनशाखे शाखात्वव्यवहारस्य सनत्कुमारसंहितादिषु संहितात्वव्यवहारवद्वेदत्वासाधकत्वात् क्वचिद्वेदत्वव्यवहारस्य भारतादिषु वेदत्वव्यवहारवद्गौणत्वेनोपपादनीयत्वात्। अन्यथा—एकायनशाखाया वेदत्वे तन्मूलतया पञ्चरात्रस्य वैदिकत्वापत्तौ—

"आग्नेयं पाञ्चरात्रं तु दीक्षायुक्तं च तान्त्रिकम् ।
अवैदिकत्वात्तत्त्यक्त्वा तथा वैखानसेन तु ॥
सौम्येन वैदिकेनैव देवदेवं समर्चयेत् ।"—

इति वैखानसाद्यागमेषु पाञ्चरात्रस्य वैदिकत्वाभावप्रतिपादनं, 'स्वतन्त्रा आगमास्सर्वे निर्मूलाः परिकीर्तिताः ।' इति वामनपुराणे निर्मूलत्वप्रतिपादनं च विरुध्यते—इति ॥

**तन्न**; प्रमाणलक्षणे धर्मस्य प्रत्यक्षविषयतानिराकरणस्यास्मदादिप्रत्यक्षविषयत्वेन पाञ्चरात्रस्य भगवत्साक्षात्कारमूलकतया प्रामाण्यसम्भवात् ॥ उक्तं च **वेदान्ताचार्यैस्सेश्वरमीमांसायाम् सत्सूत्रभाष्ये**—

"प्रत्यक्षमस्मदादीनां पक्षोऽत्राभिमतस्ततः ।
न भागासिद्धता नापि बाधो हेत्वोरिहोक्तयोः ॥"—इति ॥

**आगमप्रामाण्येऽपि** भगवच्छास्त्रस्येश्वरप्रत्यक्षमूलकत्वमुक्तम्—

"श्रुतिप्रत्यक्षयोस्तत्र यतो मूलत्वनिश्चयः ॥"        —इति ॥

एवमेकायनशाखामूलकतयाऽपि तस्य प्रामाण्यम् । एकायनशाखा च भूमविद्यायामुक्ता; तत्रत्यैकायनशब्दस्य नीतिशास्त्रपरत्वासिद्धेः, तस्य नीतिशास्त्रे प्रसिद्ध्यभावात्; सर्वेषां रूपाणां चक्षुरेकायनमित्यादिवाक्यघटितवाक्यस्यापि मैत्रेयीब्राह्मणसमाख्यावत्त्वेन एकायनसमाख्यावत्त्वाभावात् । एकायनशब्दस्य शाखाविशेषे प्रसिद्धेः, अस्मर्यमाणकर्तृकत्वाच्च तस्याश्श्रुतित्वसिद्धेर्न पौरुषेयत्वाशङ्का । पौरुषेयत्वकल्पने हि तस्य मूलभूतवाक्यान्तरस्य तादृशवाक्येऽपौरुषेयत्वस्य कल्पनीयतया गौरवात्;

"आद्यमेकायनं वेदं सद्ब्रह्मप्रतिपादकम् ।
एकायनीयशाखोक्तान् मन्त्रान् सर्वासु दिक्षु च ॥"

इत्यादिना पाद्मसंहितादौ वेदत्वादेरभिधानाच्च। महाभारतादौ दृढकर्तृस्मरणरूपसाधकबलेन तस्य गौणत्वेऽपि प्रकृते बाधकाभावेन गौणत्वायोगात्। न च—अत्राप्यवैदिकत्वादिप्रतिपादकवचनविरोधो बाधक इति—वाच्यम्; तेषां वचनानां महाभारतादिविरोधेनानुपादेयत्वात्, नहिनिन्दान्यायेन वैखानसागमप्रशंसापरत्वाद्वा॥

यदपि—स्मृतिपुराणादिष्वेवाङ्कननिषेधो बहुधा दृश्यते; 'स्वशरीरेऽन्यदेहे वा भवेदात्रिकिणी द्विजः'—इति मनुवचनम्। इदं हि—द्विजशब्दार्थानां ब्राह्मणक्षत्रियवैश्यानां सामान्यतस्त्रिकिणनिषेधपरं, त्रिकिणाश्च ब्रह्मविष्णुरुद्रचिह्नाङ्कनरूपाः; 'न ब्रह्मविष्णुरुद्राणां चिह्नमेकस्य धारयेत्।' इति वचनान्तरानुसारात्, दाहच्छेदप्रहाररूपनिमित्तत्रयजनिता वा लोके तथादर्शनात्। न तु ज्याघातयुद्धकर्षणार्थनिरन्तराभिकानिमित्ताः, ज्याघातादिनिमित्तकिणस्य क्षत्रियधर्मत्वेन तन्निषेधायोगात्; द्विजशब्दस्य क्षत्रियव्यतिरिक्तपरत्वे सङ्कोचापत्ते; अन्यदेहे घृतादिनिमित्तस्य किणस्याप्रसक्तेश्च। अतो द्विजशब्दार्थानुसारेण किणशब्दार्थो वर्णनीय इति सामान्यतश्शङ्खचक्राद्यङ्कननिषेधो दुर्वार—इति। तन्न; उक्तवचने कर्तृतासम्बन्धावच्छिन्नाकिणनिष्ठत्रित्वावच्छिन्नावच्छेदकताकभेदरूपस्य भूयात्वधर्मासाधारणधर्मस्येष्टसाधनत्वादिबोधेऽपि किणत्रयस्यानिष्टसाधनत्वाबोधेन तन्निषेधकत्वानुपपत्तेः॥

न च—तादृशभेदरूपासाधारणधर्मे प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वस्य लिङा बोधनात्तादृशभेदाभावस्य किणत्रयात्मकस्य प्रत्यवायप्रयोजकत्वलाभान्निषेधोपपत्तिरिति--वाच्यम्, घटवति घटपटोभयाभावो नास्तीति प्रतीत्यनुदयेनोभयत्वावच्छिन्ननिरूपिताधिकरणताया एवोभयाभावाभावत्ववत्तादृशभेदाभावत्वस्यापि त्रित्वावच्छिन्ननिरूपक-

ताकाधिकरणतायामेव कल्पनात्। तथा चोक्तवचनस्य किणत्रयसमुच्चयनिषेधपरत्वेऽपि विष्णुचिह्ननिषेधपरत्वाभावान्न दोषः ॥ यद्वा—उक्तवचनं त्रिशूलशिखात्रयनिमित्तककिणत्रयनिषेधपरम् ॥

**तद्व्याख्यातारस्तु**—किणत्रयं च ज्याघातयुद्धद्यूतार्थनिरन्तरासिकानिमित्तं; द्विजशब्दश्चात्र ब्राह्मणपरः। न चैव-त्रैवर्णिकसाधारणस्य द्विजशब्दस्य ब्राह्मणत्वावच्छिन्नपरत्वे सामान्यवाचिशब्दस्य विशेषधर्मावच्छिन्नलाक्षणिकत्वरूपसङ्कोचापत्तिरिति—वाच्यम्; 'दन्तविप्राण्डजा द्विजाः' इत्यमरकोशनानार्थवर्गे द्विजशब्दस्य ब्राह्मणत्वावच्छिन्न एव शक्ते. प्रतिपादनात्सामान्यवाचितया विशेषलाक्षणिकतायाश्चासिद्धेः;

"विप्रक्षत्रियविट्छूद्राश्चातुर्वर्ण्यमिति स्मृतम्।
आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेवबाडबाः॥
विप्रश्च ब्राह्मणः"—

इति तत्रैव विप्रशब्दस्य ब्राह्मणवाचित्वोक्तेः॥ —इति वदन्ति॥

'न ब्रह्मविष्णुरुद्राणां चिह्नमेकस्य धारयेत्'-इति वचन च मूलस्मृतिषु क्वापि न दृश्यते; दृश्यते चेदेकस्य शरीरे समुदितं न धार्यमित्येवं पर व्याख्येयम्॥

**यदप्युक्तम्**—देवतायुधलाञ्छननिषेधोऽपि स्मृतिषु दृश्यते;

तदाह शातातपः—

"अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः।
अङ्कयेद्यदि वा मोहात्पतत्येव न संशयः॥" —इति;

यमोऽपि—

"नाङ्कयेन्न दहेद्गात्रं दहेच्चेत्कामकारतः।
नाधिकुर्वन्ति दग्धाङ्गा श्श्रौतस्मार्तेषु कर्मसु॥" —इति;

हारीतोऽपि—

"रागसम्भिन्नगात्राणां न स्यात्पारत्रिकं सुखम्।

सङ्ग्रामभयरोगाद्यैर्बलाच्चिह्नैर्न दुष्यति ॥" —इति ॥

अत्र कामो राग, रागश्च भक्तिरित्यत्र भक्तिमात्रेण तत्तद्देवताभक्तै-स्तत्तच्चिह्नधारणानिषेधः क्रियते —इति ॥

तत्र; वृद्धमनुः—

"ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते नरः।

तेन तस्याशुभं नश्येच्छुभमस्य विवर्धते ॥" —इति;

वृद्धपराशरः—

"अग्निनैव तु सयुक्तं चक्रमादाय वै द्विजः।

धारयेत्सर्ववर्णानां हरिसालोक्यसिद्धये ॥" —इति;

यमः—

'उपवीती शिखायुक्तश्चक्रलाञ्छनसंयुतः।'

'चक्रलाञ्छनहीनस्य विप्रस्य विफला क्रिया ॥' —इति;

शङ्खः—

"उपवीतादिवद्धार्याश्शङ्खचक्रगदादयः।

ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥" —इति;

व्यासः—

"ब्राह्मणः क्षत्रियो वैश्यश्शूद्रश्च श्रद्धयाऽन्वितः।

चक्रं च पाञ्चजन्यं च बिभृयादग्निसंयुतम् ॥" —इति;

विष्णुः—

"ब्राह्मणः क्षत्रियो वैश्यश्शूद्रश्च श्रद्धयाऽन्वितः।

चक्रं च पाञ्चजन्यं च बिभृयादग्निसंयुतम् ॥"—

इत्यादिस्मृतिवचनैर्विष्णुचक्रादिलाञ्छनस्य विहिततया तन्निषेधायोगे-नोक्तवचनानां देवतान्तरायुधलाञ्छननिषेधपरत्वावसायात्। 'अन्यैर्न

दाहयेद्यत्र ब्राह्मणैर्हरिलाञ्छनात् ।' इति वचनेन देवतासामान्य-वाचकपदघटितानां विषयव्यवस्थासिद्धेश्च। उक्तवचनेषु देवताशब्दस्य देवतासामान्यपरत्वेऽपि ख्यातिलाभादिरूपार्वाचीनफलेच्छाधीनाङ्कनस्यैव निषेधप्रतीत्या विरोधविरहात्। प्रथमवचने मोहपदेन द्वितीयवचने कामकारपदेन तृतीयवचने रागपदेन तादृशेच्छाबोधनात्। कामपदस्य भक्तिपरतायाः क्वाप्यदर्शनात् ॥

**यदपि**—विशिष्य तन्निषेधो निन्दा च दृश्यते; यथाऽऽह हारीतः—

"तप्तचक्रधराश्चैव ये चायुधधरा अपि ।
शिरोलिङ्गधराश्चैव कण्ठलिङ्गधरास्तथा ॥
पाषण्डास्सर्व एवैते सर्वकर्मबहिष्कृताः ।" —इति ॥

तथा स्मृतिसारसङ्ग्रहे—

"पाषण्डं पतितं व्यङ्गं तप्तचक्रधरं द्विजम् ।
सूतिकामग्निदं स्पृष्ट्वा सवासा जलमाविशेत् ॥
शैवान् पाशुपतान् जैनान् लौकायतिकनास्तिकान् ।
तप्तचक्रधरान् दृष्ट्वा सवासा जलमाविशेत् ॥
शिवलिङ्गधरा ये तु ये जटामुण्डधारिणः ।
तप्तचक्रधरा ये च तान् द्विजान्नावलोकयेत् ॥" —इति ॥

ग्रन्थान्तरे—

"कुक्कुटश्च वराहश्च तप्तचक्रधरस्तथा ।
रजस्वला च षण्डश्च पञ्चैते श्राद्धदूषकाः ॥
जटिनश्चैव मुण्डांश्च लूनकेशान् कपालिनः ।
तप्तचक्रधरांश्चैव रौद्रचिह्नविधारकान् ॥
देवतान्तरचिह्नांश्च वेदनिन्दापरांस्तथा ।
स्पृष्ट्वैतानशुचिर्भूत्वा घृतं प्राश्य विशुध्यति ॥

चक्राङ्किताय दत्तानि हव्यकव्यानि यानि वै ।
रक्षांसि तानि गच्छन्ति न पितॄन् न च देवताः ॥
पाषण्डिनश्च पतिता ये च चक्राङ्किता जनाः ।
पुण्यकर्मणि तेषां वै सन्निधिर्नेष्यते क्वचित् ॥
तस्माच्चक्राङ्कितं विप्रं न पश्येत्पुण्यकर्मणि ।
तं स्पृष्ट्वा च द्विजो भूमावशुद्धिं सहसाऽऽप्नुयात् ॥"—इति ॥

बृहदाह्निके—

"श्रौतस्मार्तक्रियो नित्यं नाङ्कयेदङ्गमङ्कनैः ।
अपि विष्ण्वादिसम्बन्धैस्तस्सर्वो पतितो भवेत् ॥
अज्ञानादथवा लोभाद्रागतो वा सुदर्शनम् ।
धत्ते कुलघ्नं तं दृष्ट्वा सवासा जलमाविशेत् ॥
भुजाग्रे सलिलेनैव विलिखेद्यस्सुदर्शनम् ।
वेदशास्त्रविनीतोऽपि दहत्यासप्तमं कुलम् ॥
चक्राङ्किततनुर्वाऽपि राजन् लिङ्गाङ्कितोऽपि वा ।
नाधिकारी परिज्ञेयश्श्रौतस्मार्तेषु कर्मसु ॥
शङ्खं चक्रं च लिङ्गं च यो मूढो धारयत्यसौ ।
पाषण्डस्स हि विज्ञेयस्सर्वकर्मबहिष्कृतः ॥
पाषण्डिनं पाशुपतं विकर्मस्थं निरीश्वरम् ।
विवासयेत्स्वराष्ट्रात्तु सर्वानेतानवैदिकान् ॥" —इति ॥

तन्न; उक्तवचनानां मोक्षातिरिक्तफलेच्छाधीनस्य परिहासार्थस्य जीवनार्थस्य वा सुदर्शनधारणस्य निषेधपरत्वेनाविरोधात्; अन्यथा सुदर्शनधारणसामान्यनिषेधपरत्वे अप्रामाण्यप्रसङ्गात्, उदाहृतशतपथश्रुतिभिस्सुदर्शनधारणस्य विहितत्वात्, श्रुतिविरुद्धस्मृतेरप्रामाण्यस्य विरोधाधिकरणन्यायसिद्धत्वात् ॥ यद्वा–सुदर्शनधारणविषय-

समस्तनिषेधवचनानां मृदायसादिनिर्मितचक्रादिधारणनिषेधपरत्वान्नानुपपत्तिः ;

"शङ्खं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिष्कार्यस्सर्वस्माद्द्विजकर्मणः ॥"—

इति विष्णुवचनैकार्थ्यात् ॥

यत्तु—विधेस्सुवर्णादिनिर्मितचक्रादिधारणविषयत्वं निषेधस्य मृदायसादिनिर्मितचक्रादिधारणविषयत्वमिति विषयभेदकल्पनं तावदयुक्तं, ब्राह्मणानां सुवर्णादिकृतचक्रादिधारणस्यापि निषेधदर्शनात् ; यथाऽऽह नारदः—

"ताम्ररूप्यसुवर्णादिकृतचक्रादिलाञ्छनम् ।
विधीयते हि शूद्राणां न द्विजानां कथञ्चन ॥"—इति ;

किं तु निषेधस्य ब्राह्मणादिविषयतया विधेश्च शूद्रादिविषयतया व्यवस्थापनं युक्तम् । तथा च आदित्यपुराणे—

"वेदेषु यज्ञभागेषु यस्य नास्त्यधिकारिता ।
स तापयित्वा चक्रादि धारयेत्स्वभुजद्वये ॥" —इति ;

विष्णुरपि—

"शङ्खचक्राद्यङ्कनं च नृत्तगीतादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥
यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रस्सर्वकर्मसु गर्हितः ॥
शङ्खचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिष्कार्यस्सर्वस्माद्द्विजकर्मणः ॥" —इति ॥

अत्र च विष्णुस्मृतौ मृदायसादिपदं स्थालीपुलाकन्यायेन हेमरूप्यादिसकलप्रकृतिद्रव्योपलक्षणपरं, पूर्वोदाहृतनारदवचनैकार्थ्यात् । किं च—प्रथमश्लोके मृदायसादिप्रकृतिद्रव्यविशेषानादरेण द्विजातीनां सामा-

न्यतो हेमरूप्यादिसाधारणशङ्खचक्रादिधारणनिषेधप्रतीतेः तृतीयेऽपि श्लोके मृदायसादिपदस्य हेमरूप्यादिसकलप्रकृतिद्रव्योपलक्षणपरत्वमाश्रित्य सामान्यतो हेमरूप्यादिनिर्मितसुदर्शनधारणस्य दोषहेतुत्वप्रतिपादनपरत्वमेव वक्तुमुचितम्; वेदोपक्रमाधिकरणन्यायेनैकस्मिन्वाक्ये निश्चितोपक्रमानुसारेणोपसंहारस्य नेतव्यत्वात्—इति ॥ तन्न—

"धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा।
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम् ॥"—

इति श्रुतेः प्रणवानुसन्धानपूर्वकविष्णुध्यानाङ्गतया चक्रादिधारणस्य विधानात्तस्य ब्राह्मणविषयतासिद्धेः, शूद्राणां प्रणवानुसन्धाने अधिकाराभावात्, गायत्रीं प्रणवं यजुर्लक्ष्मीं शूद्राय नेच्छन्तीति शूद्राणां प्रणवजपप्रतिषेधात्। दक्षिणे तु भुजे विप्र इति श्रुत्या,

"ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः।
अवश्यं धारयेच्चक्रमग्नितप्तमतन्द्रितः ॥"—

इति स्मृत्या च सर्वाश्रमिणां तद्विधानेन;

"सुदर्शनं धारयित्वा वह्नितप्तं द्विजोत्तमः।
उपनीयविधानेन पश्चात्कर्मसु योजयेत् ॥"—

इत्युपनयनात्प्राग्धारणविधानेन च तत्सिद्धेः। शूद्राणामाश्रमविभागस्य उपनयनस्य चाभावात्; ताम्ररूप्यसुवर्णादीति नारदवचने च ताम्ररूप्यसुवर्णानि आदिर्यस्य आयसं तत्ताम्ररूप्यसुवर्णादीत्यतद्गुणसंविज्ञानबहुव्रीहिराश्रयणीयः, शङ्खचक्रे मृदा यस्त्विति विष्णुवचनैकार्थ्यात्; अन्यथा—

"सुवर्णरूप्यताम्राद्यैः कृत्वा शङ्खं सुदर्शनम्।
द्विजातिरेकजातिश्च बिभृयादग्निसंयुतम् ॥"—

इति नारदेनैवोक्तत्वेन स्वव्याघातापत्तेः। न चैवं तद्वचने ताम्राद्युपादानं व्यर्थम्; तदुपादानस्य द्विजातीनां तत्कृतधारणानुमत्यर्थत्वात् ॥

**यद्यपि**—सुवर्णरूप्यताम्राद्यैः कृत्वा शङ्खमिति श्लोकेनैव तदनुमतिस्सिद्धा ; **तथाऽपि**—दार्ढ्यार्थं तच्छ्लोके तदुपादानमिति न वैयर्थ्यं; वेदेषु यज्ञभागेष्वित्यादित्यपुराणवचने सतापयित्वेत्यस्य सोऽपि तापयित्वेत्यर्थाद्वचनस्याशूद्रविषयतया चक्रधारणव्यवस्थापकत्वायोगात्। यथा दर्शपूर्णमासप्रकरणे—

"तस्मादाहिताग्निः श्रद्धादेयः स्वकृत इरिणेनावद्येत्तस्मान्मलवद्वाससा न संवदेत न सहासीत नास्या अन्नमद्यात् केशश्मश्रु वपते नखानि निकृन्तते तीर्थे स्नाति ।"—

इत्यादिवाक्यविहितानामूषरवासत्यागादीनामाहिताग्निकर्तृकत्वेन विहितानामप्याहिताग्नितदितरसाधारण्यं, अवधारणाभावात्; तद्वत्। न च—ऊषरवासादीनामुभयसाधारण्येन प्राप्तत्वात्तत्त्यागस्याप्युभयसाधारण्यं युक्तं, प्रकृते च सतापयित्वेत्यस्य तदितरसाधारण्येमानाभाव इति—वाच्यम् ;

"चक्रादिधारयेद्विप्रो ललाटे मस्तके भुजे।
पातकादिविशुद्ध्यर्थं भवक्लेशविनाशनम् ॥"—

इत्यादित्यपुराण एवोक्तत्वेन तदनुरोधेन सतापयित्वेत्यस्य सोऽपि तापयित्वेत्यर्थावश्यकत्वात् ॥

शङ्खचक्राद्यङ्कनामिति विष्णुवचनस्यायमर्थः। एकजातेः—शूद्रात्; ब्राह्मणक्षत्रियवैश्यानां चक्राद्यङ्कनादिकं कदाचिदपि न स्यादिति। तथा च—द्विजातीनां शूद्रशिष्यत्वनिषेधपरत्वान्न दोषः;

"ब्राह्मणः क्षत्रियो वैश्यश्शूद्रश्च श्रद्धयाऽन्वितः।
चक्रं च पाञ्चजन्यं च बिभृयादग्निसंयुतम् ॥"—

इति विष्णुनैव चक्राङ्कनस्य ब्राह्मणधर्मत्वप्रतिपादनेनोक्तार्थस्यैव युक्तत्वात् ॥

एतेनोपक्रमाधिकरणन्यायानुसारो निरस्तः; गीतादेर्ब्राह्मणधर्मत्वस्य प्राक्प्रपञ्चितत्वात्, दक्षिणे तु भुजे विप्र इत्यादिश्रुतिविरोधात् भगवच्छास्त्रादिवचनविरोधाच्च ब्राह्मणादीनां सुदर्शनधारणनिषेधासम्भवात्; तथाचक्राङ्कित इत्यत्र तथा अचक्राङ्कित इति पदच्छेदाङ्गीकारान्न विरोधः ॥

**यत्तु**—सुदर्शनधारणगोचरनिषेधवचनानां यदि धात्वर्थोपरञ्जकमृदायसादिनिषेधविधिपरत्वं कल्प्यते, तदा वामागमेषु—

'रसो वै स, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति ।'

"तस्मात्सुरारसस्सेव्यो वैदिकैश्श्रुतिचोदनात् ।
हेमरूप्यादिपात्रेषु सेव्य एव सुरारसः ॥
दार्वायसादिपात्रेषु न सेव्यो मोक्षकामिभिः ।"—

इति सुरापाननिषेधात्। न सुरां पिबेदित्यादिनिषेधवचनानामपि दार्वायसादिपात्रपाननिषेधपरत्वं स्यात् । एवमेव—द्वासप्ततिर्जटा धार्या इत्यादिसङ्ख्याविशेषयुक्तजटाधारणविधानानुसारेण तन्निषेधवचनानामपि चोदितसङ्ख्यान्यूनाधिकसङ्ख्याकजटाधारणनिषेधपरत्वं स्यात्। एवमेव—लिङ्गधारणाविधायकवचनेष्वपि धार्यलिङ्गपरिमाणनियमप्रतिपादनात् तन्निषेधवचनानामपि लिङ्गधारणवाक्यचोदितलिङ्गपरिमाणव्यतिरिक्तपरिमाणनिषेधपरत्वं स्यात्। तथैवार्हतागमेषु केशोल्लुञ्छनादीनां पर्वकालादिनियमाविधानात् तन्निषेधवचनानामपि पर्वकालव्यतिरिक्तकालपरत्वं स्यात्। किं बहुना—सर्वेऽपि बाह्यागमाः कर्तृदेशकालद्रव्यगुणसङ्ख्यापरिमाणादिनियमयुक्तानेव दुराचारान् विदधत इति तत्तद्बाह्यागमाविहितदुराचारनिषेधवचनानामपि तत्तदुरागमविहि-

तकर्तृदेशकालादिव्यतिरिक्तकर्त्रादिविषयत्वं स्यादिति सर्वोऽपि पाषण्डमार्गो बहुमानितस्स्यात्––इति ॥

अत्रोच्यते—विशेषविषयविधिशास्त्रविशिष्टत्वे सति तच्छास्त्रापेक्षयाऽधिकबलत्वाभाववत्त्वे सति विशेषान्तरविषयनिषेधशास्त्रविशिष्टस्य सामान्यनिषेधशास्त्रस्य विहितातिरिक्तविशेषनिषेधपरत्वमिति नियमः; पशुमालभेतेति विशेषविधिविशिष्टस्य तदपेक्षयाऽधिकबलशून्यस्य अहिंसन्नन्यत्र तीर्थेभ्य इति विशेषनिषेधशास्त्रविशिष्टस्य न हिंस्यादिति सामान्यनिषेधस्य विहितातिरिक्तनिषेधपरत्वदर्शनात्, सत्यकामस्सत्यसङ्कल्प इत्यादिगुणविशेषविधिवाक्यविशिष्टस्य 'अपहतपाप्मा विजरो विमृत्युर्विशोकः' इत्यादिविशेषनिषेधविशिष्टस्य निर्गुणमित्यादिसामान्यनिषेधस्य विहितातिरिक्तनिषेधपरत्वदर्शनाच्च। प्रथमसत्यन्तोपादानाच्च नानृतं वदेदिति सामान्यनिषेधस्य विशेषनिषेधपरत्वाभावेऽपि न क्षतिः, द्वितीयसत्यन्तोपादानाच्च 'हेमरूप्यादिपात्रेषु सेव्य एव सुरारसः' इति वामागमविधिविशिष्टस्य न सुरां पिबेदिति श्रौतनिषेधस्य विशेषपरत्वाभावेऽपि न क्षतिः; विध्यपेक्षया निषेधस्याधिकबलवत्त्वात्। तथा च–नोक्तप्रतिबन्दीनामवकाशः। प्रकृते च—

"सुवर्णरूप्यताम्राद्यैः कृत्वा शङ्खं सुदर्शनम्।
द्विजातिरेकजातिश्च बिभृयादग्निसन्तुतम् ॥"—

इति विधिविशिष्टस्य तदपेक्षयाऽधिकबलशून्यस्य,

"शङ्खचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा।
स शूद्रवद्बहिष्कार्यस्सर्वस्माद्द्विजकर्मणः ॥"—

इति विशेषनिषेधयुक्तस्य,

'श्रौतस्मार्तक्रियो नित्यं नाङ्कयेदङ्गमङ्कनैः'––

इति सामान्यनिषेधस्य तप्तायसादिकृतसुदर्शनादिधारणनिषेधपरत्वमिति न विरोधगन्धः ॥

न च--विधिशास्त्रविशिष्टस्य सामान्यनिषेधस्य सति विशेषनिषेधे तत्परत्वमिति नियमात्तस्यायसादिनिर्मितसुदर्शनादिधारणनिषेधपरत्वमिति न युक्त, ब्राह्मणकर्तृकसुदर्शनधारणनिषेधरूपविशेषनिषेधस्यापि सत्त्वेन विनिगमनाविरहेण सामान्यनिषेधस्य तत्परताया अपि दुर्वारत्वादिति--वाच्यम्; ब्राह्मणकर्तृकसुदर्शनधारणनिषेधस्यानुपलम्भात्, एकजातेरयं धर्म इत्यस्यार्थान्तरपरताया वर्णितत्वात्;

"दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्।
ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते द्विजः ॥
उपवीतादिवद्धार्याः शङ्खचक्रगदादयः।
ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥
चक्रादीन् धारयेद्विप्रो ललाटे मस्तके भुजे।"—

इत्यादिश्रुतिस्मृतिपुराणवचनेषु ब्राह्मणानामपि सुदर्शनधारणविधानेन तन्निषेधानुपपत्तेश्च ॥

यत्तु--'देवा वै सत्रमासत, गावो वा एतत्सत्रमासत' इत्यादिवदुदाहृतवचनानामर्थवादरूपतया शूद्राधिकारिकचक्रधारणस्तुत्यर्थत्वान्न विरोधः; जर्तिलयवाग्वा वा जुहुयादित्येवमादीनां पयोविधिस्तुत्यर्थत्ववदुदाहृतवचनानामपि शूद्रकर्तृकधारणस्तुत्यर्थत्वोपपत्तेः --इति ॥

तन्न; 'देवा वै सत्रमासत' इत्यादेरर्थवादतया तत्राविवक्षितार्थताया युक्तत्वेऽपि विधिवाक्यगतानां विप्रादिपदानामविवक्षितार्थत्वायोगात्; स्वर्गकामो यजेतेत्यादिविधिवाक्यगतलिङ्गार्थस्य पुंस्त्वादेरविवक्षितत्वस्य दर्शनेऽपि विधिवाक्यगतप्रातिपदिकार्थस्याधिकारिणो विवक्षाविरहस्य क्वाप्यसिद्धेः। न च--अपि वायसश्चण्डालश्शिव इति वाक्यं वदेत् तेन सह भुञ्जीतेत्यादौ विधिवाक्येऽपि चण्डाल-

पदस्याविवक्षितार्थत्वं दृश्यत इति—वाच्यम्; उक्तवाक्ये तेन सह भुञ्जीतेत्यस्य सत्त्वेनाविवक्षोपपत्तेः, 'अपि वा मातरं गच्छेत्तुलाद्रव्यं तु न स्पृशेत्' इत्यादौ अपिवेत्यस्य तथात्वदर्शनात्, दक्षिणे तु भुजे विप्र इत्यादावविवक्षासूचकस्यादर्शनेनाविवक्षाया वक्तुमशक्यत्वात्; द्विजातिषु तद्धारणविधायकवचनानां शूद्रोद्देश्यकचक्रादिधारणविधायकविष्णुस्मृत्यसमभिव्याहृतत्वेन तदेकवाक्यत्वाभावाज्जर्तिलन्यायाप्रवृत्तेश्च। न च—शाखान्तरीयज्योतिष्टोमाङ्गवाक्यानां शाखान्तरीयज्योतिष्टोमप्रधानवाक्यस्य च सम्भूयोच्चारणरूपसमभिव्याहाराभावेऽपि विषयैकत्ववदिहापि सुदर्शनधारणरूपविषयैक्यादेकवाक्यत्वस्य तन्निबन्धनस्तुत्यर्थत्वस्य च कल्पनोपपत्तिरिति- वाच्यम्; तथाऽपि शूद्रकर्तृकसुदर्शनधारणविधायकानामेव ब्राह्मणकर्तृकतद्विधिस्तुत्यर्थत्वस्य विनिगमनाविरहेणापत्तेः, शूद्रस्यापि सुदर्शनधारणे पापनिवृत्तिर्भवति किं पुनर्ब्राह्मणस्येति स्तुतिसम्भवात्, ब्राह्मणकर्तृकतद्विधिवचनानां शूद्रकर्तृकतद्विधिस्तुत्यर्थत्वे उपवीताशिखाबन्धादीनां सहविधानानुपपत्तेश्च ॥

तस्मादुदाहृतश्रुतिस्मृतीतिहासपुराणमण्डलानुमोदितं सुदर्शनधारणं चतुर्णां वर्णानां धर्म इति सिद्धम् ॥

**यदप्युक्तं**—अस्तु वा सुदर्शनधारणं द्विजातीनामपि धर्मः, तथाऽपि देवलकानां सात्वतपदाभिधेयानां वैष्णवानामेव धर्मः। तथा च **विष्णुयामले**—

"कृष्णो लोकहितार्थाय पाञ्चरात्रं महोदयम्।
विधाय तस्य रक्षार्थं सात्वतान् समकल्पयत् ॥
स्वीयत्वज्ञापनायैषां लाञ्छनं कृतवान् विभुः।"—इति;

**स्कान्दे**—

"वैष्णवा द्विविधाः प्रोक्तास्सादयोऽनादयस्तथा।
कुलधर्मो भवेद्येषा तन्त्रदीक्षा तु वैष्णवी ॥

तेऽनादिवैष्णवाः प्रोक्तास्सात्वता इति च श्रुताः ॥
वेदमार्गपरिभ्रष्टा ये महापातकादिभिः ।
तन्त्रदीक्षा तत. प्राप्तास्सादयो वैष्णवास्तु ते ॥
उभयेषाममीषां च शङ्खचक्रादिधारणम् ।
धर्मः प्रकल्पितो ब्रह्मन्नेतरेषामिति स्थितिः ॥" —इति

बृहदाह्निकेऽपि—

"काम्यं नैमित्तिकमिति यद्वद्वेल्लाञ्छनं द्विधा ।
सर्वमेतद्धवेद्धर्मस्सात्वतानामिति स्थिति. ॥
येऽनादिवैष्णवाः प्रोक्तास्ते स्युस्तान्त्रिकवैदिकाः ।
तेषां तूपनयात्पूर्वं कार्यं चक्रादिलाञ्छनम् ॥
तन्त्रदीक्षां विना यस्तु शङ्खचक्रादिलाञ्छनम् ।
बिभर्ति स तु पाषण्डो विज्ञेयस्तत्त्वदर्शिभिः ॥"—इति ॥

एवमन्यान्यपि तन्त्रदीक्षितानामेव शङ्खचक्रादिधारणाधिकारव्यवस्थापकानि परस्सहस्रवचनानि ग्रन्थान्तरेषु द्रष्टव्यानि —इति ॥

**तन्न**—पाञ्चरात्राधिकारिव्यवस्थापनावसर एव सुदर्शनधारणस्य देवलकमात्रविषयताया निराकरणात्; किञ्च भवदुदाहृतवचने 'काम्यं नैमित्तिकमिति यद्वद्वेल्लाञ्छनं द्विधा' इति द्विविधस्य लाञ्छनस्य देवलकमात्रविषयत्वाक्रमेऽपि 'येन पूतस्तरति दुष्कृतानि' इत्यादिश्रुतिसिद्धस्य नित्यस्य चक्रधारणस्य तन्मात्रविषयत्वासिद्धेः; उदाहृतस्कान्दादिवचनामप्युक्तवचनैकार्थ्येन काम्यनैमित्तिकपरत्वात् ॥

**यदपि**—तप्तमुद्राधारणं द्विजातिभिर्नानुष्ठेयं, धारणे महाफलवन्महादोषस्यापि श्रवणात्, फलापेक्षया दोषस्यैव प्रबलत्वात्। तदुक्तं मनुना—

"श्रूयते च महान् दोषश्श्रूयते च महत्फलम् ।
फल तत्र परित्याज्यं दोषो हि बलवत्तरः ॥" —इति ॥

अयमर्थः—यद्विधीयते तच्छ्रेयस्साधनं यन्निषिध्यते तत्प्रत्यवायहेतुरिति स्थिते, यद्विधीयते निषिध्यते च तच्छ्रेयस्साधनं प्रत्यवायहेतुश्च भवति ; तादृशं कर्म दोषस्यावर्जनीयत्वान्नानुष्ठेयमिति । तथा च द्विजातीनां विहितस्यापि चक्रधारणस्यानुबन्ध्यागोवधसुराग्रहादिवदननुष्ठानमेव युक्तं ; किञ्च विहितस्यापि यत्र दोषभूयस्त्वप्रदर्शनं तत्र तस्याननुष्ठानमेव । यथा 'कृत्तिकास्वग्निमादधीत' इति विहितस्याप्यग्न्याधानस्य गृहान्नदाहको भवतीति दोषश्रवणादननुष्ठानं, यथा वा शिवलिङ्गधारणादेः पौराणिकविधिविषयस्यापि निषेधनिन्दयोश्श्रवणादननुष्ठानं, तद्वदिहापि निन्दानिषेधाभ्यामननुष्ठानम् ॥
—इति ॥

अत्रोच्यते—यस्य विधिविषयत्वे सति निषेधविषयत्वं तस्य पुरुषार्थप्रयोजककृतिसाध्यत्वरूपानुष्ठेयत्वाभाव इति न व्याप्तिः ; अग्नीषोमीयं पशुमालभेतेति विधिविषयस्य न हिंस्यादिति निषेधविषयस्य च यागस्याप्यननुष्ठेयत्वापत्तेः । न च—तत्र निषेधस्य यागीयहिंसातिरिक्तविषयत्वान्न यागस्य तथात्वमिति—वाच्यम् ; प्रकृतेऽपि विधिविषयस्य सुवर्णादिकृतसुदर्शनादिधारणस्य निषेधाविषयत्वात्, आयसादिकृततद्धारणस्यैव निषेधविषयत्वानुष्ठेयत्वोपपत्तेः । किं च—विहितस्याप्यननुष्ठेयत्वे विधानस्यैव वैयर्थ्यम् । न चैवं—गोवधादेरपि विहितत्वादनुष्ठानापत्तिरिति—वाच्यम् ; विधेः कलियुगातिरिक्तविषयत्वात्तदानीमनुष्ठानोपपत्तेः, कलौ तु निषिद्धत्वादननुष्ठानोपपत्तेश्च । कृत्तिकाधानं च न विहितं, निषेधानुपपत्तेः ; किं तु जर्तिलवाक्यवद्व्रीहिण्याधानविधिशेषोऽर्थवाद एव । न चैवं—विधिविभक्तिश्रवणविरोधः ; 'यस्योभयं हविरार्तिमार्च्छेत्' इत्यादाविव निरर्थकत्वोपगमात् । शिवलिङ्गादिधारणं च पाशुपतादीनां विहितं

वैदिकानां निषिद्धमित्यधिकारिभेदेनानुष्ठानाननुष्ठाने उपपद्येते ; यदाह **विश्वामित्रः**—

"जटाभस्मास्थिरुद्राक्षलिङ्गपाषाणधारिणः ।
ये भवन्ति कलौ विप्रास्ते वै पाषण्डिनस्स्मृताः ॥"—इति ।

तस्माद्विहितस्यानुष्ठानावश्यम्भाव एव ॥

न च—श्येनेनाभिचरन् यजेतेति विधिबलाच्छ्येनयागस्याप्यनुष्ठेयत्वापत्तिरिति—वाच्यम् ; रक्षकक्षत्रियाद्यसत्त्वे अनुष्ठानस्येष्टत्वात्, षट्स्वनभिचरन् पतेदिति शास्त्रात् । न चैवं—श्रूयते च महान् दोष इत्यस्य निर्विषयत्वापत्तिरिति—वाच्यम् ; रक्षकक्षत्रियादिसत्ताकालीनाभिचारस्यैव तद्विषयत्वात् ।

"अयाज्ययाजनं कृत्वा परेषामन्त्यकर्म च ।
अभिचारमहीनं च त्रिभिः कृच्छ्रैर्विशुध्यति ॥"—

इत्यादिना प्रायश्चित्तोपदेशोऽपि रक्षकक्षत्रियसत्ताकालीनाभिचारविषय एव । तस्माद्यस्य विधानं तस्य सर्वप्रकारेण निषेधासम्भवात् येन प्रकारेण निषेधस्तदतिरिक्तप्रकारेणानुष्ठानं दुर्वारमेव ॥

यत्तु—विज्ञानयोगिना मिताक्षरायां—

"देवराद्वा सपिण्डाद्वा स्त्रिया ज्ञातिनियुक्तया ।
प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये ॥
विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।
एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन ॥"—

इति विधवानियोगं विधाय मनुस्स्वयमेव तन्निषेधति ;

"नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः ।
अन्यस्मिन्विनियुक्तानां धर्महानिस्सनातनी ॥"—

चतुष्टयम्। एवं धर्मभूतज्ञाननिष्ठावस्थागतोत्पत्त्यादेरपि पर्याप्तिचतुष्टयादिकमित्यग्रे विवेचयिष्यते। एवं च—पूर्वोत्तरावस्थधर्मभूतज्ञानयोरुपादानोपादेयभावस्य तद्विशिष्टजीवयोरुपादानोपादेयभावव्याप्यत्वात्तादृशजीवयोस्तथात्वस्य तच्छरीरकपरमात्मनोस्तथात्वव्याप्यत्वाज्जाग्रदवस्थधर्मभूतज्ञाननाशप्रतियोगित्वस्य तादृशज्ञानाश्रयजीवशरीरकपरमात्मनिष्ठत्वात्तादृशानुयोगिकत्वस्य च तत्पूर्वावस्थज्ञानाश्रयजीवशरीरकपरमात्मनिष्ठत्वात् स्वाप्ययरूपसत्सम्पत्तेः परमात्मानुयोगिकत्वोपपत्तिः; पृथिवीत्वावस्थाजलत्वावस्थादेरुत्पत्तिविनाशवत्त्वेऽपि तदवस्थपृथिव्यादिशरीरकपरमात्मनोरुपादानोपादेयभावस्य अद्भ्यः पृथिवीत्यादिश्रुत्या तादृशपरमात्मनोरेव नाशानुयोगिप्रतियोगिभावस्य च 'पृथिव्यप्सु प्रलीयते' इत्यादिश्रुत्या प्रतिपादनस्य सिद्धान्तसिद्धत्वात्॥

एवं च—यत्रैतत्पुरुषस्स्वपितीत्यादेरयमर्थः। एतत्पुरुषः—एष पुरुषः, यत्र—यत्कालावच्छेदेन, स्वपिति नाम—स्वशक्यार्थविशिष्टत्वसम्बन्धेन स्वपितीत्यानुपूर्व्यवच्छिन्ननामवान्; नामपदस्य तद्विशिष्टपरत्वाभावेऽपि निपातत्वेन भेदान्वयसम्भवेन विशिष्टलाभः; तन्नामत्वं च—तन्निष्ठशक्तिनिरूपकत्वमेव; आख्यातस्य कर्तरि शक्तेः स्वपितीत्यस्य पुरुषनामत्वोपपत्तिः, न तु सुबन्तत्वविशेषणघटितं तत्, प्रयोजनाभावाद्गौरवाच्च। न च वाक्यव्यावृत्त्यर्थं तदावश्यकं; मुक्तानां परमा गतिरिति वाक्यस्यापि नामत्वाङ्गीकारात् तिङन्तपदसाधारणपदत्वनिवेशेन तद्व्यावृत्तिसम्भवाच्च। 'सता सोम्य तदा सम्पन्नो भवति'—तत्कालावच्छेदेन प्रकृतसदनुयोगिकलयप्रतियोगी भवति; स्वमपीतो भवति—स्वानुयोगिकलयप्रयोजकधर्मवान् भवति, सम्पूर्वकपदिधातोर्नाशमात्रार्थकत्वादकर्मकत्वं; अपीतेश्च लयप्रयोजकादृष्टादिरूपधर्मार्थकत्वात् धात्वर्थतावच्छेदकलयरूपफलाश्रयत्वेन स्वपदार्थस्य कर्मता;

अपीतिधातुसमभिव्याहृतद्वितीयार्थकर्मत्वं च परसमवेतत्वाघटितमिति फलस्य कर्तृगतत्वेऽपि आत्मना आत्मानं वेत्सीत्यादाविव द्वितीया बोध्या, स्वपिति नाम—स्वप्रतियोगिकस्वानुयोगिकलययोस्समानकालिकत्वमुक्त्वा तयोर्वाच्यवाचकभावज्ञापनाय कार्यकारणभावमाह—तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवतीति; स्वप्रतियोगिकस्वानुयोगिकलयप्रयोजकधर्मवत्त्वं स्वपिति नाम प्रवृत्तिनिमित्तमित्यर्थः। अत्र यद्यपि—ष्वप् शय इति स्वपितिधातोर्निष्पन्नः स्वपितिशब्दः, न तु स्वशब्दोपपदादपीतेः; तथाऽप्यशनायादिनिर्वचनवत् इदमर्थवादरूपमुपपद्यत इति द्रष्टव्यम् ॥

अथ—अत्र समभिव्याहृतक्रियाकर्तरि शक्तेन स्वपदेन स्वापकर्तुः पुरुषस्यैव ग्रहणं स्यात्, न तु परमात्मनः; चैत्रस्स्वपुत्रं पश्यतीत्यादौ तथा दर्शनात्; न चेष्टापत्तिः, 'सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति' इति सच्छब्दस्वशब्दयोरेकविषयत्वावश्यम्भावात्—इति चेन्न। पुरुषशब्दस्यापि परमात्मपर्यन्तत्वात्, मनुष्यादिनामरूपाभिमानरागलोभाद्यनुगुणबहिर्ज्ञानप्रसरवत् जागरितावस्थजीवविशिष्टपरमात्मा देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्यान्तराभिमानकालुष्यरहितजीवशरीरकस्सन् आत्मन्यन्तर्भूत इत्यर्थ इति स्वाप्ययसूत्रटीकायां व्याख्यानात् ॥

न च—पुरुषपदस्य ब्रह्मपर्यन्तत्वमयुक्तं, तस्मादेनं स्वपितीत्याचक्षत इत्युपसंहारे लौकिकप्रसिद्ध्यनुवादात् लौकिकानां ब्रह्मणि तत्प्रसिद्धेरभावात्; एवं यत्रैतत्पुरुषः अशोषितानामपिपासितानामित्युक्तपुरुषपदयोर्ब्रह्मपर्यन्तत्वाभावेन वैरूप्यापत्तिश्चेति—वाच्यम्; प्रायपाठानुरोधेनाचक्षत इत्यस्य वैदिकप्रसिद्धिपरत्वात्; 'यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते; तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति' 'यत्रैतत्पुरुषः पिपासति,

नाम तेज एव तत्पीतं नयते, तत्तेज आचष्ट उदन्येति'–इत्यत्राचक्षत इत्यनेन वैदिकप्रसिद्धेरेव विवक्षितत्वात्, लौकिकाना जलतेजसो-रशनायोदन्याव्यवहारविरहात्; अशनेच्छापानेच्छयोरेव तद्व्यवहारात् पुरुषशब्दस्य क्वचिद्विशेषणमात्रपरस्यापि तेजश्शब्दन्यायेन प्रकृते विशिष्टपरत्वे बाधकविरहात् ॥

न च–उत्तरखण्डयो· सर्वाः प्रजास्सति सम्पद्य न विदुस्सति सम्पत्स्यामह इति, सत आगम्य न विदुस्सत आगच्छामह इतीत्यत्र प्रजाशब्दस्य विशिष्टपरत्वाभावात्, अत्रत्यपुरुषपदस्य विशिष्टपरत्वं न युक्त, सुषुप्तौ सति सम्पत्तेः प्रबोधदशायां सत आगमनस्य च स्वीकारे सति सम्पन्ना वयं सत आगता वयमिति प्रतीतिस्स्यादित्या-शङ्कानिरासाय तयो· खण्डयोः प्रवृत्तत्वात् पूर्वखण्डे पुरुषशरीरक-परमात्मनः सत्सम्पत्त्युक्तौ तत्रैव तादृशापत्तिवारणस्य युक्तत्वेऽपि जीवे तद्वारणानुचितत्वादिति–वाच्यम्; पूर्वखण्डे विशिष्टस्य तत्स-म्पत्त्युक्तावपि विशेषणांशे तादृशाशङ्कानिरासकतया उत्तरखण्डयोः प्रवृत्त्युपपत्तेर्विशिष्टे सत्सम्पत्तेर्विशेषणविशेष्योभयस्मिन् सत्सम्पत्ति-रूपत्वात्, तत्र विशेष्यांशे सर्वज्ञे तादृशप्रतीतिसत्त्वेन तदापादनासम्भ-वात्, विशेषणांश एव तादृशाशङ्काया निरसनीयत्वात्, पुरुषस्स्वपिति न विदुरित्येकवचनबहुवचनाभ्या पूर्वत्र ब्रह्मपर्यन्तताया उत्तरत्र जीवमात्रपरत्वस्य च स्फोरणात्; यथा वकुलादिनानावृक्षरसानां मध्वन्तर्गतानां अहमस्य वृक्षस्य रस इति ज्ञानं नास्ति, यथा वा समुद्रं प्रविष्टानां गङ्गादीनां अहं गङ्गेत्यादिज्ञानं नास्ति, एवं सति सम्पन्ना वयं सत आगता वयमिति प्रजानां ज्ञानं नास्तीति तादृशखण्डद्वयार्थः; विषयग्राहकत्वावस्थापन्नज्ञानाभाववत्त्व-मुभयत्र साधारणधर्मः, सुषुप्तिकाले चेतनाचेतनयोर्विशेषाभावात्तादृशा-ज्ञानसामग्रीसम्भावनाऽपि नास्तीति सूचयितुं जडदृष्टान्तोपादानम् ॥

न च—वकुलादिरसानां गङ्गादीना च मध्वपूपसमुद्रयोः प्रवेशात् पूर्वमपि तादृशज्ञानाभावस्याविशेषात् प्रवेशानन्तरकालीनत्वस्य ज्ञानाभावे कीर्तनं व्यर्थमिति—वाच्यम्; विषयत्वाश्रयत्वान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकस्य तादृशाकारविवेकसाक्षात्काराभावस्य विवक्षितत्वात् वकुलादिरसानां गङ्गादीनां च मद्धपूपसमुद्रप्रवेशात् प्रागुक्ताकारविवेकसाक्षात्कारविषयतया उक्तान्यतरसम्बन्धावच्छिन्नतादृशाभावविरहात् तादृशाभावलाभाय प्रवेशानन्तरकालीनत्वोक्तेस्सार्थकत्वात्। उक्तान्यतरसम्बन्धघटकविषयता च—कर्मप्रयोज्या ग्राह्या; तेन ईश्वरीयतादृशसाक्षात्कारस्य विषयतया नदीप्रजासु सत्त्वेऽपि न क्षतिः, सति सम्पत्स्याम इत्यादिसाक्षात्कारश्च मुक्तादीनां प्रसिद्ध इति नाप्रसिद्धिशङ्का, अहं वकुलरस इत्यादिसाक्षात्कारश्च भ्रमरादीनां प्रसिद्धः॥

यद्यपि—भ्रमरादिसाक्षात्कारस्य अहं वकुलरस इत्याकारकत्वं न युज्यते; अयं वकुलरस इत्याकारकदर्शनस्यैव युक्तत्वात्। तथाऽपि अहम्पदस्य लाक्षणिकत्वान्नानुपपत्ति, अन्यथा अहं वकुलरस इत्यादिसाक्षात्कारस्याप्रसिद्धेर्दुर्वारत्वात्। अत्र 'सति सम्पद्य न विदुः' इत्यादौ सम्पत्त्युत्तरकालीनत्वस्य न वेदनेऽन्वयः, किन्तु वेदनान्विते नञर्थे अभावे; चैत्रो न पचतीत्यादौ पाकाभावे वर्तमानत्वान्वयवत् ल्यबर्थोत्तरकालीनत्वस्यापि तत्रान्वयोपपत्तेः;

"प्रतिगृह्य तुला यस्तु प्रायश्चित्तं न चेच्छति।
अरण्ये निर्जने देशे भवति ब्रह्मराक्षसः॥"—

इत्यत्र प्रतिग्रहोत्तरकालीनत्वस्य प्रायश्चित्तेच्छाभाव एवान्वयदर्शनात्, तत्रापीच्छायामेव तदन्वये प्रतिग्रहोत्तरकालीनाया इच्छाया अभावस्य प्रतिग्रहविमुखपुरुषसाधारणतया तस्यापि ब्रह्मराक्षसत्वप्रसङ्गात्, तद्वदिहाप्यभावेऽन्वयस्य युक्तत्वात्॥

एवञ्च–उत्तरखण्डयोः प्रजाशब्दस्य विशिष्टपरत्वाभावेऽपि पुरुषशब्दस्य विशिष्टपरत्वात् निरुक्तस्वाप्ययस्य प्रधानव्यावर्तकत्वोपपत्तिः ॥

यद्वा–प्रायपाठानुरोधात् पुरुषशब्दो विशेषणमात्रपरः, स्वशब्दश्च स्वशरीरकपरः, तस्यात्मीयेऽपि शक्तेः ; एवञ्च–परसमवेतत्वघटितकर्मत्वस्य द्वितीयार्थत्वेऽपि नानुपपत्तिः, विशिष्टयोरुपादानोपादेयभावस्य विशेषणविशेष्ययोरुपादानोपादेयभावगर्भत्वस्य न विलक्षणत्वादित्यधिकरणसिद्धतया वक्ष्यमाणत्वात् ब्रह्मनिष्ठजीवलयाश्रयत्वस्यापि विशिष्टोपादानत्वानिर्वाहकत्वप्रधानव्यावर्तकत्वयोरुपपत्तिः। अयमप्यर्थो भाष्यसम्मत एव ; सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रे परिष्वञ्जकेन प्राज्ञेन परिष्वज्यमानस्याज्ञस्य जीवस्य भेदप्रतिपादनपरत्वेनाभ्युपगतायाः प्राज्ञेनात्मना सम्परिष्वक्त इति श्रुतेस्समानार्थकत्वस्य 'सता सोम्य तदा सम्पन्नो भवति' इति श्रुतावुक्तत्वात् ॥ एवं गतिसामान्यादपि प्रधानव्यावृत्तिसिद्धिः ; आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिषत्, स ऐक्षत लोकान्नु सृजा–इत्याद्युपनिषदन्तरेषु गौणेक्षणसाहचर्याभावेन आत्मशब्दसत्त्वेन च चेतनपरत्वावश्यम्भावे सति सद्विद्याया अपि तथात्वस्यावश्यकत्वात् ॥

न च–सद्विद्यायाः पुरोवादत्वात् तदनुरोधेनैव इतरकारणवाक्यानां अर्थवर्णनं युक्तं, न त्वितरवाक्यानुरोधेन सद्विद्याया इति–वाच्यम् ; कारणत्वानुवादकवाक्यानां कारणत्वांशे कारणत्वविधायकवाक्यानुरोधित्वस्यावश्यकत्वेऽपि कारणगतचेतनत्वाचेतनत्वादिधर्मांशे तदनुरोधित्वस्यानावश्यकत्वात्, सद्विद्याया एव तादृशधर्मविधायकवाक्यानुरोधित्वस्य युक्तत्वात्, यस्य वाक्यस्य यद्धर्मानुवादकत्वं तस्य तद्धर्मांशे तद्धर्मविधायकवाक्यानुरोधित्वमित्येव नियमात् ;

आत्मा वा इदमेक एवाग्र आसीदित्यत्र अग्रकालवृत्तित्वविशिष्टैकत्वविशिष्टेदमर्थे आत्मत्वस्य विधानाङ्गीकारात् ॥

न च—आत्मेत्यस्य विधेयत्वमनुचित, मुख्यविशेष्यविशेषणतापन्नस्य धर्मितावच्छेदकाभिन्नस्यैव विधेयत्वमिति नियमादिति—वाच्यम्; दध्ना जुहोतीत्यादौ विधेयभूतदध्नो मुख्यविशेष्यविशेषणत्वाभावेन प्राङ्मुखोऽन्नानि भुञ्जीतेत्यादौ विधेयभूते धर्मितावच्छेदकाभिन्नत्वाभावेन तादृशनियमासिद्धेः; दध्यादिमुख्यप्रकारकमुदीच्यमानसबोधमादाय दध्यादौ विधेयत्वोपपादने च प्रकृतेऽपि तथैव विधेयत्वोपपादनसम्भवात्; सिद्धान्ते देवदत्तः पचतीत्यादौ आख्यातार्थमुख्यविशेष्यकदेवदत्तादिप्रकारकाभेदबोधवत् आत्मा वा इदमित्यत्रापि आत्मप्रकारकतादृशबोधाङ्गीकारेण तादृशनियमाङ्गीकारेऽपि बाधकविरहाच्च। सूत्रे गतिपदं बोधपरं, समानविषयकबोधजनकत्वादित्यर्थः ॥ तथा च—सद्विद्यातात्पर्यविषयो बोधो जगत्कारणत्वनिष्ठप्रकारतानिरूपितप्रधाननिष्ठविषयताशून्यः, उपनिषदन्तरतात्पर्यविषयबोधनिष्ठविषयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताशून्यत्वात्, विशेषाभावस्य सामान्याभावव्याप्यतायामविवादात् घटसामान्याभावव्याप्यतद्विशेषाभाववद्भूतलस्य दृष्टान्तत्वात् ॥

न केवलमुपनिषदन्तरसाम्यादत्र प्रधानकारणत्वप्रतिपादनाभावः, अस्यामपि छान्दोग्योपनिषदि चेतनस्यैव कारणत्व स्पष्टमवगम्यत इत्याह 'श्रुतत्वाच्च'; सच्छब्दवाच्ये कारणे 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति जीवात्मकत्वस्य 'एष आत्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' इति चेतनत्वतद्व्याप्यधर्माणामभिधानात्। तथा अपरिच्छिन्नसुखरूपब्रह्मपदार्थे 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानतः, आत्मतः प्राण आत्मत आकाश आत्मतस्तेज आत्मत आविर्भावतिरो-

भावौ, आत्मतोऽन्नम्' इत्यादिना सर्वकारणत्वोपदेशाच्च, परमात्मन एव कारणत्वस्य स्फुटमवगमाच्च न प्रधानं कारणम् ॥

**ननु**—अत्र सूत्रे श्रीमति भाष्ये—"तथा च श्रुत्यन्तराणि 'न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्' 'स कारणं करणाधिपाधिपः' " इत्यादिभिन्नोपनिषद्गतश्रुतीनामुदाहरणमयुक्तं; तासां गतिसामान्यसूत्रविषयत्वात्—**इति चेत्** ;

**अत्र टीकाकृतः**—

"पूर्वसूत्राभिप्रेतानामेव तत्रानुदाहृतानामिहोदाहरणं, न त्वेतत्सूत्रविषयवाक्यत्वेन, अस्य सूत्रस्य छान्दोग्योपनिषन्मात्रविषयात्वस्य दीपसारयोरप्युक्तेः"— **इति वदन्ति** ॥

**ननु**—गतिसामान्यं नाम वेदान्तजन्यबोधविशिष्टान्यबोधजनकत्वं, वैशिष्ट्यं च स्वनिष्ठविषयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतावत्त्वसम्बन्धेन; न तूक्तसम्बन्धेन उपनिषदन्तरजन्यबोधविशिष्टान्यबोधजनकत्वं, सङ्कोचे मानाभावात् ।' एवं च—छान्दोग्यगतदहरविद्याभूमविद्यादिवाक्यानामपि गतिसामान्यसूत्रविषयत्वमेव युक्तम् । न च—इष्टापत्तिः, श्रीभाष्यस्थदहरविद्योदाहरणस्यापि श्वेताश्वतरोपनिषद्वाक्यवत् सामान्यसूत्रविषयत्वसम्भवादिति—वाच्यम् ; तथा सति श्रुतत्वाच्चेति सूत्रस्यैव वैयर्थ्यापत्तेः, 'अनेन जीवेनात्मनाऽनुप्रविश्य' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति चेतनत्वप्रतिपादकवाक्यानां गौणश्चेन्नात्मशब्दादित्यत्रैव उदाहृतत्वात्—**इति चेन्न** ॥ लक्षणाबीजभूतान्वयानुपपत्त्यादेरभावात् ईक्षतिधातोर्न लक्षणा युक्तेत्येतावन्मात्रस्यात्र विवक्षितत्वेऽपि चेतनवाचकात्मादिपद-

श्रुत्या सच्छब्दार्थस्य चेतनमित्यर्थस्याविवक्षितत्वेन तादृशार्थबोधनाय श्रुतत्वाच्चेति सूत्रोपपत्तिः—इति सर्वमवदातम् ॥

इति

श्रीशेषार्यवंशमुक्ताफलस्य श्रीयादवाद्रिनिवासरसिकस्य

श्रीमदनन्तार्यवर्यस्य कृतिषु

**ईक्षत्यधिकरणविचारः.**



॥ श्रीः ॥

॥ श्रीः ॥

# सिद्धान्तसिद्धाञ्जनम्

श्रीमन्महीशूरमहाराजाधिराजमहास्थानसभाभूषणैः
शेषार्यवंशमुक्ताफलैः श्रीयादवाद्रिनिवासरसिकैः
पण्डितमण्डलीसार्वभौमैः

**श्री ॥ उ ॥ म. अ. अनन्तार्यवर्यैः**
विरचितम् ।

---

विद्वद्वरैः परिशोध्य

---

म. अ. अनन्तार्येण
प्र. भ. तो. नरसिंहार्येण च
कल्याणपुर-विचारदर्पण मुद्राक्षरशालायामङ्कयित्वा
प्राकाश्यं नीतम् ॥

---

१८९९

---

मूल्य रू. १—०—०

॥ श्रीः ॥

# सिद्धान्तसिद्धाञ्जनम्.

श्रीयादवाद्रिनिलयं श्रितकल्पवृक्षं
नारायणं निखिललोकनिदानभूतम्।
निस्सीमनिर्मलगुणं निरवद्यरूपं
नित्यं नमामि शिरसा सकलार्थसिद्ध्यै ॥

जयन्तु श्रीमन्तः श्रुतिशिखरसारस्यमधुराः
सुधासध्रीचीनाः कुटिलमतकोलाहलमुषः।
स्फुरद्युक्त्यासक्त्या द्रुहिणरमणश्लाघ्यविभवाः
यतिक्षोणीभर्तुर्निरुपमवचोगुम्भविसराः ॥

शेषार्यवंशाम्बुधिशीतरश्मिस्सुधीरनन्तार्य इति प्रतीतः।
सिद्धान्तसिद्धाञ्जननामधेयं प्रबन्धमेनं प्रकटीकरोति ॥

येऽर्था दुर्बोधतां प्राप्ता गम्भीराचार्यसूक्तिषु।
तादृशार्थप्रकटनात्सफलोऽयं श्रमो मम ॥

चिदचिदीश्वरतत्त्वज्ञानसहकृतभगवदुपासनस्य मोक्षहेतुतया तादृशतत्त्वज्ञानार्थं प्रमेयं निरूप्यते ॥

ज्ञेयत्वं प्रमेयसामान्यलक्षणम्। ज्ञेयत्वं च विषयतासम्बन्धेन ज्ञानमेव; तेन विषयत्वमात्रस्यैव लक्षणत्वसम्भवात्तत्र ज्ञाननिरूपितत्वं व्यर्थमिति शङ्काऽनवकाशः ॥ यद्यपि—सिद्धान्ते ज्ञानस्य द्रव्यतया विष-

यत्तयाश्च संयोगरूपतया संयोगेन ज्ञानवत्त्वं लक्षणं पर्यवसन्नमित्यद्रव्येऽव्याप्तिः । तथाऽपि—संयोगसंयुक्तापृथक्सिद्ध्योर्द्वयोरेव विषयतात्वस्य वक्ष्यमाणतया अद्रव्ये संयुक्तापृथक्सिद्धिरूपविषयतासम्बन्धेन ज्ञानस्य सत्त्वान्नाव्याप्तिः ॥

**तच्च प्रमेयं द्विविधं**—द्रव्याद्रव्यभेदात् । तत्रावस्थावत्त्वं द्रव्यलक्षणं, तदन्यत्वं चाद्रव्यलक्षणं बोध्यम् । ईश्वरादावपि 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्'—इत्यादिश्रुत्या सर्वसंयुक्तत्वरूपसर्वगतत्वप्रतिपादनेनानवरतपरिस्पन्दमानाणुसंयोगरूपावस्थावत्त्वस्य सत्त्वान्नाव्याप्तिः; आगन्तुकापृथक्सिद्धधर्मस्यैवावस्थाशब्दार्थत्वात् । न चैवं—निर्विकारत्वश्रुतिविरोधः, स्वभिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेन परिमाणविशिष्टपरिमाणरूपस्य सङ्कोचविकासादिरूपावस्थाद्वयवत्त्वस्यैव निर्विकारत्वश्रुतिघटकविकारशब्दार्थत्वेनाविरोधात् ॥ अत एव—**न च पर्यायादप्यविरोधो विकारादिभ्यः**—इति सूत्रे सङ्कोचविकासवत्त्वरूपावस्थाद्वयाङ्गीकार एव विकारित्वमापादितं, न तु शरीरसंयोगादिरूपावस्थावत्त्व इति स्फुटीभविष्यतिचेदमुपरिष्टात् ॥

**द्रव्यं द्विविधं**—जडमजडं चेति । जडत्वं चास्वप्रकाशत्वं, स्वनिरूपितविषयतावत्त्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टान्यत्वम् । उक्तोभयसम्बन्धेन किञ्चिद्विशिष्टत्वरूपस्वप्रकाशत्वं चाजडत्वम् । तत्र जडं प्रकृतिकालभेदाद्द्विविधम्, अजडं तु जीवेश्वरनित्यविभूतिधर्मभूतज्ञानभेदाच्चतुर्विधमिति—द्रव्याणि षट् ॥

**ननु**—तत्तद्विषयकव्यवहारनिर्वाहार्थं तत्तद्विषयकज्ञानस्य स्वीकर्तव्यतया ज्ञानगोचरव्यवहारस्य ज्ञानान्तरेण निर्वाहे चानवस्थापत्त्या धर्मभूतज्ञानस्य स्वप्रकाशत्वाङ्गीकारस्य युक्तत्वेऽपि जीवादीनां स्वप्रकाशत्वमयुक्तम् । तथा हि—जीवानां स्वस्वगोचरव्यवहारस्य स्वविषयकस्वापृथक्सिद्धसाक्षात्काररूपधर्मभूतज्ञानेनैव निर्वाहात् जीवान्तर-

विषयकव्यवहारस्य च तद्विषयकप्रवृत्त्यादिलिङ्गकानुमित्यादिरूपज्ञानेनैव निर्वाहात्स्वप्रकाशत्वाङ्गीकारो व्यर्थः। तदङ्गीकारेऽपि जीवस्य स्वगोचरधर्मभूतज्ञानेन विना स्वव्यवहारानिर्वाहाच्च। स्वानुकूलकृतिमत्त्वसम्बन्धेन बुबोधयिषापूर्वकतत्तद्विषयकव्यवहारं प्रति तत्तद्विषयकज्ञानस्य अपृथक्सिद्धिसम्बन्धेन हेतुत्वेन स्वस्य स्वविषयकत्वेऽप्यात्मन्यपृथक्सिद्धिसम्बन्धेन अभावेन तद्व्यवहारहेतुत्वासम्भवात् । शुकादिव्यवहारे व्यभिचारवारणाय बुबोधयिषापूर्वकेति। एवमीश्वरगोचरास्मदादिकर्तृकव्यवहारे शास्त्रादिजन्येश्वरज्ञानस्य हेतुतया ईश्वरकर्तृकस्वगोचरव्यवहारे तद्गतधर्मभूतज्ञानस्यैव हेतुत्वात्स्वप्रकाशत्वकल्पनमफलम्; स्वस्य स्वस्मिन्नपृथक्सिद्धिसम्बन्धेनाभावाच्च। एवं नित्यविभूतेरपि तत्कल्पनमफलं, नित्यमुक्तादिकर्तृकतद्गोचरव्यवहारस्य तदीयधर्मभूतज्ञानेनैव निर्वाहात्, बद्धकर्तृकव्यवहारस्य च शास्त्रजन्यज्ञानेन निर्वाहात्—इति चेन्न॥ घटचाक्षुषादौ रूपादिशून्यस्यात्मनो भानासम्भवेन तद्दशायामपि स्वगोचरव्यवहारस्य अनुभवसिद्धस्य निर्वाहायात्मनस्स्वविषयकत्वस्य स्वानुकूलकृतिमत्त्वसम्बन्धेन तद्विषयकव्यवहारं प्रति तादात्म्यापृथक्सिद्ध्यन्यतरसम्बन्धेन कारणत्वस्य च कल्पनात् । अनुमितौ परामर्शाविषयस्य शाब्दबोधे पदानुपस्थितस्य च भानासम्भवेन तद्दशायामपि तद्व्यवहारनिर्वाहार्थं स्वप्रकाशत्वावश्यकत्वात्। एवं सुखमहमस्वाप्समिति सुषुप्त्युत्तरकालीनप्रत्यभिज्ञानिर्वाहाय सुषुप्तिकाले आत्मानुभवस्य वक्तव्यतया तद्दशायां च धर्मभूतज्ञानस्य इतरविषयकत्वासम्भवेन स्वप्रकाशात्मकानुभवस्यैव तादृशप्रत्यभिज्ञाहेतुभूतसंस्कारजनकताया अङ्गीकार्यत्वात्, आत्मनः स्वप्रकाशत्वावश्यकत्वात्। समानविषयकसंस्कारं प्रति तादात्म्यापृथक्सिद्ध्यन्यतरसम्बन्धेन अनुभवस्य कारणत्वेन स्वरूपात्मकानुभवस्यापि संस्कारजनकतासम्भवात्। व्यवस्थापयिष्यते चेदमग्रे ॥ ७

ईश्वरनित्यविभूत्योश्च प्रमाणबलात्स्वप्रकाशत्वमङ्गीक्रियते। ईश्वरस्वरूपात्मकानुभवस्येश्वरकर्तृकव्यवहारे तादात्म्येन हेतुत्वसम्भवात्, नित्यविभूतेरपि नित्यमुक्तादिकर्तृके स्वगोचरव्यवहारे अपृथक्सिद्धिसम्बन्धेन हेतुतासम्भवात्, शरीरात्मना परिणतायास्तस्या नित्यमुक्तादिष्वपृथक्सिद्धिसम्बन्धेन सत्त्वात् । प्रपञ्चयिष्यते चेदं यथावसरमिति दिक् ॥

एवं जीवेश्वरयोः प्रत्यक्त्वं नित्यविभूतिधर्मभूतज्ञानयोश्च पराक्त्वं साधारणधर्मः । तत्र प्रत्यक्त्वं स्वस्मै स्वेनावभासमानत्वम् ॥

**ननु**—अत्र स्वस्मा इति चतुर्थ्यन्तार्थः स्वकर्तृकव्यवहारजनकतावच्छेदकत्वं यदि, तदा अहमेक इत्यादिस्वकर्तृकव्यवहारजनकतावच्छेदिकाया एकत्वप्रकारतानिरूपिताहन्त्वावच्छिन्नविशेष्यतायाः स्वनिरूपितायाः मानुषादिशरीरावच्छिन्नात्मनि सत्त्वेऽपि पश्वादिशरीरावच्छिन्नात्मन्यव्याप्तिः । यदि स्वनिष्ठसंशयप्रतिबन्धकतावच्छेदकत्वं, तदा असम्भवः ; अहमेको न वेत्यादिसंशयं प्रत्यपृथक्सिद्धिसम्बन्धेन तत्समानाधिकरणनिश्चयस्यैव प्रतिबन्धकत्वात्। अपृथक्सिद्धितादात्म्यान्यतरसम्बन्धेन तत्समानाधिकरणनिश्चयस्य प्रतिबन्धकत्वाङ्गीकारेऽप्यसम्भवः ; स्वनिष्ठस्य स्वविशेष्यकैकत्वादिसंशयस्याप्रसिद्धेः । स्वनिष्ठो यस्संशयानुत्पादः तत्प्रयोजकत्वं चतुर्थ्यन्तार्थ इत्यपि न युक्तम्, संशयानुत्पादस्य तादृशसंशयप्रागभावरूपस्य स्वनिष्ठत्वासम्भवात्, यत्र तादृशसंशयो जायते तत्रैव तत्प्रागभावाभ्युपगमात्—इति चेन्न ॥ स्वकर्तृकव्यवहारजनकतावच्छेदकत्वस्य तदर्थत्वेऽपि पश्वाद्यवच्छिन्नात्मन्यव्याप्त्यसम्भवात्, तादृशात्मन एव मनुष्यादिशरीरावच्छिन्नत्वसम्भवेन स्वकर्तृकव्यवहारप्रसिद्धेः । स्वनिष्ठसंशयाभावप्रयोजकत्वस्य तदर्थत्वेऽप्यदोषात्, संशयप्रागभावस्य स्वनिष्ठत्वासम्भवेऽपि तदत्यन्ताभावस्य तन्निष्ठत्वसम्भवात्॥ न चैवं—धर्मभूतज्ञानस्य

प्रत्यक्त्वापत्तिः, अधिकरणभेदेनाभावभेदानुपगमे तादृशज्ञाननिष्ठत्व-निरूपितविषयत्वस्यात्मनिष्ठसंशयाभावप्रयोजकस्य स्वनिष्ठसंशयाभावप्रयोजकत्वानपायात्–इति वाच्यम् । स्वनिष्ठसंशयाभावाधिकरणताप्रयोजकत्वस्य निवेशात्, आधेयाभेदेऽपि अधिकरणभेदेन अधिकरणताया भेदात्, सिद्धान्ते अभावस्याधिकरणवृत्तिधर्मरूपत्वेनाधिकरणभेदेन भेदाच्च । स्वसामानाधिकरण्यस्वप्रयोजकत्वोभयसम्बन्धेन संशयाभावविशिष्टस्वनिरूपितविषयतावत्त्वं प्रत्यक्त्वमिति निष्कर्ष । प्रथमस्वपदद्वयं संशयाभावपरम् । चरमस्वपदं च यत्र प्रत्यक्त्वं स्थाप्यं तत्परम् ॥ एतदन्यत्वे सति स्वप्रकाशत्वम् पराक्त्वमवसेयम् ॥

**अद्रव्यं तु दशधा**–सत्त्वरजस्तमोरूपरसगन्धस्पर्शशब्दसंयोगशक्तिभेदात् ॥

द्रव्याद्रव्यभेदभिन्नं प्रमेयं स्थिरमेव, क्षणभङ्गे प्रमाणाभावात् । न च–जगत्क्षणिकं सत्त्वादित्यनुमानेन तत्सिद्धिरिति–वाच्यम् ; क्षणिकत्वस्य स्वाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वरूपत्वे सिद्धसाधनस्यार्थान्तरस्य वा प्रसङ्गात् । स्ववृत्तित्वस्वभिन्नक्षणावृत्तित्वोभयसम्बन्धेन क्षणविशिष्टत्वरूपत्वे च साध्याप्रसिद्धि, एकक्षणमात्रवृत्तिवस्तुनोऽस्माभिरनङ्गीकारात्, क्षणोपाधेः क्रियारूपत्वे कालद्रव्यपरिणामरूपत्वेऽपि वा क्षणमात्रवृत्तित्वानभ्युपगमात् ॥ न च–क्षेत्रस्थबीजादङ्कुरोत्पत्तिः कुसूलस्थबीजान्नेत्यङ्कुरजननसामर्थ्यासामर्थ्यरूपविरुद्धधर्माध्यासेन तादृशबीजयोर्भेदसिद्धौ तत्रैव क्षणिकत्वरूपसाध्यप्रसिद्धिरिति--वाच्यम् । तावताप्यङ्कुरमकुर्वाणस्य कुसूलस्थबीजस्य क्षणिकत्वासिद्धेः, तादृशस्याङ्कुरजन्मपूर्वतृतीयक्षणपर्यन्तावस्थाने बाधकाभावात् ॥ न च–अङ्कुरकारिबीजजननसमर्थात् तृतीयक्षणस्थबीजात्तदसमर्थचतुर्थक्षणस्थबीजस्य भेदः, एवं तृतीयक्षणस्थबीजजननसमर्थाच्चतुर्थक्षणस्थबीजात्तदसमर्थपञ्चमक्षणस्थबीजस्य भेद इत्यादिरीत्या

कुसूलस्थबीजपर्यन्तं भेदसिद्ध्या क्षणिकत्वसिद्धिरिति–वाच्यम्। सामर्थ्यासामर्थ्यशब्देन स्वरूपयोग्यत्वतदभावयोर्विवक्षणे कुसूलस्थबीजे असामर्थ्यासिद्धिः, तस्यापि बीजत्वेनाङ्कुरोत्पत्तिस्वरूपयोग्यत्वात्, सहकारिसमवधानासमवधानयोर्विवक्षणे च तयोरेकस्मिन्नपि कालभेदेन समावेशसम्भवेन तयोर्विरोधासिद्ध्या स्वाश्रयभेदकत्वासम्भवात्॥

**न च**–उक्तोभयसम्बन्धेन क्षणविशिष्टत्वस्य साध्यता न स्वीक्रियते येनोक्तदोषः स्यात्, किन्तु स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति कादाचित्कत्वमेव साध्यम्, तच्च प्रागभावे प्रसिद्धमिति न साध्याप्रसिद्धिः। अत्र कादाचित्कत्वानिवेशे उत्पत्तिरहितनित्यवस्तुन्यात्मादौ अशतस्सिद्धसाधनं स्यात्। अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया तस्यादोषत्वेऽप्यर्थान्तरम्। आत्मादेर्नित्यत्वेऽप्युत्पत्तिविरहेणैवोक्तसाध्यनिर्वाहात्। अतः कादाचित्कत्वरूपविशेष्यदलम्–**इति वाच्यम्**॥ तन्मते अभावमात्रस्य तुच्छत्वेन कालसम्बन्धित्वासम्भवेन स्वाधिकरणक्षणप्रागभावाधिकरणक्षणाप्रसिद्ध्या साध्याप्रसिद्धेरेवमपि दुर्वारत्वात्॥ न च–सौगतमते अभावस्य तुच्छत्वेऽपि तस्य कालसम्बन्धोऽस्त्येव। किन्त्वर्थक्रियाकारित्वरूपसत्त्वमेव नेति न साध्याप्रसिद्धिरिति–वाच्यम्। एवमप्यर्थान्तरस्य दुर्वारत्वात्, आत्मादेर्महाप्रलयमात्रासत्त्वाङ्गीकारेणैव तस्य कादाचित्कत्वनिर्वाहात्॥ न च कादाचित्कत्वस्थाने उत्पत्तिमत्त्वनिवेशान्नोक्तार्थान्तरम्, साध्यप्रसिद्धिस्तु नैयायिकादिमते महाप्रलयात्मकचरमध्वंस एव, तत्र चरमध्वंसाधिकरणक्षणश्चरमध्वंसात्मक एवेति तत्प्रागभावाधिकरणक्षणानुत्पत्तिकत्वस्य तादृशचरमध्वंसात्मकक्षणोत्पत्तिकत्वस्य च सत्त्वात्; चरमध्वंससाधारणं क्षणत्वं च स्वाधेयपदार्थप्रागभावानधिकरणत्वमिति–वाच्यम्। तथापि साध्याप्रसिद्धेः, स्वाधिकरणसमय-

---

* (टि) स्ववृत्तित्वस्वभिन्नक्षणावृत्तित्वोभयेत्यर्थः॥

ध्वंसानधिकरणसमयसम्बन्धरूपोत्पत्तिमत्त्वस्य चरमध्वंसे अभावात्, स्वाधिकरणसमयस्य महाकालरूपस्य ध्वंसरूपस्य वा ध्वंसाप्रसिद्धेः॥ न च—स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणसम्बन्ध एवोत्पत्तिरिति महाप्रलयेऽपि तादृशोत्पत्तिसत्त्वान्नाप्रसिद्धिरिति—वाच्यम्। उक्तरीत्या नैयायिकमते कथञ्चित्साध्यप्रसिद्धावपि सत्त्वरूपसाधनवति दृष्टान्ते साध्यस्याप्रसिद्ध्या व्याप्तिग्रहासम्भवात्, केवलव्यतिरेकिणश्चाग्रे निरसिष्यमाणत्वात्। सिद्धान्ते त्वनादेः प्रागभावस्य नैयायिकाद्यभिमतमहाप्रलयस्य चानङ्गीकारेण साध्याप्रसिद्धिर्दुष्परिहरैव। सोऽयं घट इत्यादिप्रत्यभिज्ञाबाधितञ्चेदमनुमानमित्यन्यत्र विस्तरः॥

**इदानीमुद्देशक्रमानुसारेण प्रकृतिर्निरूप्यते॥** कालभिन्नत्वे सति जडत्वं प्रकृतेर्लक्षणम्। कालेऽतिव्याप्तिवारणाय सत्यन्तम्, जीवादिवारणाय विशेष्यम्॥ रजोगुणवत्त्वं तमोगुणवत्त्वं च तल्लक्षणम्; सत्त्ववत्त्वं तु न लक्षणम्, शुद्धसत्त्वाश्रयनित्यविभूतावतिव्याप्तेः॥ एवं नित्यविभूतित्वसमानाधिकरणभेदप्रतियोगितानिरूपितसंयोगसम्बन्धावच्छिन्नावच्छेदकताश्रयत्वे सति तद्भिन्नद्रव्यत्वसमानाधिकरणभेदप्रतियोगितानिरूपितसंयोगसम्बन्धावच्छिन्नावच्छेदकताशून्यत्वमपि तल्लक्षणम्॥ तदनन्तमसङ्ख्यातमप्रमाणञ्च—इति वचनेन प्रकृतेरधःप्रदेशेषु अपरिच्छिन्नत्वस्य नित्यविभूतेः तमःपरत्वश्रुत्या तद्देशे परिच्छिन्नत्वस्य च प्रमितत्वाल्लक्षणसङ्गतिः॥ कालादिरूपविभुद्रव्यवारणाय सत्यन्तम्, जीवादिरूपाणुवारणाय विशेष्यम्॥ तद्भिन्नद्रव्ये तदनवच्छिन्नत्वमपि निवेश्यम्, तेन नित्यविभूतिस्थजीवादिषु संयोगेन प्रकृतिमद्भेदसत्त्वेऽपि न क्षतिः॥ न च—प्रकृतेस्सर्वत्रावस्थाने गतिमतां गतिनिरोधापत्तिरिति गतियोग्यप्रदेशेष्वनवस्थानं स्वीकर्तव्यमित्युक्तलक्षणाव्याप्तिरिति—वाच्यम्। प्रकृतेः स्पर्शरहितत्वेन गतिनिरोधकताविरहेणाधोदेशे सर्वत्रावस्थाने बाधकाभावात्॥ सा च प्रकृतिस्सृष्टिकाले गुणवैषम्य-

युक्तप्रदेशविशेषे महदादीन्विषमविकारानारभते ; गुणसाम्ययुक्ते च समान्विकारानारभते; प्रकृतिस्वरूपस्य सततविकारलक्षणत्वात् प्रलयकाले च सर्वत्र समा एव विकारा भवन्ति ।। न च—प्रलयत्वव्याघातः, विषमविकारराहित्यस्यैव प्रलयपदार्थत्वात् ।।

पूर्वावस्थोपमर्दकावस्थाभेदात्सा चतुर्विंशतिधा—मूलप्रकृतिर्महानहङ्कार इन्द्रियाण्येकादश पञ्च तन्मात्राणि पञ्च भूतानि चेति ।।

ननु—एषा प्रकृतिर्निरंशा सांशा वा ?

आद्ये—अनेकतत्त्वात्मना परिणामानुपपत्तिः, निरंशस्यैकस्यानेकरूपेण परिणामासम्भवात्, मृत्पिण्डादेस्सावयवस्यैव घटशरावादिरूपेण बहुधा परिणामदर्शनात् ।। न च—स्वभावतो निरंशस्यापि प्रधानस्यौपाधिकांशसम्भवाद्विविधकार्योत्पादकत्वसम्भवः; नैयायिकनये स्वभावतो निरंशस्यापि गगनस्य भेर्यवच्छिन्नांशे तीव्रशब्दजनकत्वं, मृदङ्गाद्यवच्छिन्नांशे मृदुशब्दजनकत्वमित्यौपाधिकांशभेदस्यापि कार्यवैलक्षण्यनिर्वाहकत्वदर्शनादिति—वाच्यम् । तीव्रमन्दशब्दोत्पादकतावच्छेदकभेरीमृदङ्गादिवत् महदहङ्काराद्युत्पादकतावच्छेदकानांत्रयोविंशत्युपाधीनामदर्शनात् औपाधिकांशासम्भवात्, प्रधानस्य स्वभावतो निरंशत्वे पृथिवीत्वाद्यवस्थापन्नस्यापि तस्य छेदनाद्यनुपपत्तेः । औपाधिकभेदाभेदवादिनं प्रति भाष्ये उपाधिसंसर्गादपि निरंशस्य ब्रह्मणः छेदनाद्यनुपपत्तेरुक्तत्वात् ।।

द्वितीये तु—महदादिकार्याणामेकोपादानवादभङ्गः; तत्तदंशानामेव तत्तत्कार्योत्पादकत्वेन बहूनामेव बहुकार्योत्पादकत्वात् । तादृशांशेषु प्रधानत्वरूपैकधर्माङ्गीकारस्य विफलत्वात् । परमाणुकारणवादादविशेषप्रसङ्गश्च ।। तथा च तादृशांशानां परस्परसंयुक्तानामेव महदाद्युत्पादकत्वस्य वाच्यतया तादृशांशानां कृत्स्नसंयोगे स्वाधिकपरिमाणद्रव्यारम्भकत्वासम्भवः, एकदेशसंयोगे चांशस्याप्येकदेशाङ्गीकारेणा-

नवस्थेत्यादिरूपस्य 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' इति सूत्रोक्तस्य परमाणुकारणवाददूषणस्य स्वमतेऽपि दुर्वारता ॥

—इति चेन्न ॥

अत्र महानुत्पद्यतां, अत्राहङ्कार उत्पद्यतां—इत्यादिरूपाणां त्रयोविंशतिभगवत्सङ्कल्पानामेव त्रयोविंशतितत्त्वोत्पादकतावच्छेदकत्वसम्भवेनौपाधिकांशवादे दोषाभावात् ; भेर्यादिवद्भगवत्सङ्कल्पस्यापि द्रव्यत्वेन प्रधानसंयुक्ततया प्रधानप्रदेशावच्छेदकत्वसम्भवात् ॥ न च—भगवत्सङ्कल्पसंयोगोऽपि प्रधाने किमेकदेशावच्छेदेन कृत्स्नावच्छेदेन वेति विकल्पो दुर्निवार इति—वाच्यम् । भेरीसंयोगेऽपि तादृशविकल्पसाम्यात् । न च—भेरीसंयोग· स्वावयवावच्छेदेन गगने सम्भवतीति—वाच्यम्, तथाऽपि परमाणुगगनसंयोगे उक्तविकल्पस्य दुर्वारत्वात्॥ न च—अणुसंयोगावच्छिन्नगगन एवाणुसंयोगो जायते, आत्माश्रयस्त्वगत्या स्वीक्रियते ; अत एव **बौद्धाधिकारे शिरोमणिना** घटाभावस्य स्ववृत्तित्वस्वीकारे आत्माश्रये इष्टापत्तिरभिहितेति—वाच्यम् । प्रकृतेऽपि तत्तद्भगवत्सङ्कल्पसंयुक्तप्रधान एव तत्तद्भगवत्सङ्कल्पसंयोगोत्पत्तिस्वीकारसम्भवादगत्या आत्माश्रयस्यादोषत्वात् ॥

उक्तं च **न्यायसिद्धाञ्जने**—

"प्रदेशवृत्तिसंयोगाद्याधाराणुविभुक्रमात् ।
निरंशस्यापि घटते प्रादेशिकविकारिता ॥" —इति ॥

यथा अव्याप्यवृत्तिसंयोगादिर्गगनादौ निरंशेऽपि प्रदेशभेदेनोत्पद्यते, तथा महदादिकमपि निरंशे प्रधाने उत्पद्यत इत्यर्थः । न च छेदनाद्यनुपपत्तिः, पृथिवीत्वाद्यवस्थापन्नस्य तस्य छेदनाद्यङ्गीकारे बाधकाभावात् । न च भाष्यविरोधः, ब्रह्मस्वरूपस्य निष्कलत्वाच्छेद्यत्वादिवचनविरोधेन छेदनाद्यसम्भवे तद्भाष्यतात्पर्यात्; अन्यथा ब्रह्मस्वरूप एव सविकारत्वापत्तौ निर्विकारत्वश्रुतेर्निरवकाशत्वप्रसङ्गात् ;

ब्रह्मणस्सर्वज्ञत्वेन सर्वांशगतसुखदुःखादिप्रतिसन्धानप्रसङ्गस्यापि दुष्परिहरत्वात् । प्रधानस्य च पृथिवीत्वाद्यवस्थापन्नस्य छेदनाद्यङ्गीकारे प्रमाणविरोधस्य बाधकयुक्तेश्चाभावात् ॥

अत एव **तत्त्वमुक्ताकलापे** अव्यक्तप्रतिबन्दीं पुरस्कृत्य प्रवृत्ते ब्रह्मपरिणामवादे ब्रह्मणस्स्वस्मिन् जीवभावेन दुर्विषहदुःखाद्युत्पादनानुपपत्तिरेव दोष उक्तः ॥

"अव्यक्तं त्वन्मतेऽपि ह्यनवयवमथाप्येतदंशा विकाराः
ते चान्योन्यं विचित्राः पुनरपि विलयं तत्र तत्त्वेन यान्ति ।
इत्थं ब्रह्मापि जीवः परिणमति विहृत्यर्थमित्यप्यसारं
स्वानर्थैकप्रवृत्तेः प्रसजति च तदा सर्वशास्त्रोपघातः ॥"—इति ॥

प्रधानस्य स्वाभाविकानन्तांशाङ्गीकारपक्षोऽपि निर्दुष्टः । न च—तत्कल्पे सदंशैरेव कार्यारम्भनिर्वाहात्तावदंशेषु प्रधानत्वरूपैकावस्थाङ्गीकारो विफल इति—वाच्यम् । 'तद्धेदं तर्ह्यव्याकृतमासीत्', 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं', 'तदैक्षत बहु स्याम्'—इत्यादिकारणबोधकश्रुतावेकत्वावस्थायाः प्रतिपन्नत्वेन तन्निर्वाहाय प्रधानत्वरूपैकावस्थाङ्गीकारस्य युक्तत्वात् । न चैवं—प्रधानस्य परमाणुपुञ्जमात्रत्वे पर्यवसानेन नैयायिकमतप्रवेश इति—वाच्यम् । गन्धरसरूपस्पर्शादिरहितपरस्पराप्रतिघातकसत्त्वरजस्तमोरूपगुणत्रयाश्रयपरस्परसंयुक्तपञ्चभूतसूक्ष्मतमद्रव्यरूपत्वेन "शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम् । त्रिगुणं तज्जगद्योनि"—इत्यादिप्रमाणसिद्धे प्रधाने परमाणुत्वभावगन्धाभावात्, जालरन्ध्रनिर्गतसौरालोकदृश्यमानत्रसरेणुशब्दवाच्यद्रव्यातिरिक्तपरमाणुकल्पने प्रमाणाभावाच्च ॥ न चैतत्कल्पे महद्दीर्घवद्वेत्यादिसूत्रोक्तदोषप्रसङ्गः, अनुमानादिभिः कल्पितार्थ एव तादृशदोषस्योक्तत्वात् ; श्रुतिप्रतिपन्नार्थे तादृशदोषस्याप्रसरात्, अन्यथा माध्यमिकातिरिक्तमतसामान्ये तादृशदोषप्रसङ्गात्, अणुसंयोगे विभुसंयोगे ज्ञानज्ञेयसम्बन्धे जातिव्यक्तिसम्बन्धे कृत्स्नैकदेशविकल्पस्य

दुर्वारत्वात् ॥ विभुरीश्वरो घटादिभिरेकदेशेन संयुज्यते, सर्वात्मना वा? एकदेशेन संयोगे तस्य सावयवत्वप्रसङ्गः। सर्वात्मना संयोगे च घटासंयुक्तप्रदेशस्यैवाभावेनेश्वरस्य पटादिसंयोगानुपपत्त्या विभुत्वानुपपत्तिरित्यादिदोषाणां तत्तत्पक्षेषु सम्भवात् । तस्मात् श्रुतिप्रतिपन्नार्थे नोक्तरीत्या दोषसम्भव । अत एव–बहु स्यामिति सङ्कल्पानुरोधेनाकाशवाय्वादिरूपेण ब्रह्मणः कार्यत्वाभ्युपगमे कृत्स्नस्य ब्रह्मणः कार्यत्वापत्तिः, एकदेशतः कार्यत्वाभ्युपगमे च ब्रह्मणो निरवयवत्वश्रुतिविरोधः-इत्याशङ्का **कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा** -इत्यनेनोपन्यस्य श्रुतिप्रतिपन्नार्थे ईदृशाशङ्का न युक्तेत्यभिप्रायकं **श्रुतेस्तु शब्दमूलत्वात्** इति परिहारसूत्रमारचितम् ॥ तथा च–प्रधानस्यौपाधिकांशवत्त्वे स्वाभाविकांशवत्त्वे वा बाधकविरहान्महदादिविचित्रपरिणामहेतुत्वं तस्य सम्भवतीति दिक् ॥

तत्र गुणत्रयसाम्यावस्थापन्नत्वं मूलप्रकृतेर्लक्षणम् । तच्च तद्वैषम्यप्रयोज्यकार्याभाववत्त्वं, स्वजन्यत्वकालिकविशेषणत्वोभयसम्बन्धेन धर्मविशिष्टधर्माभाववत्त्वपर्यवसितम् । अव्यक्तत्वाश्रयानन्तांशेषु सत्स्वेव कतिपयांशेष्वव्यक्तत्वनाशपूर्वकमहत्त्वावस्थायाः महत्त्वाद्याश्रयानन्तांशेषु सत्स्वेव तन्नाशपूर्वकं कतिपयांशेष्वहङ्कारत्वाद्यवस्थाया उत्पत्तिस्वीकारेण पूर्वावस्थाकालीनत्वतज्जन्यत्वयोरुत्तरावस्थासु सत्त्वेन निरुक्तोभयसम्बन्धेन धर्मविशिष्टधर्माः अव्यक्तत्वविशिष्टमहत्त्वतद्विशिष्टाहङ्कारत्वादय इति तच्छून्यत्वस्य मूलप्रकृतौ सत्त्वाल्लक्षणसङ्गतिः॥

**न च—**

“वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः।
वृतं दशगुणैरण्डं भूतादिर्महता तथा ॥
अव्यक्तेनावृतो ब्रह्मन् तैस्सर्वैस्सहितो महान्।
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ॥”

इत्यादिना जलतेजोवाय्वाकाशाहङ्कारमहन्मूलप्रकृतीनामण्डावरणतया ऽवस्थानस्य सिद्धतया तथाऽवस्थाननिर्वाहाय, 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इत्यनेन अष्टद्रव्याणां शरीरारम्भकतयाऽवस्थानस्य भगवद्गीतादिसिद्धत्वेन तन्निर्वाहाय च प्रकृत्यादीनामेकदेशपरिणामो युक्तः। अन्यथा पृथिव्येकशेषप्रसङ्गेन प्रत्यक्षादिबाधापत्तेः। तन्मात्राणां त्वावारकत्वशरीरारम्भकत्वयोरश्रवणेन निश्शेषपरिणामाङ्गीकारेऽपि बाधकाभाव इत्युक्तलक्षणस्याकाशादावतिव्याप्तिः, आकाशत्वस्य शब्दतन्मात्रत्वजन्यत्वेऽपि तत्समानकालीनत्वाभावादिति—वाच्यम्॥ तन्मात्राणामावारकत्वाद्यश्रवणेऽपि 'अष्टौ प्रकृतयष्षोडश विकाराश्शरीरे तस्य देहिन.' इत्यादिना शरीरस्य चतुर्विंशतितत्त्वमयत्वप्रतिपादनेन तेषां भूतैस्सहावस्थानसिद्ध्या तेषामप्येकदेशपरिणामस्यैव युक्तत्वात्॥ न चैवं—**गीताभाष्ये** 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इति क्षेत्रारम्भकद्रव्याणीत्युक्तत्वाच्छरीरस्याष्टद्रव्योपादानकत्वाभ्युपगमाद्भाष्यकृतां तन्मात्राणां निश्शेषपरिणामपक्ष एवेष्ट इति—वाच्यम्; गीतातद्भाष्ययोरुपलक्षणपरत्वात्। अन्यथा—शरीरे एकादशेन्द्रियाणामप्यवस्थानासिद्ध्यापत्तेः॥

न च—उक्तोभयसम्बन्धेन प्रकृतित्वविशिष्टाक्षरत्वाद्यवस्थायाः प्रकृतौ सत्त्वात्तच्छून्यत्वलक्षणस्यासम्भवः—इति वाच्यम्। अक्षरत्वावस्थायास्तमस्त्वावस्थानाशरूपत्वेन तज्जन्यत्वेऽपि प्रकृतित्वावस्थानाशरूपत्वाभावेन तज्जन्यत्वासम्भवात्, तन्नाशरूपत्वावस्थाया एव तज्जन्यत्वात्, प्रकृतित्वातिरिक्तत्वेन प्राथमिकधर्मविशेषणेनाक्षरत्वादीनां प्रकृतित्वजन्यत्वेऽपि क्षत्यभावाच्च। अविभक्ततमसः कृत्स्नत एव विभक्ततमोरूपेण विभक्ततमसः कृत्स्नत एवाक्षररूपेणाक्षरस्य च कृत्स्नत एवाव्यक्तरूपेण परिणामादुक्तधर्मचतुष्टये एकैकस्य जन्यतासम्बन्धेन अपरधर्मविशिष्टत्वेऽपि कालिकसम्बन्धेन तद्विशिष्टत्वा-

भावादसम्भवविरहात्; अव्यक्तत्वप्रागभावसमानकालीनत्वेन प्राथमिकधर्मविशेषणेन अक्षरादीनां सुबालश्रुतावण्डावरणतयाऽवस्थानस्योक्त्या तमःप्रभृतीनां निश्शेषपरिणामासम्भवेऽपि न क्षतिः॥ अव्यक्तत्वनाशप्रागभाववत्त्वं तस्या लघु लक्षणं बोध्यम्॥

**सा च मूलप्रकृतिश्चतुर्धा**—अव्यक्तमक्षरं विभक्ततमोऽविभक्ततमश्चेति। तत्र महत्तत्त्वादिरूपफलोन्मुखावस्था अव्यक्तावस्था, तत्पूर्वावस्था चाक्षरत्वम्—इति रीत्या बोध्यम्॥

"भूतलनिहितबीजस्थानीयमविभक्तं तमः, मृन्निस्सृतबीजवद्विभक्तं तमः, सलिलसंसृष्टाद्रपृथ्ववयवबीजतुल्यमक्षरं, उच्छूनबीजसमानमव्यक्तं, अङ्कुरस्थानीयो महान्—इति विवेकः॥"

इति **व्यासार्यैः सुबालोपनिषद्व्याख्याने** प्रपञ्चितम्। मूलप्रकृतावुक्तावस्थाचतुष्टय च—

"महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकीभवति॥"

इति सुबालश्रुतिसिद्धम्। तमः परे देव एकीभवतीत्यनेन अविभक्ततमोऽवस्थाभिधानात्॥

**ननु**—उक्तसुबालश्रुतेर्मूलप्रकृतिगतावस्थाचतुष्टयपरत्वं न सम्भवति; **सा च प्रशासनादिति** सूत्रावतरणभाष्यादिषु—'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते', 'यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम्' इत्यादिश्रुतिगताव्यक्तसहचरिताक्षरशब्दस्य जीवपरतया व्याख्यानात्—इति चेत्॥

१. (पा.) तन्मात्राणां निश्शेषपरिणामाभ्युपगमे तु स्वजन्यत्वस्थाने स्वप्रयोज्यत्वं निवेश्यम्। तन्मात्रत्वस्य नाशेऽपि तज्जनकीभूताहङ्करत्वादेरनाशेन तद्विशिष्टाकाशत्वादेः आकाशादौ सत्त्वान्नातिव्याप्ति। महत्त्वावस्थाप्रागभाववत्त्व वा तल्लक्षणमवसेयम्॥

**अत्राहुः—**

उक्ताक्षरशब्दव्याख्यानस्य परव्याख्यानानुरोधेन प्रवृत्तत्वान्न तत्र तात्पर्यम् । यद्वा—जीवे धर्मभूतज्ञानगतसङ्कोचविकासादिरूपविकारस्य परम्परया सत्त्वेऽपि साक्षात्सम्बन्धावच्छिन्नविकाराभाववाचकाक्षरशब्दस्य प्रवृत्तिर्यथा न विरुध्यते, तथा महत्त्वाहङ्कारत्वादिरूपविकारविशेषाभावपरत्वे मूलप्रकृतावपि तच्छब्दप्रवृत्तिरुपपद्यत इति दृष्टान्तविधया जीवपरताप्रतिपादनपरत्वान्न विरोधः ॥ अथवा—मूलप्रकृतौ विकारसामान्याभावस्य बाधेन तद्वाचकाक्षरशब्दस्य मुख्यत्वासम्भवात् अक्षरब्रह्मसम्बन्धित्वेन वा तादृशजीवसम्बन्धित्वेन वा लक्षणा वाच्या, तत्र ब्रह्मसम्बन्धित्वेन लक्षणोक्तौ विशेषणे लयान्वयासम्भवात् विशेष्यमात्रे लयान्वयस्य विशिष्टे लयान्वयप्रकरणविरोधेनासम्भवात्, जीवसम्बन्धित्वावच्छिन्न एवाजहल्लक्षणेत्यभिप्रायेण तद्वाक्यस्य प्रवृत्तत्वान्न विरोधः॥ **—इति ॥**

तत्र अव्यक्तत्वावस्थानाशरूपत्वे सत्यहङ्कारत्वावस्थाप्रागभावरूपत्वं—**महत्त्वावस्थाया लक्षणम्**; अव्यक्तत्वावस्थानाशत्वस्याहङ्कारत्वतन्मात्रत्वादिसाधारणत्वात्तद्वारणाय विशेष्यम् ; तावन्मात्रस्याव्यक्तत्वाक्षरत्वादिसाधारण्यात्तद्वारणाय सत्यन्तम्॥ यद्वा—अव्यक्तत्वावस्थाध्वंसत्वावच्छिन्नविषयताकसङ्कल्पजन्यावस्थात्वं—तल्लक्षणम् ; अव्यक्तत्वावस्थाश्रयेष्वनन्तांशेषु मध्ये केषु चिदंशेषु अव्यक्तत्वावस्थाध्वंसरूपमहत्त्वावस्थोत्पद्यतामिति—सङ्कल्पेन तादृशावस्थोत्पत्तेर्लक्षणसङ्गतिः । अत्र सङ्कल्पनिष्ठजनकता विषयतासम्बन्धावच्छिन्ना ग्राह्या, तेन तादृशसङ्कल्पगतोत्तरावस्थायां नातिव्याप्तिः । अव्यक्तत्वावस्थान्यूनवृत्तित्वे सत्यहङ्कारत्वावस्थाव्यापकप्रकृतिविभाजकोपाधिमत्त्वं वा तल्लक्षणम् ; अव्यक्तत्वाक्षरत्वादिवारणाय सत्यन्तम्, अहङ्कारत्वादिवारणाय विशेष्यम् । व्यापकत्वं च तत्समानाधि-

करणभेदप्रतियोगितानवच्छेदकत्वे सति तदभाववद्वृत्तित्वम् ; तेनाहङ्कारत्वादेस्तद्व्यापकत्वेऽपि न तद्दोषतादवस्थ्यम् । प्रकृतिविभाजकोपाधित्वनिवेशादव्यक्तत्वन्यूनवृत्त्यहङ्कारत्वव्यापकान्यतमत्वादौ नातिव्याप्तिः ॥

**सोऽयं महांस्त्रिविधः**—सात्त्विकराजसतामसभेदात्। सत्त्वगुणोन्मेषवान् सात्त्विक इत्यादिबोध्यम् ॥

महत्त्वावस्थानाशरूपत्वे सति तन्मात्रत्वावस्थाप्राक्कालीनत्वं—**अहङ्कारत्वस्य लक्षणम्** । अत्र तन्मात्रत्वावस्थाप्रागभावत्वस्य तामसाहङ्कारत्व एव सत्त्वात्सात्त्विकराजससाधारणाहङ्कारत्वे तदभावादसम्भवः प्राप्नोतीति न तथा निवेशः। तन्मात्रत्वपूर्वकालीनत्व चाहङ्कारत्वे अक्षतमेव । व्यावृत्तिः पूर्ववत् । महत्त्वावस्थानाशत्वावच्छिन्नविषयताकसङ्कल्पप्रयोज्यावस्थात्व वा तल्लक्षणं, महत्त्वावस्थान्यूनवृत्तित्वे सति तन्मात्रत्वावस्थाव्यापकप्रकृतिविभाजकोपाधित्वमपि तल्लक्षणमवसेयम् ॥

**सोऽयमहङ्कारस्त्रिविधः**—सात्त्विकराजसतामसभेदात् । तत्र सात्त्विकादिन्द्रियाणि जायन्ते, तामसाच्च शब्दतन्मात्रं, राजस उभयानुग्राहकः ॥

तत्र शब्दाश्रयान्यत्वे सति आत्मप्रयत्नजन्यव्यापारवत्त्वरूपजीवात्मोपकरणत्वं—**इन्द्रियसामान्यलक्षणम्** । शरीरप्राणयोरतिव्याप्तिवारणाय सत्यन्तम् । महदहङ्कारवारणाय विशेष्यम् ॥

न च—अप्राकृतद्रव्ये अव्यक्तमहदहङ्कारविभागाभावेन अप्राकृतेन्द्रियाणामप्राकृतभूतपरिणामत्वस्यैव वाच्यतया तेषु शब्दाश्रयान्यत्वघटितोक्तलक्षणाव्याप्तिरिति—वाच्यम् । अप्राकृतद्रव्येऽप्यव्यक्तमहदहङ्कारविभागस्य कैश्चिदाचार्यैरङ्गीकारादप्राकृतेन्द्रियाणां तत्परिणामत्वसम्भवात्, प्राकृतशब्दाश्रयान्यत्वस्य सत्यन्तार्थत्वे तद्दोषा·

प्रसक्तेश्च । प्राकृतत्वं च—रजस्समानाधिकरणत्वं तमस्समानाधिकरणत्वं वा ॥

न च—श्रीमद्गीताभाष्ये "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इति श्लोकव्याख्याने 'अव्यक्तमहदहङ्कारपञ्चमहाभूतारब्धं शरीरम्' इत्युक्तत्वेन अतिरिक्तावयविनमनङ्गीकुर्वाणानां वेदान्तिनां मते शरीरस्योक्ताष्टद्रव्यसमुदायरूपत्वे पर्यवसानात्तादृशशरीरघटकाव्यक्तमहदहङ्कारेष्वतिव्याप्तिः, तेषां शब्दाश्रयान्यत्वे सत्यात्मप्रयत्नजन्यव्यापारवत्त्वादिति—वाच्यम् । तेषां शरीरघटकत्वेऽप्यात्मप्रयत्नजन्यव्यापारवत्त्वानभ्युपगमात्, पञ्चमहाभूतात्मकभागेष्वेव तत्स्वीकारात्; शब्दाश्रयान्यत्वं परित्यज्य प्राणशरीरान्यत्वनिवेशे तादृशभागेष्वतिव्याप्त्यप्रसक्तेश्च, तेषां शरीरान्यत्वाभावात् ॥ एतेन मुक्तादिशरीरे उक्तलक्षणस्यातिव्याप्तिरिति निरस्तम् ॥

इन्द्रियं द्विविधं—प्राकृतमप्राकृतं चेति । रजोरहितत्वे सति तमोरहितत्वे सति वा इन्द्रियत्वमप्राकृतेन्द्रियलक्षणम् । सात्त्विकाहङ्कारोपादानकत्वं प्राकृतेन्द्रियस्य लक्षणं; जीवगमनव्यापकगमनवदिन्द्रियत्वं वा प्राकृतेन्द्रियलक्षणम्, यदा जीवगमनं तदेन्द्रियगमनमिति व्याप्तेः ॥

यद्यपि—मुक्तिकाले जीवगमनेऽपि नेन्द्रियगमनमिति न व्यापकत्वसम्भवः । तथाऽपि बद्धजीवगमनव्यापकगमनवत्त्वस्य लक्षणत्वान्न दोषः ॥ न च—कर्मेन्द्रियाणां हस्तपादादीनां शरीरेण सह विनाशदर्शनाज्जीवेन सह गमनासम्भवादुक्तलक्षणस्य तत्राव्याप्तिरिति—वाच्यम् । इन्द्रियाधिष्ठानभूतस्य भौतिकहस्तपादादेर्नाशेऽपि तदधिष्ठानकस्याहङ्कारिकस्येन्द्रियस्य शरीरनाशकाले नाशानुपलम्भेन जीवेन सह गमनोपपत्तेः; तेषां शरीरेण सह नाश इति यादवप्रकाशपक्षस्यायुक्तत्वात् । हस्तादीनां प्रतिशरीरमुत्पत्तिविनाशाभ्युपगमे 'अष्टौ प्रकृतयष्षोडश विकाराः', 'चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमुच्यते'—इत्यादिश्रुत्यभि-

हिततत्त्वसङ्ख्याया विकारसङ्ख्यायाश्च विरोधप्रसङ्गात्, पृथिव्युत्पत्तिप्रतियोगिकध्वंसपूर्वकालीनोत्पत्तिकानामेव तत्त्वरूपत्वात् । अन्यथा घटपटादीनामपि तत्त्वरूपतापत्त्या तत्त्वसङ्ख्याधिक्यप्रसङ्गात् । "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति श्रुतौ सर्वपदेनेन्द्रियत्वव्यापकोत्क्रमणप्रतीतेश्च ॥

**यद्यपि**—'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ सर्वपदस्य प्रक्रान्तकतिपयवस्तुपरत्वं दृश्यते । **तथाऽपि**—अभेदसम्बन्धेन किञ्चिद्धर्मावच्छिन्नविशेषणतापन्नसर्वशब्दस्योद्देश्यतावच्छेदकव्यापकविधेयव्याप्यसर्वत्वावच्छिन्नबोधकत्वस्य व्युत्पत्तिसिद्धत्वान्न प्रकृते सर्वशब्दस्य सङ्कुचितवृत्तिकत्वं युक्तम् ॥ स्पष्टं चेदं **प्रतिज्ञालक्षणगादाधर्याम्** ॥ किञ्च **अग्न्यादिश्रुतेरिति चेन्न भाक्तत्वादिति** सूत्रे 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वायुं प्राणश्चक्षुरादित्यम्' इत्यादिना प्राणानां जीवमरणकाले अग्न्यादिष्वप्ययश्रवणान्न तेषां जीवेन सह गमनमित्याशङ्क्याप्ययश्रवणस्य देवतापक्रमणपरत्वान्न दोष इति समाधानेन कर्मेन्द्रियस्य वाचो जीवेन सह गमनस्य स्थापितत्वात् तन्न्यायेन सर्वेषामपि गमनाङ्गीकारस्य युक्तत्वात् ॥

न च—वेदान्तदीपे **हस्तादयस्तु स्थितेऽतो नैवमिति** सूत्रे—

> "तत्र श्रोत्रादीनि जीवेन सह शरीरान्तरगमनेऽपि गच्छन्ति । वाग्घस्तादीनि कर्मेन्द्रियाणि तु स्थिते शरीरे तेनैव सहोत्पत्तिविनाशयोगीन्युपकारकाणि ॥"

इत्युक्तं विरुध्येतेति—वाच्यम् । उदाहृतवेदान्तदीपवाक्यस्य परमतवद्धस्तादीनां प्रतिशरीरमुत्पादविनाशाभ्युपगमेऽपि तेषामिन्द्रियत्वं सिध्यतीत्यत्र तात्पर्यात्तेषां शरीरेण सहोत्पादविनाशवत्त्वे तात्पर्यविरहात् । अत एव **सारे** तत्सूत्रमन्यथा व्याख्यातं—"हस्तादयोऽपीन्द्रियाणि, जीवे देहान्तरवस्थिते उपकारकत्वाविशेषात्"—इति ॥

एवमेव **भाष्येऽपि** व्याख्यातं "न सप्तैवेन्द्रियाणि अपित्वेकादश— हस्तादीनामपि शरीरे स्थिते जीवे तस्य भोगोपकरणत्वात् ॥"—इति ॥

न च—सूत्रघटकस्थित इत्यस्य दीपोक्तरीत्या शरीरे स्थित इत्यर्थकत्वे शरीरेण सहोत्पत्तिविनाशवत्त्वं हस्तादीनां प्रतीयते, सारभाष्योभयरीत्या शरीरान्तरवस्थिते जीवे हस्तादीन्युपकारकाणीत्यर्थकत्वे च स्थित इत्यस्य वैयर्थ्यं; चक्षुरादीनामपि शरीरे जीवावस्थानदशायामेवोपकरणत्वेन तद्व्यावर्तकत्वासम्भवात्; तथा च दीपोक्तयोजनाया एव युक्तत्वाद्धस्तादीनां शरीरेण सहोत्पत्तिविनाशवत्त्वेऽपि सूत्रादितात्पर्यमस्तीति—वाच्यम्। सारभाष्योक्तयोजनायामपि दोषाभावात्। शरीरान्तरवस्थिते जीवे हस्तादीन्युपकारकाणीत्यत्र जीव इत्यस्य कर्तरीत्यर्थकत्वेनेच्छाविषयकार्यजनकत्वरूपोपकारकत्वघटककार्ये जीवकृतिजन्यत्वलाभाद्धस्तादिजन्यादानादिरूपकार्ये जीवकृतिजन्यत्वं चक्षुरादिजन्यसाक्षात्कारे च तदजन्यत्वमिति वैलक्षण्यसूचकतया स्थितइत्यस्य सार्थकत्वात्। पाथसि पीते तृष्णा शाम्यतीत्यादाविव सति सप्तम्या जन्यजनकभावलाभात्। यद्वा—शरीरान्तरवस्थिते जीवे उपकारकाणीत्यस्य जीवाधिकरणीभूतशरीरावच्छेदेनादानादिकार्यजनकानीत्यर्थः; चक्षुरादीनि तु वृत्त्या शरीरानवच्छिन्ने घटादिदेशेऽपि चाक्षुषादिरूपकार्यजनकानीति चक्षुरादीनां वृत्त्या कार्यजनकत्वं, हस्तादीनां तन्निरपेक्षकार्यजनकत्वमिति वैलक्षण्यसूचकतया स्थित इत्यस्य सार्थकत्वात् ॥

**यद्यपि**—'सप्तगतेर्विशेषितत्वाच्च' इति पूर्वपक्षसूत्रे सप्तानां गतिश्रवणात्सप्तैवेन्द्रियाणीत्यर्थके गतेरित्यस्य प्रतिकोटितया **हस्तादय** इति सिद्धान्तसूत्रे स्थित इत्यस्योपादानात्; हस्तादीनां गतिर्नास्तीति स्वरसतः प्रतीयते। **तथाऽपि**—भौतिकेन्द्रियवादे दोषस्योक्तत्वा-

दाहङ्कारिकेन्द्रियपक्षे च तादृशार्थासम्भवादुक्तार्थ एव युक्त इति बोध्यम् ॥

न चैवमपि—जीवस्य परकायप्रवेशदशायामिन्द्रियादीनामगमनाद्व्याप्तिरिति—वाच्यम् । जीवस्य स्वेन्द्रियैस्सहैव परकाये प्रवेशात्; अन्यथा तच्छरीरावच्छेदेनेन्द्रियकार्याणामनुत्पत्तेः । मृतशरीरे प्रवेशस्थले तदीयेन्द्रियाणामभावात्तन्न्यायेन जीवविशिष्टशरीरप्रवेशस्थलेऽपीन्द्रियैस्सह प्रवेशाङ्गीकारस्य युक्तत्वात् अन्यदीयेन्द्रियाणामन्यादृष्टोपार्जितानामेतदुपकारकत्वासम्भवात् ;

"शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥"

इति स्मृतेश्च ॥ तथा च—पूर्वपरित्यक्ते स्वशरीरे मृतकायप्रवेशवत् पुनरिन्द्रियैस्सह प्रवेशः ॥

न च—**प्रदीपवदावेशस्तथा हि दर्शयतीति** सूत्रे योगिनां एकदा अनेकशरीरेषु प्रवेशो ज्ञानव्याप्त्येत्युक्तम्, तत्रेन्द्रियाणामभावात् कथं तत्कार्यनिर्वाहः—इति वाच्यम् । तत्रानेकशरीरेष्विन्द्रियाणामपि प्रतिशरीरं विविक्ताभिर्वृत्तिभिरीश्वरसङ्कल्पेन प्रसृताभिः कार्यनिर्वाहाङ्गीकारात् ॥ उक्तञ्च **न्यायसिद्धाञ्जने**—

"प्रतिदेहं विविक्तानि मनःप्रभृतिकान्यपि ।
इन्द्रियाणीश्वरेच्छाद्यैः प्रवर्तन्ते तु योगिनः ॥" —इति ॥

एवमेव स्वप्ने भगवता सृष्टेष्वपि देहेष्विन्द्रियकार्यनिर्वाहो वृत्तिभिरेव बोध्यः ॥

**पुनरिन्द्रियं द्विविधं**—ज्ञानेन्द्रियकर्मेन्द्रियभेदात् ॥

ज्ञानप्रसरणहेतुत्वे सतीन्द्रियत्वं—**ज्ञानेन्द्रियत्वम्**। इन्द्रियसंयोगेऽतिव्याप्तिवारणायेन्द्रियत्वनिवेशः। न च—अप्राकृतज्ञानेन्द्रियेष्वव्याप्तिः, नित्यमुक्तेश्वराणां ज्ञानस्येन्द्रियाधीनप्रसरणवत्त्वाभावादिति—वाच्यम्;

ज्ञानप्रसरणहेतुतावच्छेदकधर्मवत्त्वस्य विवक्षितत्वात्, अप्राकृतेन्द्रियेष्वपि तादृशहेतुतावच्छेदकचक्षुष्ट्वादिमत्त्वस्याक्षततत्वात्॥ तच्च षड्विधम्--मनश्श्रोत्रस्पर्शननयनरसनघ्राणभेदात्। तत्र मनस्स्पर्शननयनाना द्रव्यग्राहकेन्द्रियत्वम्, अन्येषां तदग्राहकेन्द्रियत्वं लक्षणम्। यद्यपि—सर्वेषामेवेन्द्रियाणां तत्तत्कालविशिष्टवस्तुग्राहकत्वाद्द्रव्यग्राहकत्वमविशिष्टं; तथाऽपि—द्रव्यपदेन कालातिरिक्तद्रव्यमेव विवक्षितमिति न दोष। कालस्य षडिन्द्रियवेद्यत्वं च वक्ष्यते ॥

तत्र श्रावणस्पार्शनोभयजनकेन्द्रियत्वं—**मनसो लक्षणम्**। श्रावणजनकत्वमात्रोक्तौ श्रोत्रे, स्पार्शनजनकत्वमात्रोक्तौ त्वगिन्द्रियेऽतिव्याप्तिः; अत उभयनिवेशः। तावन्मात्रोक्तौ चात्मादावतिव्याप्तिः; अत इन्द्रियत्वनिवेश। एवं स्पार्शनचाक्षुषोभयादिघटितमपि लक्षणान्तरमूह्यम् ॥ न चोक्तलक्षणस्याप्राकृतमनस्यव्याप्तिः; नित्यमुक्तादिज्ञानस्येन्द्रियान्तराधीनप्रसरणवत्त्वाभावेऽपि मनोऽधीनप्रसरणस्याङ्गीकारात्; 'मनसैतान्कामान् पश्यन् रमते' इति श्रुत्या मुक्तादिज्ञानेऽपि मनोधीनप्रसरणबोधनात्, श्रावणस्पार्शनोभयजनकतावच्छेदकधर्मघटितलक्षणसम्भवाच्च ॥ स्मृतिजनकतावच्छेदकधर्मवदिन्द्रियत्वं वा **मनोलक्षणम्**, हृत्प्रदेशमात्रवृत्तित्वं वा **तल्लक्षणम्**। न च—'अनवस्थितेरसम्भवाच्च नेतरः' इति सूत्रभाष्ये जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानमित्युक्तत्वाज्जीवेऽतिव्याप्तिरिति—वाच्यम्। इन्द्रियत्वस्यापि निवेशात्, चक्षुरादीनां च स्वस्वाधिष्ठाने हृत्प्रदेशे च वर्तमानत्वेऽपि न तन्मात्रवृत्तित्वमिति नातिव्याप्तिः ॥

तदेकमेव मनः वृत्तिभेदात् बुद्ध्यहङ्कारचित्तसंज्ञां लभते, न तु बुद्ध्यादिकमिन्द्रियान्तरम्। न च—**सुबालोपनिषदि** 'चक्षुश्च द्रष्टव्यं च नारायणः' इत्यादिना पञ्च ज्ञानेन्द्रियाण्युक्त्वा—

"मनश्च मन्तव्यं च नारायणः, बुद्धिश्च बोद्धव्यं च नारायणः,
अहङ्कारोऽहङ्कर्तव्यं च नारायणः ॥"

इत्याम्नानात्, अनन्तरं च कर्मेन्द्रियाणां गणनात्, बुद्ध्यादीनामपीन्द्रियान्तरत्वं प्रतीयत इति—वाच्यम् । वृत्तिभेदादेव पृथग्गणनोपपत्तेः ; प्राणस्य वृत्तिभेदात्प्राणापानादिरूपेण पृथक्परिगणनवन्मनसोऽपि वृत्तिभेदात् पृथगभिधानोपपत्तेः । कामसङ्कल्पविचिकित्सादयोऽपि मनोवृत्तिविशेषाः—'कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुतेः, **पञ्चवृत्तिर्मनोवद्व्यपदिश्यते** इति सूत्रभाष्ये कामादीनां मनोवृत्तित्वाभिधानाच्च । "कामादयोऽध्यवसायादयश्च पुरुषधर्मा एव । उक्तश्रुतौ कामादिपदस्य आयुर्घृतमित्या दाविव तज्जनके लाक्षणिकत्वात्" इत्युक्त **सर्वार्थसिद्धौ** ॥

नचैवं—पञ्चवृत्तिर्मनोवद्व्यपदिश्यते इति सूत्रभाष्यविरोधः, तत्र कामादीनां मनोवृत्तिविशेषत्वाभिधानात् ; एवं सप्तगतेरित्याधिकरण—भाष्यविरोधश्च, तत्राध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इत्युक्तत्वादिति—वाच्यम् । कामत्वाध्यवसायत्वाद्यवस्थाश्रयज्ञानजनकत्वादिरूपतत्तदवस्थाविशिष्टस्य मनस एव कामसङ्कल्पादिशब्दैर्बुद्ध्यहङ्कारादिशब्दैश्च व्यपदेशस्योदाहृतभाष्याभिप्रेततया **श्रुतप्रकाशिकान्यायसिद्धाञ्जनयोः** प्रतिपादितत्वात् ॥

**अन्ये तु**—'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इति सूत्रे श्रुतौ च मनःपदं धर्मभूतज्ञानपरम् । नचैवं लक्षणाप्रसङ्गः, "मनश्चेतस्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा ज्योतिस्स्मृतिस्सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति" इति **ऐतरेयश्रुत्या** मनःपदस्य ज्ञाने शक्त्यभिधानात् । तथा च—धर्मभूतज्ञानस्य यथा कामादिवृत्तिमत्त्वं, तथा प्राणस्य प्राणापानादिवृत्तिमत्त्वमिति दृष्टान्तसामञ्जस्यम्—**इत्याहुः** ॥

स्पर्शाविषयकसाक्षात्काराजनकत्वे सति शब्दविषयकसाक्षात्कार-जनकेन्द्रियत्वं—श्रोत्रस्य लक्षणम्। मनस्यतिव्याप्तिवारणाय सत्यन्तं, चक्षुष्यतिव्याप्तिवारणाय शब्दविषयकसाक्षात्कारजनकेति, श्रोत्र-संयोगेऽतिव्याप्तिवारणायेन्द्रियत्वमिति। तच्च मनुष्यादीनां कर्णशष्कुल्य-वच्छिन्नप्रदेशवृत्ति द्विजिह्वादीनां नयनवृत्तीति ज्ञेयम् ॥

ननु—एकादशेन्द्रियाणामपि अणवश्चेति सूत्रेणाणुत्वाभिधानात् श्रोत्र-स्याणुरूपस्य कथं दूरस्थशब्दग्राहकत्वम्। न च—गगने वीचीतरङ्ग-न्यायेन शब्दधाराया उत्पत्त्यङ्गीकारात् श्रोत्रसम्बद्धस्य शब्दस्य तेन ग्रहणं युज्यत इति—वाच्यम्। तथा सत्यनन्तशब्दकल्पनाप्रसङ्गेन गौरवात्; श्रोत्रदेशोत्पन्नस्यैव ग्रहणे प्राच्यां शब्दः, प्रतीच्यां शब्दः, दूरे शब्द, समीपे शब्द इत्यादिप्रतीत्यनुपपत्तिश्च—इति चेत् ॥

अत्र केचित्—श्रोत्रस्याणुत्वेऽपि शब्दोत्पत्तिदेशपर्यन्तं प्रसृतया तद्वृत्त्या शब्दस्य सम्बन्धात् दूरस्थशब्दग्रहोपपत्तिः, प्राच्यां शब्दो दूरे शब्द इत्यादिप्रतीत्युपपत्तिश्च। वीणायाः शब्दं शृणोमीत्यादि-व्यवहारस्याप्युपपत्तिः; वीचीतरङ्गन्यायेन शब्दोत्पत्तिपक्षे वीणा-जन्यशब्दस्याश्रवणात्तदनुपपत्तिः—इत्याहुः ॥

वस्तुतस्तु—'शब्दगन्धसूर्यालोकरत्नप्रभादयो धर्म्यतिवर्तिनो गति-मन्तश्च' इति आत्मसिद्धिवाक्यानुरोधात्, शब्दाश्रयस्य वाय्वादि-भूतस्य श्रोत्रदेशागमनात् शब्दस्य सन्निकृष्टत्वात् शब्दप्रत्यक्षोपपत्तिः। उक्तात्मसिद्धिवाक्ये गन्धपदं शब्दपदं च तत्तदाश्रयद्रव्यपरं; यथा गन्धाश्रयपार्थिवभागानां वायुना समानीतत्वाद्दूरस्थचम्पकादेर्गन्धो घ्राणेन गृह्यते, तद्वत् शब्दोपीति भावः। अत एवानुकूलवातदशायां दूरस्थस्यापि शब्दस्य ग्रहणं, प्रतिकूलवाते च समीपस्थस्याप्यग्रहण-मित्युपपद्यते। एवं भेर्यां ताड्यमानायां प्रथमं समीपस्थानां पुरुषाणां शब्दप्रत्यक्षं, अनन्तरं च विप्रकृष्टानां प्रत्यक्षं, गृहान्तर्गतानामस्फुटं

दूरस्थशब्दग्रहणं, बहिर्निर्गतानां च स्फुटं तद्ग्रहणमित्यादिकं चोपपद्यते। न च—प्रतिकूलवातेन श्रोत्रवृत्तेर्निरोधान्न तदा शब्दग्रहणं, समीपस्थानां च झडिति वृत्तिप्रसरणादविलम्बेन शब्दग्रहणं, ग्रहान्तर्गताना तु श्रोत्रवृत्तौ कतिपयांशस्य कुड्यादिना निरोधादल्पांशानां प्रसरणादस्फुटग्रहणमिति रीत्या वृत्तिगमनपक्षेऽप्युपपत्तिरिति -वाच्यम्। भेर्यादिशब्देन गुहासौधादौ प्रतिशब्दोत्पादस्य चलनस्य च तादृशशब्दाश्रयद्रव्याभिघातमन्तरेणानुपपत्तेश्शब्दाश्रयद्रव्यागमनपक्षस्यैव युक्तत्वात् ॥

उक्तं च **सर्वार्थसिद्धौ**—

"गुहासौधादिसङ्क्षोभः प्रतिशब्दश्च जृम्भते ।
निस्साणादिप्रणादेन तदेतत्पक्षसङ्गतम् ॥" —इति ॥

न चैतत्पक्षे प्राच्यां शब्द इत्यादिप्रतीत्यनुपपत्तिः। प्राच्यास्समागतवायुना शब्दोपलम्भेन शब्दे प्राच्यादित्वप्रतीतेरानुमानिकत्वात्। एतदप्युक्तं तत्रैव—

"यथा मयूरवीणादेश्शब्दोऽयमिति गृह्यते ।
तथा प्राच्यादिशब्दोयमिति लिङ्गात्तथा विधात् ॥"—इति ॥

तस्मात् शब्दाश्रयद्रव्यागमनपक्षे न कोऽपि दोष इति दिक् ॥

रूपाग्राहकत्वे सति स्पर्शग्राहकेन्द्रियत्वं—**त्वगिन्द्रियलक्षणम्**। मनस्यतिव्याप्तिवारणाय सत्यन्तं, श्रोत्रेऽतिव्याप्तिवारणाय स्पर्शग्राहकेति, त्वगिन्द्रियसंयोगवारणायेन्द्रियत्वमिति। त्वगिन्द्रियं च सर्वशरीरवृत्ति, अणुत्वेऽपि तस्य विकासशक्त्या वृत्तिद्वारेण वा तस्य शरीरव्यापकत्वसम्भवात्। अत एव पिपीलिकादिशरीरस्थस्य स्पर्शनस्य विकासावस्थयैव गजादिशरीरप्रवेशे तादृशशरीरव्यापकत्वं, गजादि शरीरस्थस्य च तस्य सङ्कोचावस्थया पिपीलिकादिशरीरव्यापकत्वमुपपद्यते। नखदन्तकेशादिषु प्राणभान्द्यतारतम्यात् स्पर्शानुपलम्भः ॥

स्पर्शाग्राहकत्वे सति रूपग्राहकेन्द्रियत्वं—**चक्षुषो लक्षणम्।** तच्च नयनवृत्ति, एतस्य च वृत्तिप्रसरणेन विषयदेशप्राप्त्या दूरस्थपदार्थग्राहकत्वं 'दिवीव चक्षुराततम्' इति श्रुतिव्यवहार-स्वारस्याच्चक्षुषो वृत्त्यङ्गीकारस्य युक्तत्वात्। कुड्यादिव्यवधानस्थले कुड्यादिना अञ्जनाद्यसंस्कृतनेत्रवृत्तेः प्रतिरोधान्न व्यवहितार्थग्राह-कत्वम्। अञ्जनादिसंस्कृतनेत्रवृत्ते कुड्यादावपि प्रवेशादञ्जनसंस्कृत-चक्षुषां व्यवहितार्थग्रहोपपत्ति। काचजलाद्यच्छद्रव्याणां च वृत्ति-निरोधकत्वाभावात्तद्व्यवहितानामपि चक्षुषा ग्रहणमुपपन्नम्। ज्ञानेन्द्रि-येषु चक्षुष एकस्यैव विषयदेशं गत्वा तद्ग्राहकत्वं, अन्येषां तु स्वदेश-प्राप्तविषयग्राहकत्वमिति—विवेक.। पिपीलिकादीनां रसनं पश्वादीनां घ्राणमपि वृत्त्या विषयदेशं गत्वा तद्ग्राहकमित्यनुभवानुसारात् कल्पयन्ति॥

रूपाग्राहकत्वे सति रसग्राहकेन्द्रियत्वं—**रसनेन्द्रियलक्षणम्।** तच्च जिह्वाग्रवर्ति॥

रसाग्राहकत्वे सति गन्धग्राहकेन्द्रियं—**घ्राणं**, तच्च नासाग्रवर्ति॥

उक्तानामिन्द्रियाणां द्रव्यप्रत्यक्षे संयोगः। द्रव्याश्रितानां रूपा-दीनां प्रत्यक्षे संयुक्तापृथक्सिद्धत्वं सन्निकर्ष इति बोध्यम्॥

उच्चारणाद्यन्यतमजनकेन्द्रियत्वं—**कर्मेन्द्रियसामान्यलक्षणम्।** तच्च वाक्पाणिपादपायूपस्थभेदात् **पञ्चधा।** तत्र वर्णोद्देश्यककृति-जन्यव्यापारवदिन्द्रियं **वाक्।** अत्र जिह्वादावतिव्याप्तिवारणायेन्द्रिय-त्वनिवेशः। सा च हृत्कण्ठजिह्वामूलतालुदन्तोष्ठनासामूर्धरूपस्थानाष्टक-वृत्तिः। शुकादिव्यतिरिक्तविहङ्गादीनामुक्तेन्द्रियसत्त्वेऽप्यदृष्टसंस्था-नादिसहकारिविरहाद्वर्णाद्यनुत्पत्तिः। शुकादीनामपि किञ्चित्तादृश-संस्थानवैषम्यादुच्चारणवैषम्यम्॥

आस्यकबलसयोगोद्देश्यककृतिप्रयोज्यव्यापारवदिन्द्रियं—**पाणिः**। भौतिकहस्तादावतिव्याप्तिवारणायेन्द्रियमिति। विलेखनसाधनेन्द्रियं वा सः; विलेखनं च पत्रादिगतावयवविभागमष्यादिसंयोगान्यतरानुकूलव्यापारः। तथा चावयवविभागमष्यादिसयोगान्यतरोद्देश्यककृतिजन्यव्यापारवदिन्द्रियं पाणिरिति फलितम्। स च मनुष्यादीनां अङ्गुल्यग्रवृत्तिः, गजादीनां नासाग्रवृत्तिः। न च—अभ्यासपाटवात्पादादिभिरपि केषांचिद्विलेखनस्य जायमानत्वात्पादादावतिव्याप्तिरिति—वाच्यम्। तत्राप्यल्पीयस्याः हस्तादिवृत्तेः प्रसरणाङ्गीकारेण तादृशवृत्त्यैव लेखनाद्युत्पत्तेः॥

उत्तरदेशसंयोगोद्देश्यककृतिजन्यव्यापारवदिन्द्रियं—**पादः**। भौतिकपादवारणायेन्द्रियमिति। स च मनुष्यादीनां चरणवृत्तिः भुजगपतगादीनां उरःपक्षादिवृत्तिः॥

मलादिपतनोद्देश्यककृतिजन्यव्यापारवदिन्द्रियं—**पायुः**। स च तत्तदवयवविशेषवृत्तिः॥

आनन्दविशेषोद्देश्यककृतिजन्यव्यापारवदिन्द्रियं—**उपस्थः**। स च मेहनादिवृत्तिः॥

उक्तानामिन्द्रियाणां मुक्तिदशायामप्राकृतदेशगमनासम्भवादिहैव यावत्प्रलयं स्थितिः करणविधुरैरन्यैः परिग्रहो वा बोध्यः॥

**अत्र नैयायिकाः**—

कर्मेन्द्रियाणामिन्द्रियत्वमेवासिद्धं, प्रमाणाभावात्। ज्ञानेन्द्रियेषु च श्रोत्रस्याकाशत्वं, स्पर्शनस्य वायुत्वं, नयनस्य तेजस्त्वं, रसनस्य जलत्वं, घ्राणस्य च पृथिवीत्वं युक्तम्। तथा हि—श्रोत्रं स्वग्राह्यगुणसजातीयगुणवत्, बाह्येन्द्रियत्वात्, चक्षुरादिवत्, स्पर्शनं वायवीयं, रूपाग्राहकत्वे सति स्पर्शग्राहकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत्; चक्षुस्तैजसं, स्पर्शाग्राहकत्वे सति रूपग्राहकत्वात्,

प्रदीपप्रभावत् ; रसनं जलीयं, रूपाग्राहकत्वे सति रसग्राहकत्वात्, सक्तुरसाभिव्यञ्जकनवशरावोदकवत् ; घ्राणं पार्थिवं, रसाग्राहकत्वे सति गन्धग्राहकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत—इत्याद्यनुमानैश्श्रोत्रादीनामाकाशत्वादिकं सिध्यति—इत्याहुः ॥

तन्न । 'एका कन्या दशेन्द्रियाणि दशेमे पुरुषे प्राणा आत्मैकादशः' इति श्रुत्या, 'इन्द्रियाणि दशैकं च देवा वैकारिका दश । एकादशं मनश्च' इत्यादिस्मृत्या च हस्तादीनामपीन्द्रियत्वावगमात् । श्रुतौ कन्यापदमात्मपदं च मनःपरं, श्रुतौ प्राणपदं स्मृतौ देवपदं चेन्द्रियपरं बोध्यम् । श्रोत्रादीनामनुमानैराकाशत्वादिसाधनमप्ययुक्तम् । तत्र श्रोत्रादिशब्दैः प्रत्यक्षग्राह्यकर्णशष्कुल्यादिरूपाधिष्ठानानां ग्रहणे बाधः । स्वमते तेषामाकाशत्ववायुत्वादेरनङ्गीकारात् तत्तदधिष्ठानकेन्द्रियाणां चाकाशादिरूपाणामनुमानात्पूर्वमसिद्ध्या उक्तानुमानेषु पक्षत्वासम्भवात् । न च—शब्दग्राहकेन्द्रियत्वस्पर्शग्राहकेन्द्रियत्वादिना पक्षीकरणात् न दोष इति—वाच्यम् । प्रथमानुमाने स्वग्राह्यगुणसजातीयगुणाभाववति हस्तादौ बाह्येन्द्रियत्वस्य हेतोर्व्यभिचारात्, मनोभिन्नज्ञानेन्द्रियत्वस्य हेतुत्वेऽपि दृष्टान्तस्य साध्यविकलत्वात्, चक्षुरादौ स्वग्राह्यरूपादिमत्त्वस्यास्माभिरनङ्गीकारात् । द्वितीयतृतीयानुमानयोरपि दृष्टान्तस्साधनविकलः, व्यजनपवनस्य वेगेन शरीरोपरि निपततस्तत्संयुक्तसूक्ष्मसलिलकणानां शरीरान्तःप्रवेशहेतुत्वेऽपि स्पर्शग्राहकत्वाभावात्, प्रविष्टानां च सलिलानां शैत्यस्यान्तर्गतत्वगिन्द्रियप्रदेशेन स्फुटमवगमात्; विषयतासम्बन्धेन चाक्षुषं प्रति संयोगादिसम्बन्धेन तमसःप्रतिबन्धकतया दीपप्रभायास्तादृशतमोनिवर्तकत्वेन चाक्षुषप्रयोजकत्वेऽप्यालोकसंयोगत्वादिना चाक्षुषहेतुत्वे मानाभावात्, प्रभायाः रूपग्राहकत्वाभावात् । किञ्च द्रव्यचाक्षुषे आलोकप्रतियोगिकसंयोगो न हेतुः ; मणि-

प्रभादौ तदभावेऽपि चाक्षुषोत्पत्तेः ; नाप्यालोकानुयोगिकः, घटादौ तदभावात् ; नाप्यालोकप्रतियोगिकत्वतदनुयोगिकत्वान्यतरविशिष्टस्संयोगः, आलोकप्रतियोगिकत्वतदनुयोगिकत्वादीनां विशेषणविशेष्यभावे विनिगमनाविरहेण तदवच्छिन्नस्य कारणताबाहुल्यापत्तेः ॥ न च—अन्यदेशावच्छिन्नादप्यालोकसंयोगाच्चाक्षुषोत्पत्त्यभावाज्जातिविशेषस्यैव द्रव्यादिचाक्षुषजनकतायामालोकसंयोगनिष्ठायामवच्छेदकत्वं स्वीकार्यम् ; सा च—जातिरालोकनिष्ठे वाय्वादिसंयोगेऽपि सम्भवति । अत एव प्रभादि चाक्षुषमिति—वाच्यम्। तादृशजातिरालोकसंयोगे तत्समानाधिकरणतत्समानकालीनवायुसंयोगादौ वेत्यत्र विनिगमकाभावात्। किन्तु तमस्त्वेन प्रतिबन्धकत्वमेव द्रव्यचाक्षुषे कल्प्यते, तदभावादेवोक्तप्रभादौ चाक्षुषोपपत्तिः ॥ न च—तमोऽभावत्वेन हेतुत्वेऽपि तमःप्रतियोगिकत्वाभावत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताद्वयापत्तिरिति—वाच्यम् । स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तमस्त्वविशिष्टत्वेनैव कारणतास्वीकारेण कारणतावच्छेदके अभावत्वानिवेशात् ॥ न च—अत्रापि प्रतियोगितासम्बन्धेनालोकविशिष्टत्वेनहेतुतास्वीकारान्न विनिगमनाविरह इति—वाच्यम् ; मणिप्रभादौ व्यभिचारावारणात् ॥ **एतेन**—संयोगेनालोकस्य हेतुत्वमित्यपि—**निरस्तम्** ॥

उक्तं च **प्रथमसूत्रभाष्ये**—

"प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव ॥" —इति ॥

न च—यथाकथञ्चिच्चाक्षुषप्रयोजकत्वस्य हेतुत्वात्तस्य प्रभायां सत्त्वान्न साधनवैकल्यमिति—वाच्यम्; तादृशप्रयोजकत्वस्योन्मीलनादिहेतुभूतपक्ष्मादिसाधारण्येन व्यभिचारात् । एवमुक्तानुमानानां—इन्द्रियाण्यभौतिकानि, इन्द्रियत्वात्, मनोवत्—इत्यादिभिस्सत्प्रतिपक्षितत्वा-

दाहङ्कारिकत्वप्रतिपादकश्रुत्यादिबाधितत्वाच्च न भौतिकत्वमिन्द्रियाणामिति। न च—'अकाशमिन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते' इतिश्रुत्या इन्द्रियाणां तन्मात्रेषु लयप्रतिपादनात्तन्निष्ठलयप्रतियोगित्वस्य तदुपादानकत्वव्याप्यत्वात्तन्मात्रोपादानकत्वसिद्ध्या भौतिकत्वं सिध्यतीति—वाच्यम्; इन्द्रियपर्याये आकाशपर्याये च लीयन्त इति पदाश्रवणेन तत्पर्यायद्वयस्याकाशेन्द्रिययोः इन्द्रियतन्मात्रयोश्च परस्परसंयोगप्रतिपादनपरत्वात्॥ न चेन्द्रियपर्याये लीयन्त इति पदानुषङ्गः, सति गत्यन्तरे अध्याहारवत्तस्याप्ययोगात्, अन्यथा आकाशपर्यायेऽप्यवैरूप्यायानुषङ्गापत्त्या सर्वोपबृंहणविरोधापत्तेः। इन्द्रियाणामाकाशोपादानत्वस्य कुत्राप्यकथनात्॥ अस्याश्चोपनिषदि भूतादेराकाशमाकाशाद्वायुरिति सृष्टिक्रमेण भूतादेरेवाकाशोपादानत्वाभिधानात्॥ न च—उक्तपर्यायद्वयस्याकाशेन्द्रिययोस्संसर्गप्रतिपादनपरत्वमपि न सम्भवति, तादृशसंसर्गस्येदानीमपि सत्त्वेन तत्प्रतिपादने प्रयोजनाभावादिति—वाच्यम्; स्पर्शनचक्षुरादिष्विन्द्रियेष्वाप्यायकानां वायुतेजःप्रभृतिभागानां सत्त्वात् तत्तदिन्द्रियाप्यायकत्वस्य तत्तदिन्द्रियेणैकसङ्घाततापत्तिरूपत्वात्तादृशभूतांशानां सर्वेषामपि तद्दशायामाकाशतापत्त्या इन्द्रियत्वावच्छेदेनाकाशत्वावच्छिन्नप्रतियोगिकविलक्षणसंयोगस्य प्रलयदशायामेव सम्भवात्। ततस्तादृशाकाशस्य शब्दतन्मात्ररूपताप्राप्तौ तन्मात्रत्वावच्छिन्ने इन्द्रियसंयोगस्योपपत्तेः। शब्दतन्मात्रस्यैकत्वेऽप्यंशभेदविवक्षया बहुवचनोपपत्तेः। तन्मात्राणि भूतादौ लीयन्त इत्यनेन शब्दतन्मात्रस्य तामसाहङ्कारे भूतादिपदवाच्ये लयप्रतिपादनेन विरोधाभावादिति॥

अथ तन्मात्रादिकं निरूप्यते। तन्मात्रभूतोभयसाधारणं लक्षणं तु शब्दवत्त्वम्, शब्दतन्मात्रादिपञ्चतन्मात्रेषु पञ्चमहाभूतेषु च तत्सत्त्वाल्लक्षणसङ्गतिः। स्वसमानाधिकरणस्वसजातीयगुणध्वंसासमानकालीन-

गुणवत्त्वं पञ्चतन्मात्राणां लक्षणम्। साजात्यं चाद्रव्यविभाजकशब्दत्व-स्पर्शत्वादिना। शब्दतन्मात्रे पूर्वं शब्दविरहेऽपि भगवत्सङ्कल्पेन शब्दोत्पत्त्या तादृशशब्दस्य स्वसमानाधिकरणशब्दध्वंसासमानकालीनत्वाल्लक्षणसमन्वयः॥ एवं स्पर्शतन्मात्रे स्पर्शं रूपतन्मात्रादौ रूपादिकं चादाय लक्षणसमन्वयो बोध्यः। अत्र शब्दादिमत्त्वस्याकाशादिभूते सत्त्वादातिव्याप्तिवारणायासमानकालीनान्तगुणविशेषणं, आकाशादौ तन्मात्रादिनिष्ठसूक्ष्मशब्दादिनाशपूर्वकं स्थूलशब्दाद्युत्पत्तेस्तादृशस्थूलशब्दस्य च स्वसमानाधिकरणस्वसजातीयसूक्ष्मशब्दध्वंससमानकालीनत्वान्नातिव्याप्तिः। स्थूलसूक्ष्मगुणभेदादेव भूततन्मात्रयोर्भेदात्॥

उक्तं च **तत्त्वमुक्ताकलापे**—

"सूक्ष्मस्थूलस्वभावस्वगुणसमुदयप्रक्रियातारतम्यात्
तन्मात्राभूतभेदः कलिलदधिनयात्कल्पितस्तत्त्वविद्भिः।"
—इति॥

स्वगुणाः—शब्दादयः, तेषां, समुदयः—उत्पत्तिः। अत्र शब्दादौ स्थूलत्वसूक्ष्मत्वे उद्भूतत्वानुद्भूतत्वरूपे॥

उक्तं च **सर्वार्थसिद्धौ**—

"आगमेन विना सिद्धिस्तन्मात्राणां च दुर्वचा।
उद्भवानुद्भवाद्यैस्तु लोके सूक्ष्मादिकल्पना॥" —इति॥

स्पर्शतन्मात्रादिषु स्पर्शादेरपि घटादिनिष्ठस्पर्शध्वंससमानकालीनत्वादसम्भव इति तद्वारणाय स्वसमानाधिकरणत्वं गुणविशेषणम्। तादृशस्पर्शादेः स्वसमानाधिकरणसंयोगादिध्वंससमानकालीनत्वात्तद्दोषतादवस्थ्यवारणाय स्वसजातीयेति॥ न च—शब्दतन्मात्रेऽव्याप्तिः, तत्र शब्दस्य यावद्द्रव्यभाविन एकस्यासम्भवात् द्वितीयादिशब्दानां प्रथमशब्दध्वंससमानकालीनत्वेन तद्भसमानकालीनशब्दवत्त्वाभावादिति—

वाच्यम्। सोऽयं ककार इत्यादिप्रत्यभिज्ञाबलेन सिद्धान्तिभिरपि शब्दस्य यावद्द्रव्यभावित्वाभ्युपगमात् । उक्तं च **न्यायसिद्धाञ्जने**—

"आकाशनिष्ठस्य शब्दस्याकाशेन सहोत्पत्तिविनाशौ, वाय्वादिनिष्ठस्यापि तत्तद्द्रव्यैस्सह ॥" —इति ॥

स्वसमानाधिकरणस्वसजातीयगुणे स्वपूर्वप्रलयपूर्वत्वाभाववत्त्वं विशेषणं देयम् । तेन पूर्वसृष्टौ तादृशतन्मात्रत्वाद्याश्रयप्रकृत्यंशेषु स्पर्शादेस्सत्त्वेन तद्ध्वंससमानकालीनत्वस्यैतत्सृष्टिघटकतन्मात्रनिष्ठस्पर्शादिषु सत्त्वेऽपि न क्षतिः ॥

स्वपूर्वावस्थापूर्वत्वाभाववत्त्वस्वपूर्वत्वोभयसम्बन्धेन भूतत्वावस्थाविशिष्टावस्थावत्त्वं वा तल्लक्षणं, भूतत्वविशिष्टघटत्वावस्थामादाय घटादावतिव्याप्तिवारणाय स्वपूर्वत्वनिवेशः। भूतत्वविशिष्टाहङ्कारत्वादिकमादाय तत्रातिव्याप्तिवारणाय स्वपूर्वावस्थापूर्वत्वाभावनिवेशः ॥ तत्र प्राकृताप्राकृतविभागः पूर्ववत् ॥

**तानि च तन्मात्राणि पञ्च**—शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्रभेदात् ॥

तत्र स्पर्शशून्यत्वे सति तन्मात्रत्वं—**शब्दतन्मात्रलक्षणं**। स्पर्शतन्मात्रादिवारणाय सत्यन्तं, अव्यक्तादिवारणाय विशेष्यम् ॥ रूपशून्यत्वे सति स्पर्शवत्तन्मात्रत्वं—**स्पर्शतन्मात्रलक्षणम्**। रूपतन्मात्रादिवारणाय सत्यन्तं, शब्दतन्मात्रवारणाय स्पर्शवदिति, वायुवारणाय तन्मात्रत्वमिति ॥ रसशून्यत्वे सति रूपवत्तन्मात्रत्वं—**रूपतन्मात्रलक्षणं** । रसतन्मात्रादिवारणाय सत्यन्तं, शब्दतन्मात्रादिवारणाय रूपवदिति, तेजस्यतिव्याप्तिवारणाय तन्मात्रत्वनिवेशः ॥ एवं गन्धशून्यत्वे सति रसवत्तन्मात्रत्वं—**रसतन्मात्रस्य लक्षणं**, व्यावृत्तिः पूर्ववत् । गन्धवत्तन्मात्रत्वं च **गन्धतन्मात्रलक्षणमिति** बोध्यम् ॥

**यद्वा**—तामसाहङ्कारत्वावस्थाध्वंसरूपाकाशत्वावस्थाप्रागभावरूपावस्थावत्त्व—शब्दतन्मात्रलक्षणं, आकाशत्वावस्थाध्वंसरूपवायुत्वावस्थाप्रागभावरूपावस्थावत्त्वं स्पर्शतन्मात्रलक्षणं, वायुत्वध्वंसरूपतेजस्त्वप्रागभावरूपावस्थावत्त्वं रूपतन्मात्रलक्षणं—**इत्यदिरीत्या ज्ञेयम्** । तामासाहङ्कारात् शब्दतन्मात्रस्य तस्मादाकाशस्य, आकाशात् स्पर्शतन्मत्रस्य तस्माद्वायोः, वायोश्च रूपतन्मात्रस्य तस्मात्तेजसः, तेजसो रसतन्मात्रस्य तस्माज्जलस्य, जलाद्गन्धतन्मात्रस्य तस्मात्पृथिव्याश्चोत्पत्तेरुक्तलक्षणानां सङ्गतिः ॥

**यत्तु**—तामसाहङ्कारात्पञ्चतन्मात्राणामुत्पत्तिः, तेभ्यश्चाकाशादिपञ्चभूतोत्पत्तिः । अत एव तन्मात्राणि भूतादौ लीयन्त इति बहुवचनं स्वरसतस्सङ्गच्छते—**इति । तन्न** । तथा सति 'आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी' इति श्रुति विरोधापत्ते. । तन्मात्राणि भूतादाविति श्रुतेः शब्दतन्मात्रमात्रलयप्रतिपादकत्वेन सकलतन्मात्राणां भूतादौ लयप्रतिपादकत्वविरहात् ; अदितिः पाशानितिवद्बहुवचनोपपत्तेः । अन्यथा—'पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते', इत्यादिपूर्ववाक्यविरोधापत्तेः ॥ **न च**—आकाशसहकृतस्पर्शतन्मात्रस्य वायुजनकत्वमितिरीत्या पूर्वपूर्वभूतसहकृतस्य तन्मात्रस्योत्तरोत्तरभूतजनकत्वस्वीकारादाकाशस्य वायुं प्रति निमित्तत्वात्तत्परा आकाशाद्वायुरित्यादिश्रुतिः । अन्यथा 'अष्टौ प्रकृतयष्षोडश विकाराः' इति आथर्वणश्रुतिविरोधापत्तेः । तच्छ्रुतौ प्रकृतिमहदहङ्कारतन्मात्राणां प्रकृतित्वस्यैकादशेन्द्रियपञ्चभूतानां च विकृतित्वस्याभिधानात् ; आकाशादीनां चतुर्णां तन्मात्रद्वारेण तत्त्वान्तरोत्पादकत्वे तेषामपि प्रकृतित्वापत्त्या द्वादशप्रकृतीनां द्वादशविकृतीनां चापत्तेः—**इति वाच्यम्** । तथा सति पृथिव्यप्सु प्रलीयत इत्यादिश्रुतिविरोधापत्तेः ।

आकाद्वायुरित्यादेरुपादानपरत्वस्य 'पृथिव्या ओषधयः ओषधीभ्यो-ऽन्नम्' इत्याद्युत्तरवाक्यानुरोधेनाङ्गीकार्यत्वात् ॥

"भूतादिस्तु विकुर्वाणश्शब्दमात्रं ससर्ज ह ।
ततस्ससर्ज तन्मात्रमाकाशं शब्दलक्षणम् ॥
आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ।
बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ॥
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह ॥"

इत्यादि विष्णुपुराणवचनेष्वप्युपादानताया उक्तत्वाच्च । अष्टौ प्रकृतयष्षोडशविकाराश्शरीरे इत्यादिश्रुतिर्न हि चतुर्विंशतितत्त्वानां प्रकृतिभावेन भेदप्रतिपादनपरा ; किन्तु अव्यक्तमहदहङ्कारपञ्चमहाभूतरूपाष्टद्रव्याणां शरीरारम्भकत्वेन प्रकृतित्वं, शब्दादिपञ्चविषयैकादशेन्द्रियाणां शरीराश्रितत्वेन विकारत्वमित्येवम्परा। स्फुटं चेदं श्रीगीताभाष्ये ॥ अष्टौ प्रकृतय इत्यत्र प्रकृतित्वं च न तावद्यत्किञ्चित्कार्योपादानत्वं, पृथिव्या अपि घटाद्युपादानत्वादिन्द्रियाणामपि वृत्त्युपादानत्वात् प्रकृतित्वापत्तेः। नापि प्रकृतिविभाजकोपाधिरूपेण स्वविजातीयकार्योपादानत्वं तत्, आकाशत्वादीनां भूतविभाजकत्वेन प्रकृतिविभाजकत्वाभावेन तेन रूपेण विजातीयकार्यजनकत्वस्य तन्मात्रेष्वभावेन तेषां प्रकृतित्वानापत्तेः ; किन्तु—भूतविभाजकोपाधिमहदहङ्कारशब्दतन्मात्रत्वान्यतमरूपेण विजातीयकार्यजनकत्वं, तथेति वाच्यम्। तदस्माकमपि तन्मात्रसाधारणमाकाशादिव्यावृत्तं चेति नोक्तश्रुतिविरोधः ॥

तत्र स्पर्शरहितत्वे सति उद्भूतशब्दवान्—**आकाशः**।वाय्वादिवारणाय सत्यन्तं; अव्यक्तादिवारणाय विशेष्य, शब्दतन्मात्रवारणायोद्भूतेति-श्रोत्राप्यायकत्वं वा तल्लक्षणम्। श्रोत्राप्यायकत्वं च श्रोत्रेण सहैकसङ्घातनापन्नत्वम्। न च—श्रोत्रानाप्यायकभागेष्वव्याप्तिः; श्रोत्राप्यायक

स्वसमानाधिकरणभूतविभाजकोपाधिमत्त्वस्य तदर्थत्वात् ॥ न च—स्पर्शवद्द्रव्याद्यप्रतिबन्धरूपावकाशात्मककार्यसिद्ध्यर्थमेवाकाशोऽङ्गीकार्यः, तथा शास्त्रसिद्धत्वात्; तथाचाकाशरूपपरिणामरहितप्रकृतिप्रदेशेऽपि गतिनिरोधप्रसङ्गः, स्पर्शशून्यद्रव्यत्वेनैवावकाशहेतुत्वस्वीकारात्प्रकृत्यादीनामपि तथात्वे चाकाशकल्पनं व्यर्थमिति—वाच्यम् । यत आकाशस्यावकाशरूपकार्यनिर्वाहार्थमेव न स्वीकारः, किन्तु श्रुतिसिद्धत्वात्प्रत्यक्षसिद्धत्वाच्च, आकाशोऽयं, कूपोऽय, रन्ध्रमिदम्, इह पतङ्गः पतति—इत्यादिचाक्षुषप्रत्यक्षस्याकाशेऽपि सत्त्वात् । न च—इह पतङ्ग इति प्रत्यक्षे आलोकस्याधिकरणतया भानं; नाकाशस्येति—वाच्यम्, इहालोक इति प्रत्यक्षे तदसम्भवात्, आलोकावयवस्य तदधिकरणतया भानोपगमेऽपि त्र्यणुकाद्यात्मकालोकविषयकतादृशप्रत्यक्षे तदवयवस्य द्व्यणुकस्याप्रत्यक्षत्वेनाधिकरणतया भानासम्भवात् ॥ न च—सभायां ब्राह्मणा इतिवदिह त्र्यणुकमिति प्रत्यक्षे त्र्यणुकसमुदायस्याधिकरणतया भानसम्भव इति—वाच्यम्; एवमपि—नभसि त्र्यणुकं, व्योम्न्यातप इत्यादिप्रत्यक्षे त्र्यणुकसमुदायस्याधिकरणतया भानासम्भवात्, तस्य नभोव्योमादिशब्दार्थत्वासम्भवात्, आकाशस्याप्रत्यक्षत्वे नीलं नभ इति प्रत्यक्षानुपपत्तेश्च ॥ न च—उपनीतस्य नीलादेरुपनीते आकाशे आरोपः आकाशस्याप्रत्यक्षत्वेऽप्युपपद्यत इति—वाच्यम् । उपनीतं विशेषणतयैव भासत इति नियमेन चाक्षुषे नीलं नभ इति प्रत्यक्षे आकाशस्य विशेष्यतया भानासम्भवात्, स्वायोग्यविशेष्यकज्ञानजनने इन्द्रियाणामसामर्थ्यात् । स्पष्टश्चेदं पक्षतायां ॥

मानसत्वं तु तादृशप्रतीतेर्वक्तुमशक्यं, निमीलितनयनस्यापि तदापत्तेः, नीलं नभश्चक्षुषा साक्षात्करोमीत्यादिप्रतीत्यनुपपत्तेश्च । न च—द्रव्यनिष्ठविषयतासम्बन्धेन चाक्षुषप्रत्यक्षं प्रति समवायेन रूपस्य कारणतया आकाशे च रूपाभावान्न चाक्षुषसम्भव इति—वाच्यम्;

कालस्य षडिन्द्रियवेद्यताया वक्ष्यमाणत्वेन तच्चाक्षुषे व्यभिचारेण उक्त-कारणत्वासम्भवात्। न चैवं–प्रकृतिमहदहङ्काराणां वाय्वीश्वरयोश्च चाक्षुषप्रसङ्ग इति–वाच्यम्; सामानाधिकरण्येन कालाकाशान्यत्व-विशिष्टो य उद्भूतरूपाभावस्तदभावत्वेन द्रव्यचाक्षुषं प्रति हेतुतास्वी-कारात्, कालाकाशयोर्विशेषणाभावेन पृथिव्यादौ च विशेष्याभावेनोक्त-विशिष्टान्यत्वसम्भवात्, प्रकृत्यादौ चोक्तयोर्विशेषणविशेष्ययोर्द्वयोरेव सत्त्वेन विशिष्टाभावविरहात् ॥

**वस्तुतस्तु**–चाक्षुष प्रत्युद्भूतरूपस्य नोद्भतरूपत्वेन का॰णता, किन्तु शक्तिमत्त्वेन, तत्रोद्भूतरूपे कालाकाशत्वयोश्चैकस्या ए॰. शक्तिस्वी-कारात् कालाकाशयोश्चाक्षुषोपपत्तिः; प्रकृत्यादौ तदनापत्तिश्च। अद्रव्येपि शक्तिसद्भावो वक्ष्यते ॥

**यत्तु**–भाष्ये पञ्चीकरणप्रक्रियया रूपवत्त्वादाकाशस्य चाक्षुषत्वमुप-पद्यत इत्युक्तम्। तत्तु–वैभववादमात्रमित्युक्तं **सर्वार्थसिद्धौ**। तथा रूपा-ङ्गीकारे आकाशस्याष्टमांश एव रूपसत्त्वेन तादृशभागस्य चाक्षुषोपपा-दनेऽपि भागान्तरे तदुपपादनासम्भवात्, कालस्य सुतरां तदसम्भवात्॥ यदपि–न चक्षुषा सन्मात्रं गृह्यते, तस्य रूपरूपिरूपैकार्थसमवेतपदार्थ-ग्राहित्वादिति भाष्यम्, तदपि–न चाक्षुषसामान्ये रूपकारणताप्रद-र्शनपरं, किन्तु द्रव्यचाक्षुषस्य रूपप्रकारकत्वनियमपरमिति बोध्यम्॥

**अत्र नैयायिकाः**–आकाशं नित्यं, निरवयवद्रव्यत्वात्, महाकाल-वत्—इत्याद्यनुमानेनाकाशस्य नित्यत्वं सिध्यतीति। तन्न; 'आत्मन आकाशस्सम्भूत.' इति श्रुतिबाधितत्वात्तदनुमानस्य। किञ्च–नित्यत्वं ध्वंसाप्रतियोगित्वं प्रागभावाप्रतियोगित्वं, कालनिष्ठभेदप्रतियोगितानव च्छेदकत्वं वा? सर्वत्र सिद्धसाधनं दुर्वारम्। आकाशत्वरूपावस्थायां ध्वंसप्रतियोगित्वादिसत्त्वेऽपि तदाश्रयद्रव्ये तदभावस्याक्षतत्वात्, द्रव्यस्य कालनिष्ठभेदप्रतियोगितानवच्छेदकत्वाच्च। न च–आकाश-

लयोक्त्या आकाशो नष्ट इत्यादिप्रतीतेर्भवन्मते प्रमात्वात् आकाशत्वविशिष्टेऽपि ध्वंसप्रतियोगित्वादिकं स्वीकार्यमिति—वाच्यम्; तादृशप्रतियोगिताया विशिष्ट एव पर्याप्ततया द्रव्यस्वरूपे तदपर्याप्तेस्तस्य नित्यत्वानपायात्। न च—आकाशत्वं कालनिष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकं, निरवयवद्रव्यवृत्तित्वादित्यत्र तात्पर्यान्न सिद्धसाधनता, आकाशत्वावच्छिन्नावच्छेदकताभेदस्य प्रलये सिद्धान्तिभिरुपगमादिति—वाच्यम्। तथाऽपि निरवयवद्रव्यवृत्तित्वस्यासमवेतद्रव्यवृत्तित्वरूपत्वे घटत्वादौ व्यभिचारात् घटादेरपि सिद्धान्ते असमवेतत्वात्, समवायानङ्गीकारेण हेत्वप्रसिद्धेश्चेति ॥

**आकाशात् स्पर्शतन्मात्रं, ततो वायुः।** रूपशून्यत्वे सत्युद्भूतस्पर्शवत्त्वं **तल्लक्षणं**। तेजोजलादिवारणाय सत्यन्तम्, आकाशवारणाय विशेष्य, स्पर्शतन्मात्रवारणायोद्भूतेति। गन्धशून्यत्वे सत्यनुष्णाशीतस्पर्शवत्त्वं च तल्लक्षणं; पृथिवीवारणाय सत्यन्तं, जलतेजसोर्वारणायानुष्णाशीतेति। तन्मात्रवारणायोद्भूतत्वमपि निवेश्यम् ॥ न च—सुरभिर्वायुरिति प्रतीतेर्गन्धशून्यत्वं वायावसिद्धम्, एवं शीतो वायुरुष्णो वायुरिति प्रतीतेश्चानुष्णाशीतस्पर्शवत्त्वमप्यसिद्धमिति—वाच्यम्; कुसुमादिगन्धस्य स्वाश्रयसंयोगादिसम्बन्धेन वायुसम्बद्धस्य तत्र साक्षात्सम्बन्धेनारोपात् जलातपगतयोरेव शीतोष्णस्पर्शयोस्तत्रारोपात्, चाक्षुषाविषयत्वे सति स्पार्शनप्रत्यक्षविषयद्रव्यत्वं च लक्षणम्। रूपशून्यत्वेऽपि वायोः स्पार्शनं सम्भवत्येव; द्रव्यनिष्ठविषयतासम्बन्धेन स्पार्शनं प्रति स्पर्शस्यैव हेतुत्वात् ॥ बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य कारणत्वमिति तु न युक्तं; मानाभावात्। उक्तं च **श्रीभाष्ये**—"स्पार्शनमपि न सन्मात्रविषयं, स्पर्शतद्विषयत्वात्" इति। कालान्यत्वविशिष्टोद्भूतस्पर्शाभावाभावत्वेन हेतुत्वात् कालत्वस्पर्शयोरेकशक्तिमत्त्वेन हेतुत्वाद्वा कालस्य

स्पार्शनोपपत्तिः । अयं च समीपस्थेन स्पर्शनेन्द्रियग्राह्यः ; दूरस्थितेन तु तृणरजःप्रभृतीनां भ्रमणोर्ध्वगमनादिभिरनुमेयः । अस्य चादृष्टात्मकेश्वरसङ्कल्पात्तिर्यग्गमनं स्वाभाविकं, पार्थिवादिद्रव्येण वाय्वन्तरेण वाऽभिघातादिवशात् भ्रमणोर्ध्वगमनादयः ॥

स चायं वायुः—इन्द्रियाप्यायकप्राणशरीरविषयभेदाच्चतुर्धा । तत्र त्वगिन्द्रियैकसङ्घातततापन्ना वाय्वशा इन्द्रियाप्यायकाः ; शरीरधारणादिहेतुर्वायुविशेषः प्राणः । स चैकोऽपि प्राणापानव्यानोदानसमानात्मकवृत्तिभेदात्पञ्चधा, नागकूर्मकृकरदेवदत्तधनञ्जयभेदैस्सह दशधा चोच्यते ।

"प्राणोऽपानस्समानश्च उदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ॥
चरन्ति दशनाडीषु दश प्राणादिवायवः ॥"

इत्यारभ्य,

"उद्गारादीनथो नागः कूर्मोऽक्ष्यादिनिमीलनम् ।
कृकरश्चक्षुपः कर्ता दत्तो निद्रादिकर्मकृत् ॥"

इत्यादि प्रमाणात् । जङ्गमशरीरवत् स्थावरशरीरेऽप्यसावस्त्येव । भग्नशाखादीनां संरोहणेन क्षतभागानां वृद्ध्या च वृक्षादौ प्राणसद्भावोन्नयनात् । परं तु स्थावरशरीरेष्वेकधैव वर्तते, न पञ्चधा ॥ उक्तं च **भाष्ये**—

"स्थावरेषु हि प्राणसद्भावेऽपि हि तस्य पञ्चधाऽवस्थाय शरीरधारणत्वेनावस्थानं नास्ति ॥" —इति ॥

शरीरोपादानभूताद्वायोरन्य एव प्राणाख्यो वायुः, वायवीयं च शरीरं मारुतादीनां प्रसिद्धं, चण्डानिलतालवृन्तपवनादिर्विषयः ॥

**वायो रूपतन्मात्रं, ततस्तेजः** ; 'वायोरग्निः' इति श्रुतेः, आग्नेशब्दस्य तेजस्सामान्यपरत्वात् ॥ **ननु**—वायुपरिणामत्वरूपवायूपादान-

कत्वं तेजसो न सम्भवति, तृणपर्णकाष्ठादीनामेवपार्थिवानामग्न्यादिरूपेण परिणामदर्शनात्॥ न च—तत्राप्यदृष्टाद्युपनीतैस्तेजोऽवयवैरेवाग्न्यारम्भ इति—वाच्यम्; कल्पनागौरवात्। एवं च वायोरग्निरिति श्रुतिर्निमित्तकारणत्वमात्रेणाप्युपपद्यते—इति चेन्न॥ तृणपर्णादावपि पञ्चीकरणादिना तेजोभागसत्त्वेन तस्यैव सजातीयावयवयोगेनोद्भूताग्न्यादिरूपेण परिणामोपपत्तेर्गौरवविरहात्, श्रुतेरनन्यथासिद्धोपादानप्रकरणपठितायाः निमित्तकारणत्वपरत्वासम्भवात्। अन्यथा काष्ठादिजन्याग्न्यादौ पार्थिवोपादानकत्वं, अबिन्धनाग्नौ च तदसम्भवाज्जलोपादानकत्वमिति कल्पने भवतामेवानेकोपादानकल्पनागौरवात्। काष्ठादावनुद्भूताग्निसत्त्वं च महर्षिभिरेवोक्तं—"काष्ठेऽग्निरिव शेरते।
दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानपि॥" —इति॥

तथा च—समष्टिसृष्टिदशायां वायोरेवोपादानभूताद्वह्नेरुत्पत्तिः, व्यष्टिदशायां तु सूक्ष्मात्तेजस एव स्थूलतेजस उत्पत्तिरिति॥

उष्णस्पर्शवत्त्वं भास्वररूपवत्त्वं च **तेजसो लक्षणं**; रसशून्यत्वे सति रूपवत्त्वं च **तल्लक्षणम्**। **तच्चतुर्धा**—आप्यायकवैश्वानरशरीरविषयभेदात्। वाक्चक्षुषोराप्यायकं तेज इन्द्रियाप्यायकं; 'तेजोमयी वाक्', 'आदित्यश्चक्षुर्भूत्वा अक्षिणि प्राविशत्, रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' इति श्रुतेः। भुक्तान्नादेः परिणामहेतुस्तेजोविशेषो वैश्वानरः। आदित्यादिशरीरं तैजसशरीरं, 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इत्यादिश्रुतिसिद्धम्। चन्द्रिकातपादिर्विषयः॥

**तेजः पुनस्सामान्यतो द्विधा**—प्रभा प्रभावांश्चेति। स्वापृथक्सिद्धत्वस्वाधिकपरिमाणवत्त्वोभयसम्बन्धेन तेजोविशिष्टं तेजः—प्रभा। अपृथक्सिद्धत्वं च—अपृथक्सिद्ध्यात्मकसंयोगप्रतियोगित्वं, गुणगुणिनोस्स्वरूपसम्बन्ध इव प्रभाप्रभावतोस्संयोगेऽप्यपृथक्सिद्धित्वस्य स्वी-

कारात्। 'सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद', 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इत्यादिना जगद्ब्रह्मणोस्संयोगे अपृथक्सिद्धित्वस्य प्रतिपन्नत्वेन तादृशधर्मस्य संयोगत्वविरुद्धत्वाभावात्। यद्वा—स्वापृथक्सिद्धत्व स्वसंयोगाभावनिरूपितकालविशेषावच्छिन्नाधिकरणताशून्यत्वे सति स्वसंयोगवत्त्वम्। स्वापृथक्सिद्धत्वसम्बन्धेन प्रभाविशिष्टदीपकलिकादिवारणाय स्वाधिकपरिमाणवत्त्वनिवेशः। अल्पदीपविशिष्टमहादीपवारणाय स्वापृथक्सिद्धत्वनिवेशः। स्वाधिकपरिमाणवत्त्वं च स्वासयुक्तानेकदेशसंयुक्तत्वम्। तेन परिमाणानङ्गीकारेऽपि न क्षतिः। न च—आतपतप्तसलिलादौ रात्रावप्यौष्ण्योपलम्भादादित्यमुक्ताः किरणास्सलिलान्तः प्रविष्टास्सन्तीत्यभ्युपगन्तव्यं; तथा चादित्यापृथक्सिद्धत्वं किरणेषु नास्तीत्यव्याप्तिरिति—वाच्यम्। रविकिरणोपात्तमुक्तानां तदिनाकिरणानां संक्रमाच्छैत्योपलम्भवत्तत्किरणोपात्तमुक्तानामग्न्यवयवानां संक्रमात्सलिलादौ औष्ण्योपलम्भोपपत्तेः, तत्र किरणानां सद्भावस्याकल्पनात्। उक्तं च **मात्स्ये**—

"वसन्ते ग्रीष्मके रश्मिशतैस्सन्तपति त्रिभिः।
शरद्यपि च वर्षासु चतुर्भिस्सम्प्रवर्षति॥
हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः।" —इति॥

अत्र सन्तपतीत्यस्याग्न्यवयवानुत्सृजतीत्यर्थः। स्पष्टं चैतच्छ्रुतप्रकाशिकायां॥

**यत्तु**—विशीर्णदीपावयवसमुदाय एव प्रभेति। **तन्न**; ऊर्ध्वगमनस्वभावानां दीपावयवानां वाताद्यभिघातादर्शने युगपद्दिक्ष्वग्विशरणादिकल्पनस्य गुरुत्वात्, प्रभाया द्रव्यान्तरत्वे तु प्रत्यक्षाद्यनुरोधेन तथाऽभ्युपगमोपपत्तेः, मण्यादिप्रभाया विशीर्णतदवयवसमुदायत्वासम्भवाच्च। न च—मण्यादौ पार्थिवांशस्य स्थिरत्वेऽपि तदन्तर्गततेजोंशस्य विशरणप्रसरणादिकमुपपन्नमिति—वाच्यम्, कल्पनागौरवात्॥

तदतिरिक्तं तेजः प्रभावत्, तच्च मणिर्द्युमणिप्रदीपादि। सुवर्णं तु पार्थिवमेव, पीतरूपवत्त्वात्, गुरुत्ववत्त्वात्, काठिन्यवत्त्वाच्च, 'काठिन्यवान्यो बिभर्ति' इत्यनेन पृथिव्या एव काठिन्योक्तेः। न च—सुवर्णं तैजसम्, अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात्, यन्नैवं तन्नैवमिति व्यतिरेक्यनुमानेन सुवर्णस्य तैजसत्वसिद्धिरिति—वाच्यम्। व्यतिरेक्यनुमानस्य निरसिष्यमाणत्वात्, द्रुतं द्रुततर द्रुततममिति प्रतीत्या उच्छिद्यमानद्रवत्ववत्त्वेनानुच्छिद्यमानद्रवत्वासिद्धे, पीत द्रुतमिति प्रतीत्या पार्थिवभागेऽपि तादृशद्रवत्वदर्शनेन व्यभिचाराच्चेति। अत्र रक्तभास्वरमेव रूपं, रूपान्तरोपलम्भस्तु पृथिवीजलांशसंसर्गवशात्। एतच्च "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य" इत्यादि श्रुतिसिद्धम्। एवमुष्ण एव स्पर्शः, चन्द्रिकादौ शीतस्पर्शशुक्लरूपयोस्तदन्तर्गतजलांशसम्बन्धित्वात्, मरकतप्रभादावनुष्णाशीतनीलरूपयोश्च पार्थिवत्वादिति ॥

तेजसो रसतन्मात्रं; **तस्माज्जलम्**। शीतस्पर्शवत्त्वं, निर्गन्धत्वे सति रसवत्त्वं, अपाकजशुक्लरूपवत्त्वं, सांसिद्धिकद्रवत्ववत्त्वमित्यादि--**तल्लक्षणम्** ॥ न च—उष्णोदके शीतस्पर्शवत्त्वस्याव्याप्तिरिति—वाच्यम्; तत्रापि शीतस्पर्शसत्त्वात्, तेजस्स्पर्शेनाभिभवेन तदनुपलब्धेः। प्रथमं पृथिव्याः कृष्णाया एवोत्पत्तावपि पाकवशात्तत्र शुक्लरूपोत्पत्तेस्तत्रातिव्याप्तिवारणायापाकजेति ॥ न च—सांसिद्धिकद्रवत्वस्य हिमकरकयोः अव्याप्तिरिति—वाच्यम्; तत्रापि द्रवत्वसत्त्वादुपष्टम्भकपार्थिवभागगतकाठिन्येनाभिभूतत्वादनुपलम्भोपपत्तेः। तच्चाप्यायकशरीरविषयभेदात्त्रिधा। तत्र रसनघ्राणयोराप्यायका अंशा आप्यायकाः। शरीरं वरुणलोके। सरित्समुद्रादिर्विषयः—इति ॥

जलाद्गन्धतन्मात्रं, **तस्मात्पृथिवी**। गन्धवत्त्वं **तल्लक्षणम्**। न च—तन्मात्रेऽतिव्याप्तिः, उद्भूतत्वनिवेशे च पाषाणेऽव्याप्तिरिति—**वाच्यम्**।

गन्धध्वंससमानाधिकरणगन्धवत्त्वस्य विवक्षितत्वात् । रसवत्त्वे सत्य-नुष्णाशीतस्पर्शवत्त्वं, पाकजरूपवत्त्वमित्यादिकमपि तल्लक्षणम् । सा प्रथमं सुरभिमधुरकृष्णानुष्णाशीतस्पर्शा जाता । तत्रानुष्णाशीतस्पर्शो याव-द्द्रव्यभावी ; तेजस्सलिलसम्पर्कादौष्ण्याद्युपलम्भः । कृष्णरूपं स्वा-भाविकमिति च 'यत्कृष्णं तदन्नस्य' इति श्रुतिसिद्धम् । पाकवशाच्च रूपान्तरोत्पत्तिः । सा त्रिधा—आप्यायकशरीरविषयभेदात् । मनो-घ्राणयोराप्यायकाः पार्थिवभागाः आप्यायकाः ; अस्मदादिशरीरं पार्थिवं ; विषयो मृत्पाषाणादिरिति ॥

तमो द्रव्यं, सङ्कोचविकासरूपावस्थावत्त्वात् क्रियावत्त्वाच्च ; पार्थिवं चाबाधितनीलादिप्रत्ययविषयत्वादिति—**वेदान्ताचार्याः** ॥ न च—तेजोऽभाव एव तमः, द्रव्यान्तरकल्पने गौरवादिति—वाच्यम् ; तथा सत्यबाधितनीलादिप्रत्ययानुपपत्तेः, 'तमस्ससर्ज भगवान्' इति तत्त्वान्तरवत्सृष्टिश्रवणानुपपत्तेः, 'नासीत्तमो ज्योतिरभून्न चान्यत्' इति तेजस्तमसोर्द्वयोरपि निषेधानुपपत्तेश्च, तयोर्भावाभावरूप-त्वे एकदा निषेधासम्भवात् ; अन्तर्यामिब्राह्मणे यस्य तमश्श-रीरमिति तमसश्शरीरत्वानुपपत्तेश्च शरीरत्वस्य वक्ष्यमाणरीत्या द्रव्यत्वघटितत्वात् । न च—तमसः पार्थिवत्वे पृथिवीतः पृथगेव सृष्ट्याद्यभिधानमनुपपन्नमिति—वाच्यम् ; पृथक्सृष्टिवचनस्य स्वर्गान्त-रिक्षसृष्ट्यादिवदुपपत्तेः । न च—तमसो द्रव्यत्वे तमस्संयुक्तस्य तमसः चाक्षुषानुपपत्तिः ; द्रव्यनिष्ठलौकिकविषयतासम्बन्धेन चाक्षुषं प्रति संयोगेन तमसः प्रतिबन्धकत्वादिति—वाच्यम् ; तमो भिन्नद्रव्यनिष्ठवि-षयतासम्बन्धेन चाक्षुषं प्रत्येव तत्प्रतिबन्धकतास्वीकारात् ॥

**व्यासाचार्यानुयायिनस्तु**—तम आकाशं, गतिनिरोधकत्वाभावे सति चाक्षुषप्रत्यक्षविषयद्रव्यत्वात्, प्रसिद्धाकाशवत् ; पृथिव्यां व्यभि-चारवारणाय सत्यन्तम्, आत्मनि व्यभिचारवारणाय चाक्षुषेति ।

'तत्तेज ऐक्षत, बहु स्यां प्रजायेयेति, तदपोऽसृजत, ता आप ऐक्षन्त, बह्व्यः स्याम प्रजायेमहि' –इत्यादिच्छान्दोग्यश्रुतौ तेजश्शब्दवाच्ये अप्शब्द-वाच्ये च बहुभवनसङ्कल्पादिकमुपपद्यते; तेज आदिशब्दस्याचेतन-मात्रपरत्वे तादृशेक्षणानुपपत्ते. । ईक्षतिधातोर्गौणत्वं तु–**गौणश्चे-न्नात्मशब्दादि**त्यत्रैव निराकृतम् । न चैवं–'आत्मन आकाशस्सम्भूतः' इति श्रुतौ सम्भूतशब्दस्य गौण्यसम्भवादिति पूर्वपक्षसूत्रोक्तन्यायेन गौणत्वापत्तिः, आकाशस्योत्पत्तिमत्त्वेऽपि तच्छरीरकपरमात्मनस्त-दसम्भवादिति–वाच्यम्; स्वाधिकरणक्षणध्वंसानधिकरणक्षणसम्बन्ध-रूपोत्पत्ते, विशेषण इव विशिष्टेऽप्यक्षतत्वात् । स्वाधिकरणक्षण-ध्वंसानधिकरणक्षणाप्रसिद्ध्या स्वपदेन केवलपरमात्मोपादानासम्भवेऽपि आकाशादिशरीरकत्वविशिष्टपरमात्मन उपादानसम्भवात्, विशिष्ट-निरूपिताधिकरणतावत्क्षणध्वंसानधिकरणत्वस्याकाशोत्पत्तिक्षणे प्र-सिद्धेः । अत एवोक्तं **बौद्धाधिकारे शिरोमणिना**—

"आत्मनामुत्पत्त्यभावेऽपि विशेषणस्य शरीरस्य तथात्वाद्वि-शिष्टस्य तथात्वव्यपदेशः, अपूर्वशरीरादिसम्बन्धरूपं तु न मुख्यो जन्यर्थः ॥" —इति ॥

व्याख्यातं चात्र **गदाधरेण**—"विशेषणोत्पत्तिक्षणस्य विशेष्याधि-करणसमयध्वंसाधिकरणत्वेऽपि विशिष्टाधिकरणसमयध्वंसानधिकरण-त्वरूपाद्यत्वाक्षतेः, तत्सम्बन्धरूपजननस्य विशिष्टेऽपि निर्वाहाच्चैत्रो जात इत्यगौणः प्रयोग उपपन्नः; जात इत्यस्याद्यशरीरसम्बन्धवानि-त्याद्यर्थकत्वे च जात इत्यस्य लाक्षणिकत्वापत्तिः ॥" —इति ॥

तथा च 'आत्मन आकाशस्सम्भूतः' इत्यादौ न गौणताप्रसङ्गः । अत्र पृथिव्यप्तेजसां त्रिवृत्करणं छान्दोग्येऽभिहितं 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति । तच्च–स्वसजातीयधर्मद्वयविशिष्ट-धर्मवत्त्वम् । साजात्यं च–पृथिवीत्वजलत्वतेजस्त्वान्यतमत्वेन । धर्मद्वय-

वैशिष्ट्यं च—स्वाश्रयचतुर्थांशसंयुक्तार्धभागवृत्तित्वसम्बन्धेन। तथा च स्वपदेन पृथिवीत्वोपादाने उक्तान्यतमत्वरूपेण स्वसजातीयधर्मद्वयं जलत्वं तेजस्त्वं च, तदाश्रयजलचतुर्थांशतेजश्चतुर्थांशयोस्संयोगस्य पृथिव्यर्धभागे सत्त्वादुक्तसम्बन्धेन जलत्वतेजस्त्वोभयविशिष्टपृथिवीत्ववत्त्वं पृथिव्यामुपपन्नम् । त्रिवृत्करणपक्षे भूते भूतान्तरचतुर्थांशमेलनस्याभिमतत्वात्। चतुर्थांशसंयोगश्चाण्डोत्पत्त्यभावप्रयोजकीभूताभावप्रतियोगित्वेन विशेषणीयः; तेन न यथाकथञ्चित्संयोगस्य त्रिवृत्करणरूपतापत्तिः, परस्परानुप्रवेशात्मकसंयोगस्यैव अण्डोत्पत्तिप्रयोजकत्वेनोक्तविशेषणेन तादृशसंयोगस्यैव लाभात् ।

"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजास्स्रष्टुमसमागम्य कृत्स्नशः ॥
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
एकसङ्घातलक्ष्यास्तु संप्राप्यैक्यमशेषत ॥
महदाद्यो विशेषान्ता ह्यण्डमुत्पादयन्ति ते ।"

इति भगवत्पराशरवचनाद्विलक्षणसंयोगाभावस्यैवाण्डोत्पत्त्यभावप्रयोजकत्वाभिधानात्। "संहतत्वं समागतत्वं चेत्यवस्थाद्वयमस्ति। तत्र संहतत्वं नाम—पृथक्स्थित्यर्हसंयोगमात्रं, समागतत्वं च—पृथक्स्थित्यनर्हसंयोगविशेषः"—इति व्यासार्यैर्व्याख्यातम् ॥

पञ्चीकरणं सप्तीकरणं च पुराणप्रसिद्धम्। स्वसजातीयधर्मचतुष्टयविशिष्टधर्मवत्त्वं—पञ्चीकरणं ; साजात्यं च—पृथिवीत्वजलत्वतेजस्त्ववायुत्वाकाशत्वान्यतमत्वेन। धर्मचतुष्टयवैशिष्ट्यं च—स्वाश्रयाष्टमांश संयुक्तार्धभागवृत्तित्वसम्बन्धेन । पञ्चीकरणपक्षे भूतानि प्रत्येकं द्विधा विभज्य पृथिव्याद्येकैकार्धेषु जलादीनामष्टमांशचतुष्टयसंयोगस्य स्वीकारात् ।

"एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः ।
चतुर्धा भिन्नमेकैकमर्धमर्धं तथा स्थितम् ॥
व्योम्नोऽर्धभागाश्चत्वारो वायुतेज पयोभुवाम् ।
अर्धानि यानि वायोस्तु व्योमतेज पयोभुवाम् ॥"

इत्यादिपुराणवचनात् ॥

**एतेन**–पृथिव्यादिकं द्वेधा विभज्य तदर्धं पञ्चधा विभज्य पञ्चस्वर्धान्तरेषु योजनं पञ्चीकरणम् ; तथा चोक्तलक्षणे स्वाश्रयाष्टमांशसंयुक्तेत्यपहाय दशमांशसंयुक्तेति वक्तव्यमिति–**निरस्तम्** । उक्तपुराणवचनविरोधात् ॥

सप्तीकरणं तु–स्वसजातीयधर्मषट्कविशिष्टधर्मवत्त्वं; साजात्यं च महत्त्वाहङ्कारत्वपृथिवीत्वादिपञ्चकान्यतमत्वेन । धर्मषट्कवैशिष्ट्यं च स्वाश्रयद्वादशांशसंयुक्तार्धभागवृत्तित्वसम्बन्धेन । सप्तीकरणपक्षे पृथिव्याद्येकैकार्धं षोढा विभज्य षट्स्वर्धान्तरेषु संयोगस्याभिप्रेतत्वात् ॥

**यद्यपि**–पृथिव्याद्यर्धेषु जलादिचतुर्थांशसंयोगरूपत्रिवृत्करणस्य श्रुत्यभिप्रेतत्वे तदष्टमांशद्वादशांशसंयोगप्रतिपादनपराणामुदाहृतपुराणवचनानामप्रामाण्यं प्राप्नोति; पञ्चीकरणपक्षे चतुर्थांशसंयोगासम्भवात्, वस्तुनि विकल्पासम्भवेनैकतराप्रामाण्यावश्यकत्वे 'विरोधे त्वनपेक्षं स्यात्' इति न्यायेन श्रुतिविरुद्धार्थे पुराणादेः प्रामाण्यासम्भवात् । **तथाऽपि**–तासां त्रिवृतं त्रिवृतमित्यादेरेकैकं तेजःप्रभृति भूतं स्वार्धेनेतरार्धयोर्भागद्वयेन च त्रिभागं करवाणीत्यर्थः ॥ तथा च–तादृशश्रुतौ चतुर्थांशसंयोगाप्रतीतेरष्टमांशसंयोगपरताया एवोपबृंहणानुरोधेनाङ्गीकारेण विरोधाभावात्, स्वाश्रयाष्टमांशसंयुक्तार्धभागवृत्तित्वसम्बन्धेन स्वसजातीयधर्मद्वयविशिष्टधर्मवत्त्वमेव त्रिवृत्करणं; न तु चतुर्थांशघटितपूर्वोक्तलक्षणं; उक्तदोषात् । सप्तीकरणपक्षे तु–त्रिवृत्करणं पञ्चीकरणं च द्वादशांशघटितं, न त्वष्टमांशघटितं; तथा सति विरोधापत्तेः ।

इत्थं च सप्तीकरणैकदेशः पञ्चीकरणं, तदेकदेशस्त्रिवृत्करणमिति न परस्परविरोध इति बोध्यम् ॥

एतेन—चतुर्थांशघटितत्रिवृत्करणप्रतिपादकश्रुतिविरुद्धत्वात्पुराणमप्रमाणं, वाचस्पत्युक्तं त्रिवृत्करणमेव युक्तम्, तदुक्त कल्पतरौ—

"सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्।
तथाऽपि श्रुतियुक्तिभ्यां वाचस्पतिमतं शुभम् ॥"

इत्यादिकं—निरस्तम्। उक्तरीत्या श्रुतिविरोधाभावात् ॥—इति ॥

इत्थं—पञ्चीकृतैस्सप्तीकृतैर्वा तत्त्वैरण्डाद्यारम्भो देहाद्युत्पत्तिश्च। न च—देहादेरनेकभूतोपादानकत्वे पृथिवीत्वादिजातीनां देहे सङ्करस्यादिति—वाच्यम्। अवयवातिरिक्तावयविनोऽस्माभिरनङ्गीकाराज्जातिसङ्कराप्रसक्तेः; कार्यकारणयोरनन्यत्वात् ॥ न च—पटतन्त्वादिरूपकार्यकारणयोरनन्यत्वं न सम्भवति, एकत्वानेकत्वस्थूलत्वसूक्ष्मत्वादिरूपविरुद्धधर्माध्यासात्, कारकव्यापारवैयर्थ्यापत्तेश्चेति—वाच्यम्; असमवायिकारणत्वेन भवदभिमतसंयोगविशेषविशिष्टतन्तूनामेव पटत्वेन तादृशसंयोगसम्पादनार्थमेव कारकव्यापारसार्थक्यात्; एकत्वस्थूलत्वादीनां राशिवनसेनादिष्विवोपपत्तेः; संयोगविशेषविशिष्टधान्यादीनामेव राशित्वेऽपि तद्गतापेक्षाबुद्धिविशेषविषयत्वरूपसमुदायस्यैकत्वेन एकत्वव्यवहारात्। अन्यथा पत्रताटङ्कादावपि पत्रात्ताटङ्कारम्भकल्पनाप्रसङ्गात्। तत्रावयवद्वयसंयोगरूपासमवायिकारणविरहेण तत्र द्रव्यारम्भस्य भवद्भिरप्यस्वीकारात्; इतरथा—आकुंचनप्रसरणादावपि द्रव्यान्तरकल्पनाप्रसङ्गात्। किञ्च—अवयवातिरिक्तावयविस्वीकारे अनेकावयवारब्धकनकशृङ्खलादाववयवगतगुरुत्वैरवयविगुरुत्वोत्पत्त्यापातात्तोलने अधिकगुरुत्वोपलम्भप्रसङ्गः। न च—अवयविनि गुरुत्वोत्पत्त्यनन्तरमवयवगुरुत्वनाशान्नाधिक्यमिति—वाच्यम्; अवयवानां गुरुत्वशून्यत्वे शाखादीनां पतनाभावप्रसङ्गात्, समवायेन पतनं प्रति समवायेन

गुरुत्वस्यासमवायिकारणत्वात्, अवयविनि गुरुत्वानुत्पत्तौ च अवयविन. पतनानुपपत्ते । एवं तन्तुसमुदायातिरिक्तस्य पटादिपदार्थत्वे दीर्घैकतन्तुभ्रमणारब्धे पटे पट इत्यादिव्यवहारानुपपत्तिः, असमवायिकारणरूपतन्तुद्वयसंयोगाभावेन तत्र पटानुत्पत्तेः ॥ अपि च–सहस्रतन्तुकपटस्थले द्वितीयतन्तुसंयोगमारभ्य प्रतितन्तुसंयोगं द्वितन्तुकादिपटपङ्क्तिरुत्पद्यते वा, न वा? ॥ आद्ये–अनेकपटोपलम्भप्रसङ्गः। न च त्रितन्तुकपटोत्पत्तिदशायां द्वितन्तुकपटस्य नाशान्नापत्तिरिति वाच्यम्; नाशकाभावादहेतुकविनाशस्यायुक्तत्वात् । ततश्च पटपङ्क्तेरुपलम्भप्रसङ्गः। तदुक्तं **सर्वार्थसिद्धौ**—

"पूर्वसिद्धपटैस्सार्धं तन्तुभिः पटसम्भवे ।
पटपङ्क्तिस्समीक्ष्येत क्रमादाधिक्यशालिनी ॥
प्राक्सिद्धानां पटादीनामुत्तरोत्तरजन्मनि ।
अहेतुको विनाशश्च स्थिरपक्षे न युज्यते ॥"—इति ॥

**द्वितीये**–अन्त्यतन्तुसंयोगात्पूर्वमुत्पद्यमानानां पटप्रतीतीनां भ्रमत्वप्रसङ्गात्। न चेष्टापत्ति ; एकद्वितन्त्वाद्यपगमेऽपि जायमानायाः पटप्रतीतेर्भ्रमत्वप्रसङ्गात्। न च तत्रापीष्टापत्तिः; भवद्भिरपि तत्र खण्डपटोत्पत्तेरभ्युपगमेन भ्रमत्वानङ्गीकारात् ॥

**अथ**–पूर्वतन्त्रे नवमे "अग्निधर्मः प्रतीष्टकं सङ्घातात्पौर्णमासीवत्" इत्यधिकरणे 'हिरण्यशकलैरग्निं प्रोक्षति, मण्डूकेनाग्निं विकर्षति' इति विहितमग्निपदलक्षिताग्न्यधिकरणस्थण्डिलकर्मकं प्रोक्षणं विकर्षणं च अवयवातिरिक्तावयव्यभावात् प्रतीष्टकं कर्तव्यमिति पूर्वपक्षं प्रापय्य अवयवातिरिक्तावयविसद्भावात्सकृदेव कर्तव्यमिति सिद्धान्तितम्; तथा चावयवातिरिक्तावयव्यनङ्गीकारे तद्विरोधः–**इति चेन्न** ॥ व्रीह्यादिष्वतिरिक्तावयव्यभावेऽपि प्रतिव्यक्तिप्रोक्षणवदुपपत्तेः, पूर्वोत्तरपक्षयो

रेकत्वावस्थानारम्भतदारम्भाभ्यां उपपत्तावेकत्वाश्रयातिरिक्तावय-व्यारम्भानारम्भपरत्वे प्रमाणाभावात् ॥

**अथ कालो निरूप्यते** ॥ अतीतादिव्यवहारहेतुः कालः, कालिक-सम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धाव-च्छिन्नकारणताश्रयत्वं—**तल्लक्षणम्**; ईश्वरवारणाय कालिकसम्बन्धाव-च्छिन्नेति; तस्यापृथक्सिद्धिसम्बन्धेन कार्यसामान्यं प्रति तादात्म्येन हेतुत्वेऽपि कालिकेन कार्यसामान्यं प्रत्यहेतुत्वात्, कालिकेन सर्वा-धारत्वं च तल्लक्षणम् ॥

**अथ**—कालसद्भावे प्रमाणाभावः। न च—अतीतादिव्यवहारनिर्वा-हार्थं तस्यावश्यकतेति—वाच्यम्; प्रकृतशब्दप्रागभावावच्छिन्नाकाशा-दिभिरतीतव्यवहारस्य, प्रकृतशब्दावच्छिन्नाकाशादिभिर्वर्तमानव्यवहा-रस्य, प्रकृतशब्दध्वंसावच्छिन्नाकाशादिभिर्भविष्यद्व्यवहारस्य च निर्वाह-सम्भवेनातिरिक्तकालकल्पनानावश्यकत्वात्—**इति चेन्न** ॥ 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुत्या आकाशोत्पत्तेः पूर्वमपि कालसम्ब-न्धात्तत्तदुपाध्यवच्छिन्नाकाशस्य कालरूपत्वासम्भवादतिरिक्तकाल-कल्पनस्यावश्यकत्वात् ॥ न चैवमपि—'अनादिर्भगवान् कालो नान्तोऽ-स्य द्विज विद्यते', 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः' इत्याद्यनुरोधा-द्भगवत एव कालत्वमस्तु; तत्तदुपाध्यवच्छिन्नस्य तस्य प्रलयेऽपि सत्त्वेन सर्वव्यवहारनिर्वाहकत्वसम्भवादिति—वाच्यम्। तथा सति 'विष्णोस्स्वरूपात्परतोदिते द्वे' इत्यारभ्य, 'रूपान्तरं तद्द्विज कालसंज्ञं' इत्यादिविष्णुपुराणविरोधापत्तेः; स्वस्य स्वापेक्षया रूपान्तरत्वा-योगात्, 'ब्रह्मा दक्षादयः कालः' इति कालस्य भगवद्विभूतित्वाभिधा-नविरोधाच्च। 'विष्णुर्मन्वादयः कालः' इत्यत्र विष्णुशब्दस्यावतार-विष्णुपरत्वेन तस्यापि विभूतित्वाविरोधात्, 'अनादिर्भगवान् कालः' इत्यादिसामानाधिकरण्यस्य शरीरशरीरिभावेन निर्वाहात् ॥ न चैवं—

जैनमतनिराकरणपरभाष्ये 'कालस्य पदार्थविशेषणतयैव प्रतीतेस्तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः, न च परिहर्तव्याः' इत्यादिना कालनिराकरणं प्रतीयमानं विरुध्यत इति–वाच्यम्। सर्वप्रतीतिषु विशेषणतया सर्वलोकानुभवसिद्धस्य कालस्य नास्तित्वशङ्काया बौद्धादिभिरपि कर्तुमशक्यतया जैनानां कालास्तित्वसाधनस्य विफलत्वादित्यत्र तद्भाष्यतात्पर्यात्, तन्निराकरणे तात्पर्यविरहात्; एवमेव श्रुतप्रकाशिकामर्वार्थसिद्ध्योस्तद्भाष्याशयवर्णनात्। अत एव वेदार्थसङ्ग्रहे–

"निमेषकाष्ठाकलामुहूर्तादिपरार्धपर्यन्तापरिमितावच्छेदसर्वोत्पत्तिस्थितिविनाशादिसर्वपरिणामनिमित्तभूतकालकृतपरिणामास्पृष्टानन्तमहाविभूति"

इत्यादिना कालाभ्युपगमो भाष्यकृता सङ्गच्छते। अन्यथा भाष्यवेदार्थसङ्ग्रहयोर्विरोधापत्तेः। निमेषकाष्ठाकलामुहूर्ताद्याः परार्धपर्यन्ता अपरिमिता अवच्छेदाः कालविभागाः स्वरूपमसाधारणधर्मो यस्य कालस्य, स तथोक्तः। तादृश एव सन्महदादिसर्वोत्पत्तिस्थितिविनाशादिसर्वपरिणामनिमित्तभूतो यः कालस्तत्कृतपरिणामास्पृष्टानन्तमहाविभूतियुक्तं ब्रह्मेति तदर्थात्॥

न च–नित्यविभूतेः कालकृतपरिणामास्पर्शे कार्यसामान्ये कालस्य कारणत्वानुपपत्तिः, प्राकृतकार्यसामान्यं प्रति कारणत्वमिति स्वीकारे च धर्मभूतज्ञानपरिणामादेः कार्यतावच्छेदकानाक्रान्ततया कालकार्यत्वानुपपत्तिरिति–वाच्यम्। नित्यविभूतिभिन्नकार्यसामान्यं प्रत्येव तस्य हेतुतास्वीकारात् पूर्वोक्तलक्षणेऽपि नित्यविभूतिभिन्नकार्यत्वावच्छिन्नकार्यताया एव निवेशात्। 'कालं स पचते तत्र न कालस्तत्र वै प्रभुः', 'कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः' इत्यादिवचनात्। सर्वाधारत्वलक्षणे च नित्यविभूतिभिन्नत्वं न निवेश्यम्, नित्यविभूतेरपि कालवृत्तित्वाङ्गीकारात्। अन्यथा

नित्यविभूतेः स्वपरिणामं प्रति हेतुत्वानुपपत्तेः, हेतुतायाः पूर्वकालवृत्तित्वघटितत्वात् । एवं नित्यविभूते- कालासम्बन्धित्वे तदवच्छेदेन जायमानकार्यस्यापि कालासम्बन्धित्वापत्त्या 'सदा पश्यन्ति सूरयः' इति श्रुतिविरोधाच्च। नित्यसूरिनिष्ठदर्शनस्यापि कालवृत्तित्वात्॥

अयं च कालो नित्यो विभुरेक एव ; क्षणादिव्यवहारस्तु एकस्याप्युपाधिभेदादुपपद्यते । यद्वा कालस्यैकस्यैव क्षणलवादिरूपेण परिणामाङ्गीकारात् विभिन्नव्यवहारोपपत्तिः । 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि, कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः', 'कालं स पचते तत्र', 'कलामुहूर्तादिमयश्च कालः'—इत्यादिस्मृतेश्च । क्षणादयः परिणामा अपि सर्वगता एव; एकैकक्षणादिसम्बन्धस्य सर्वपदार्थेषु प्रतीतेः ॥

"एकेनैव क्षणेनास्य विश्वस्यापि विशेषणात् ।
कालवत्तत्क्षणानां च व्यापित्वमवसीयते ॥" —इत्युक्तेः ॥

न च—कालिकसम्बन्धे न देशनैरन्तर्यं नियामकं, किं तु कालनैरन्तर्यमेव ; तथा च क्षणादेरणुत्वेऽपि सर्वाधारतासम्भवः—इति वाच्यम् । देशतो व्यवहितयोस्सम्बन्धकल्पनस्यानुभवविरुद्धत्वात्, तत्तत्कालसंयोगातिरिक्तकालिकसम्बन्धे मानाभावाच्च; अद्रव्ये च संयुक्तापृथक्सिद्धेरेव कालिकसम्बन्धत्वेन रूपादेरपि कालवृत्तितानिर्वाहात् । न च—कालतत्परिणामयोर्द्वयोरेव विभुत्वाङ्गीकारे परिणामपरिणामिभावानुपपत्तिः, विभोर्विकारित्वस्य विकारत्वस्य चादर्शनादिति—वाच्यम् । ईश्वरज्ञानतत्परिणामयोर्विभुत्वेऽपि विकारविकारिभावोपलब्धेः । **एतेन**—कालो न विकारी, विभुत्वात्; क्षणादिर्न विकारः, विभुत्वात्; ईश्वरवत्—**इत्यनुमानं निरस्तम्** । ईश्वरज्ञाने व्यभिचारात् ॥ न च—कालस्य क्षणरूपेण परिणाम एव युक्तः, न तु दिवसादिरूपेण परिणामः; तादृशक्षणकूटादेव दिवसादिव्यवहारनिर्वाहादिति—वाच्यम् ;

तथा सति 'अमावास्यायां पितृभ्यो दद्यात्' इत्यादौ लिङः प्रत्यवाय-प्रयोजकीभूताभावप्रतियोगित्वार्थकतया अमावास्यानिष्ठस्य श्राद्धकरणाभावस्य प्रत्यवायप्रयोजकत्वबोधनेन श्राद्धकर्तुरपि प्रत्यवायप्रसङ्गात्, कृतेऽपि श्राद्धे अमावास्याघटकेषु केषुचित्क्षणेषु श्राद्धकरणाभावस्य निरवच्छिन्नविशेषणतासम्बन्धेनापि सत्त्वात् । दिवसस्याखण्डातिरिक्तपरिणामात्मकत्वे च श्राद्धकरणस्थले तत्र निरवच्छिन्नविशेषणतया तदभावविरहान्न प्रत्यवायापत्तिः । एवं पक्षमासादिपरिणामस्वीकारेऽपि युक्तिर्बोध्या ॥

अयं च कालष्षडिन्द्रियवेद्यः; घटस्सन्निति चाक्षुषादिप्रतीतेस्सर्वसिद्धत्वात्, तत्र सत्त्वस्य कालसम्बन्धित्वरूपत्वात् । न च—तादृशप्रत्यक्षे सत्ताजातिरेव विषय इति—वाच्यम्; सामान्यं सदित्यादिप्रत्यक्षानुपपत्तेः । न च—तादृशप्रतीतौ सामानाधिकरण्यसम्बन्धेन सत्ताया भानमिति—वाच्यम्; घटस्सन्, सामान्य सदिति—प्रतीत्योरविलक्षणाकारतया क्वचित्समवायेन सत्ताया विषयत्वं, क्वचित्सामानाधिकरण्येन तस्या विषयत्वमिति कल्पनाया अनुपपन्नत्वात् । कालसम्बन्धस्यैव सत्त्वरूपत्वे चोभयत्रैकाकारतानिर्वाहः ॥

**मीमांसकैस्तु** कालस्य सर्वज्ञानविषयत्वमुक्तम्—

"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते ॥" —इति ॥

तत्र प्रत्यक्षं स्वाधिकरणक्षणावच्छिन्नमेव स्वविषयमवगाहत इत्युत्सर्गः । अत एव धारावाहिज्ञानस्थले तत्तत्क्षणविशिष्टघटादेर्भानात् द्वितीयादिज्ञानानामप्यज्ञातज्ञापकत्वात्प्रामाण्यमिति मीमांसकाः ॥

परत्वापरत्वे च बहुकालसंयुक्तत्वाल्पकालसंयुक्तत्वरूपे, न तु गुणान्तरमिति वक्ष्यते ॥

दिग्द्रव्यं तु नातिरिक्तं, तत्तन्मूर्तात्मकोपाध्यवच्छिन्नाकाशादिभिस्तत्तन्मूर्तैरेव वा प्राच्यादिव्यवहारनिर्वाहात् । चैत्रादिनिष्ठोदय-

गिरिसंयुक्तसंयोगापेक्षया अल्पतरोदयगिरिसंयुक्तसंयोगवन्मूर्तं चैत्रस्य प्राची, चैत्रनिष्ठोदयगिरिसंयुक्तसंयोगापेक्षया अधिकतरोदयगिरिसंयुक्तसंयोगवन्मूर्तं चैत्रस्य प्रतीची ; एवं सुमेरुसंयुक्तसंयोगाल्पत्वभूयस्त्वाभ्यामुदीचीत्वदक्षिणात्वे बोध्ये । न च—'पद्भ्यां भूमिर्दिशश्श्रोत्रात्' इति दिशः पृथक्सृष्टेः, 'दिशःश्रोत्रम्' इति पृथग्लयस्य च श्रुतिसिद्धत्वादाकाशाद्यतिरिक्तं कार्यभूतं दिग्द्रव्यमभ्युपगन्तव्यमिति—वाच्यम् ; तथा सति 'नाभ्या आसीदन्तरिक्षं, शीर्ष्णो द्यौस्समवर्तत' इति पूर्ववाक्ये स्वर्गान्तरिक्षयोरपि पृथक्सृष्टिश्रुत्या तयोरप्यतिरिक्तद्रव्यत्वापत्तेः, पूर्ववाक्यस्याभिमानिदेवतासृष्टिपरत्वे चोत्तरवाक्यस्यापि तत्परताया एवोचितत्वात् ; 'चन्द्रमा मनसो जातः, चक्षोस्सूर्यो अजायत' इति देवतासृष्टेरेव प्रक्रान्तत्वात् । किञ्च 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च', 'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति श्रुतौ वाय्वपेक्षया प्राणस्य पृथक्सृष्टिश्रवणेऽपि वायुविशेषत्वमेव **न वायुक्रिये पृथगुपदेशात्** इत्यधिकरणे निर्णीतम् । तच्च पृथक्सृष्टिमतां दिगादीनामपि प्रदर्शनार्थं मन्तव्यम् । एवं दिशो व्यष्टिदशायां सृष्टेः श्रूयमाणतया तदनुरोधेन सृष्टिकल्पने तत्सृष्टेः पूर्वं तन्नाशानन्तरं च विद्यमानानां प्रकृतिमहदहङ्कारादितत्त्वानामावरणावार्यभावानुपपत्तेः ; अहङ्काराद्यपेक्षया सर्वदिग्व्यापकत्वरूपस्याहङ्कारावरणत्वस्य दिग्घटितत्वात्, तद्दशायां दूरासन्नत्वादिव्यवस्थानुपपत्तेश्च ; दिशः प्रकृतिकार्यत्वे नित्यविभूतौ प्राच्यादिव्यवस्थानुपपत्तेश्च । न च—समष्टिदशायां प्रकृतिप्रदेशात्मकोपाधिभिर्नित्यविभूतौ च तत्प्रदेशरूपोपाधिभिरेव प्राच्यादिव्यवहारनिर्वाहः—इति वाच्यम् ; तथा सति सर्वत्रोपाधिभिरेव प्राच्यादिव्यवहारनिर्वाहाद्दिशो द्रव्यान्तरत्वे मानाभावादिति ॥

**इत्यनन्तार्यकृतौ सिद्धान्तसिद्धाञ्जने**
**जडपरिच्छेदः प्रथमः ॥**

## अथ जीवो निरूप्यते ॥

अणुत्वे सति ज्ञानाश्रयत्वं, स्वव्यधिकरणसङ्कल्पजन्यकृतिमत्त्वं च—तल्लक्षणं। लक्षणद्वयेऽपीश्वरवारणाय सत्यन्तं जन्यान्तं च। जीवकृतिसामान्यस्य स्वव्यधिकरणेश्वरसङ्कल्पजन्यत्वाल्लक्षणसङ्गतिः । न च—'नित्यस्सर्वगत.' इति श्रुत्या जीवस्य विभुत्वबोधनाच्छरीरस्य देशान्तरगमनेऽपि ज्ञानसुखाद्युत्पत्तिदर्शनात्तन्निर्वाहायात्मनोऽपि गमनागमनादिकल्पने गौरवाच्च विभुत्वकल्पनमेवोचितमित्यणुत्वघटितलक्षणासम्भव इति—वाच्यम् ।

"एषोऽणुरात्मा चेतसा वेदितव्यो बुद्धेर्गुणेनात्मगुणेन चैव ह्यारा ग्रमात्रो ह्यवरोऽपि दृष्ट",

"वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेय."—

इत्यादिश्रुतिभिर्जीवस्याणुत्वसिद्धौ सर्वगतत्वश्रुते· 'अग्निर्यथैको भुवनं प्रविष्ट.', 'वायुस्सर्वगतो महान्'—इत्यादिवदेकजातीयानां सर्वत्रानुप्रवेशपरत्वेन जीवस्सर्वगत इत्यस्य द्रव्यत्वसमानाधिकरणभेदप्रातियोगितानिरूपितसंयोगसम्बन्धावच्छिन्नावच्छेदकतानवच्छेदकजीवत्वाश्रय इत्यर्थात्, द्रव्ये तत्तद्व्यक्तित्वावच्छिन्नजीवनिष्ठावच्छेदकताकभेदसत्त्वेऽपि जीवत्वावच्छिन्नसंयोगावच्छिन्नावच्छेदकताकभेदाभावात्॥ न च—एषोऽणुरात्मेति परमात्मन एवेन्द्रियजन्यज्ञानाविषयत्वात्मकदुर्दर्शत्वरूपमणुत्वं प्रतिपाद्यते; न चक्षुषा गृह्यत इत्यादिना तस्याव्यवहितपूर्ववाक्ये प्रकृतत्वात् चेतसावेदितव्य इति विशुद्धमनोग्राह्यत्वलिङ्गाच्चेति—वाच्यम् ; 'यस्मिन् प्राणः पञ्चधा संविवेश' इति यच्छब्दयोगेनैतच्छब्दस्य वक्ष्यमाणपरामर्शित्वात् । न च—तत्रापि परमात्मैव प्रतिपाद्यते, 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः प्राणैश्च सर्वैः' इत्यादाविव

प्राणाधारत्वस्य परमात्मन्यपि सम्भावादिति वाच्यम्; यस्मिन् द्यौरित्यादेरिवास्य वाक्यस्य सर्वाधारताप्रतिपादनपरत्वाभावात् जीवासाधारणप्राणचित्तेन्द्रियाधारत्वमात्रप्रतिपादपरत्वात् जीवपरताया एव युक्तत्वात् । न च वेदितव्यत्वलिङ्गविरोधः; नियन्तृनियाम्यवैलक्षण्यज्ञानस्य अमृतत्वसाधनत्वादविरोधात्, इहापि पूर्वत्र 'बृहच्च तद्दिव्यमचिन्त्यरूपम्' इति परमात्मनो महत्त्वमुक्त्वा एषोऽणुरात्मेति जीवे तद्वैलक्षण्यप्रतिपादनात् ॥

न च—अत्र वाक्ये चेतसाणुरित्यन्तःकरणौपाधिकमणुत्वं प्रतिपाद्यत इति—वाच्यम् । चेतसेत्यस्य वेदितव्य इत्यनेनैव अन्वयस्य स्वरसतः प्रतीतेः । बुद्धेर्गुणेनेत्यत्र च—बुद्धेर्गुणेनाराग्रमात्रः आत्मगुणेन महानिति नार्थः; व्यवहितान्वयप्रसङ्गादध्याहारप्रसङ्गात्, समुच्चयार्थनिपातानन्वयाच्च । किं तु अपरो जीवस्संसारदशायां बुद्धेर्गुणेनात्मगुणेन चाराग्रमात्रः; आरा—चर्मसूची, बुद्धेर्विभुत्वयोग्यत्वेऽपि कर्मणा सङ्कुचितत्वान्मलरुद्धमणिप्रभावदाश्रयतुल्यपरिमाणोपपत्तेः। बुद्ध्या सह पूर्वमणुत्वस्य कीर्तनात्तद्वत्कादाचित्कताशङ्काव्यावृत्त्यर्थं पुनस्स्वरूपमाह--वालाग्रेत्यादि। पुनःकीर्तनात्स्वाभाविकतासिद्धेः आत्मा न विभुः, क्रियावत्त्वात्, घटादिवत्—इत्यनुमानेन विभुत्वस्य बाधाच्च । न च क्रियावत्त्वमसिद्धम्; 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' इति श्रुत्या विभागानुकूलव्यापाररूपनिष्क्रमणस्य, 'ये वै के चास्माल्लोकात्प्रयन्ति, चन्द्रमसमेव ते सर्वे गच्छन्ति' इति श्रुत्या संयोगानुकूलव्यापाररूपगमनस्य, 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इति श्रुत्या स्वसजातीयसंयोगध्वंससमानाधिकरणसंयोगानुकूलव्यापाररूपपुनरागमनस्य च जीवे सिद्धत्वात् । स्वपदं धात्वर्थतावच्छेदकसंयोगत्वावच्छिन्नपरं; साजात्यं च स्वप्रतियोगिप्रतियोगिकसंयोगत्वेन ॥

**यद्यपि**—निष्क्रामति गच्छतीत्यादौ शरीरनिष्ठं यन्निष्क्रमणगमनादिकं तदनुकूलकृतिमत्त्वमेव जीवे प्रतीयते, न तु क्रियावत्त्वं; आख्यातस्य यत्नार्थकत्वात्। तथाऽपि शरीराविरहदशायामेवोक्तश्रुतिषूत्क्रान्त्यादीनां श्रूयमाणत्वेन रथो गच्छतीत्यादाविव आख्यातस्य आश्रयत्वार्थकताया एव वक्तव्यत्वादुक्तश्रुतिभिरात्मनः क्रियावत्त्वं सिध्यति ॥ न च—निष्क्रामतीत्यस्य प्राणविभागाश्रय इत्यर्थाङ्गीकाराद्विभुत्वपक्षेऽपि नानुपपत्तिरिति—वाच्यम्। **तथाऽपि**—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादौ जीवोत्क्रमणजन्योत्क्रमणाश्रयत्वस्य प्राणेषु प्रतीत्या जीवस्य क्रियावत्त्वावश्यकत्वात्; यज्ञमनुप्रावर्षीदित्यादाविव अनुशब्दस्य जन्यत्वार्थकत्वात्, द्वितीयायाश्च निरूपितत्वार्थकत्वात्, उत्क्रमणविशिष्टजीवजन्यत्वस्य जीवोत्क्रमणजन्यत्वे पर्यवसानात्, '**अनुर्लक्षणे**' इत्यनेन जन्यत्वरूपलक्षणार्थकानुशब्दयोगे द्वितीयाविधानात्, गत्यागतिश्रुतेरनिर्वाहाच्च। एतदभिप्रेत्यैव सूत्रितम् '**उत्क्रान्तिगत्यागतीनां**', '**स्वात्मना चोत्तरयोः**'—इति। किञ्चात्मनो विभुत्वे अन्यदीयमनसा अन्यात्मनः प्रत्यक्षापत्तिः; आत्ममनस्संयोगे परात्मसंयोगव्यावृत्तं वैजात्यं कल्पयित्वा तेन रूपेणात्ममानसं प्रति हेतुतास्वीकारे च गौरवात् ॥

न च—जीवस्याणुत्वे प्रत्यक्षानुपपत्तिः, प्रत्यक्षसामान्ये महत्त्वस्य कारणत्वात्; अन्यथा परमाणोरपि प्रत्यक्षत्वापत्तिरिति—वाच्यम्। जालसूर्यमरीचिकास्थस्य त्रसरेणुशब्दवाच्यस्यैव परमाणुत्वेन तदतिरिक्तपरमाणोरस्वीकारात्, तस्य च प्रत्यक्षाङ्गीकारेण प्रत्यक्षे महत्त्वस्य हेतुत्वानभ्युपगमात् ॥

**अथ**—जीवस्याणुत्वे एकस्य जीवस्यानेकशरीरावच्छेदेन सुखदुःखादिप्रतिसन्धानानुपपत्तिः ; न चेष्टापत्तिः, सौभरिप्रभृतीनामेकदा

अनेकशरीरावच्छेदेन सुखदुःखादिसाक्षात्कारस्य पुराणादिसिद्धत्वात्। न च—जीवस्य तत्र तत्र गमनवशादनेकशरीरावच्छेदेनापि सुखाद्युपलम्भोपपत्तिः, वेगातिशयाच्च क्रमेण जायमानानामपि सुखदुःखाद्यनुभवानां यौगपद्यभ्रमः शतपत्रच्छेदनयौगपद्यभ्रमवदिति—वाच्यम्। योगिनां भ्रमासम्भवात्, प्रयत्नवदात्मसंयोगस्यैव शरीरपतनप्रतिबन्धकत्वेनानेकदेशविद्यमानानामनेकशरीराणां युगपद्धारणानुपपत्तेश्च, एकशरीरे तादृशात्मसंयोगदशायामन्यशरीरे संयोगनाशात्—इति चेन्न ॥ प्रयत्नवदात्मसंयोगत्वेन पतनप्रातिबन्धकत्वे गौरवात्संयोगेन प्रयत्नत्वावस्थापन्नधर्मभूतज्ञानस्यैव शरीरपतने प्रतिबन्धकत्वात्, आत्मन एकशरीरस्थत्वेऽपि धर्मभूतज्ञानस्य मणिप्रभान्यायेन अनेकशरीरेषु प्रसरणोपपत्तेः, निरात्मकेषु शरीरेषु धर्मभूतज्ञानव्याप्त्यैव सुखदुःखाद्यनुभवोपपत्तेः, जीवस्य सुखाद्यनुभवार्थं तत्र तत्र गमनाकल्पनात्, 'गुणाद्वाऽऽलोकवत्', 'प्रदीपवदावेशस्तथा हि दर्शयति' इति सूत्राभ्यां तथा प्रतिपादनात् ॥ न च—सुषुप्त्यवस्थायां शरीरधारणानुपपत्तिः, निरात्मकशरीरस्य धर्मभूतज्ञानसंयोगेनैव धारणस्य वक्तव्यत्वात्तद्दशायां धर्मभूतज्ञानप्रसरणाभावादिति—वाच्यम्; तद्दशायामपि निरात्मकशरीरेषु धर्मभूतज्ञानसंयोगाभ्युपगमात्; विषयतारूपविजातीयसंयोगस्यैव तदानीमस्वीकारात् ॥ न च—'अस्य सोम्य महतो वृक्षस्य यदेकां शाखां जीवो जहाति, अथ सा शुष्यति' इति श्रुत्या जीवस्य सङ्कोचविकासप्रतीत्या अणुत्वानुपपत्तिरिति—वाच्यम्; तादृशश्रुत्या धर्मभूतज्ञानसङ्कोचविकासयोरेव शरीरशोषणाशोषणप्रयोजकत्वावगमात्, शाखादौ भोगावच्छेदकताप्रयोजकादृष्टनाशाधीनधर्मभूतज्ञानविभागानुकूलव्यापारस्यैव जहात्यर्थत्वात् ॥

**उक्तं चाधिकरणसारावल्याम्—**

"मैवं शाखादिभोगायननियतिकरोपाधिनाशात्प्रहाणं
क्ष्वेलादिन्याय्यतोऽसावभिमतिविरहात्स्यादधीतो जहातिः॥"—इति ॥

न चैवं–निरात्मकशरीरेषु स्वापार्थं प्रवृत्त्यनुपपत्तिः, सौषुप्तिकात्मस्वरूपात्मकसुखानुभवार्थमेव प्रवृत्तेर्वक्तव्यत्वात्तत्रात्मस्वरूपाभावात्तत्स्वरूपात्मकसुखानुभवासम्भवादिति–वाच्यम् ; जाग्रदवस्थाकालीनशरीरायासजनितदुःखोपशान्त्यर्थमेव तत्र प्रवृत्त्युपपत्तेः—

"स्वापे सुखत्वाभिज्ञानात्तद्विच्छिदे च रोषतः ।
तदर्थमन्यत्यागाच्च श्रुतिस्मृतिशतैरपि ॥"

इति विष्णुचित्तवचनस्य स्वापार्थप्रवृत्तेस्सुखानुभवार्थत्वपरस्य च सात्मकशरीरविषयत्वेन तद्विरोधाभावात् ॥ न च–बीजगताङ्कुरत्वावस्थायाश्चैत्रभोगजानिकायास्तददृष्टजन्यत्वादङ्कुरत्वावस्थां प्रत्यात्मगतादृष्टस्य स्वाश्रयसंयोगेन कारणत्वं वाच्यम्, आत्मनोऽणुत्वे च तन्न सम्भवतीति–वाच्यम् । कार्यसामान्ये अदृष्टस्य स्वाश्रयसंयोगेन हेतुत्वे शब्दादावदृष्टस्य कारणत्वानुपपत्ते, विभोरात्मनः विभावाकाशे संयोगासम्भवात् नैयायिकैर्विभुद्वयसंयोगानुपगमात्; स्वाश्रयसंयुक्तसंयोगेन अदृष्टस्य हेतुत्वे चाणुत्वपक्षेऽप्यनुपपत्तिविरहात्स्वाश्रयजीवसंयुक्तेश्वरसंयोगस्य बीजेऽपि सत्त्वात् । अदृष्टस्य भगवत्सङ्कल्परूपताया वक्ष्यमाणत्वेन भगवदात्मनश्च विभुत्वेन जीवस्याणुत्वेऽपि स्वाश्रयसंयोगेनैवादृष्टस्य हेतुत्वसम्भवाच्च, विभुद्वयसंयोगाङ्गीकारेण कालगतपरिणामेऽपि तत्सम्बन्धेन हेतुताया अबाधात् ॥

स चायमात्मा ज्ञानाश्रयो ज्ञानस्वरूपश्च । 'विज्ञातारमरे केन विजानीयात्', 'जानात्येवायं पुरुषः' इत्यादिश्रुत्या ज्ञानाश्रयत्वस्य 'विज्ञानं यज्ञं तनुते', 'यो विज्ञाने तिष्ठन्' इत्यादिश्रुत्या ज्ञानस्वरूपत्वस्य च प्रतिपन्नत्वात् ॥ यद्यपि–'विज्ञानं यज्ञं तनुते' इत्यादौ विज्ञानपदं तद्गुणसारत्वादितिसूत्रे ज्ञानाश्रयपरं व्याख्यातम् । तथाऽपि 'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष.' इति–श्रुतौ द्रष्टा श्रोतेति विशेषतो बोद्धेति सामान्यतश्च ज्ञानाश्रयत्वस्यो-

क्तत्वेन विज्ञानात्मेत्यस्य ज्ञानाश्रयत्वपरत्वे पौनरुक्त्यापत्त्या ज्ञानस्वरूपत्वपरत्वावश्यकतया ज्ञानस्वरूपत्वसिद्धिः ॥

अथ—आत्मनो ज्ञानत्वं न सम्भवति, तस्य सविषयकत्वव्याप्यत्वात्, आत्मनश्च सविषयकत्वासम्भवात्। न तावदात्मनस्स्वभिन्नविषयकत्वं, अनङ्गीकारात्; अङ्गीकारे च धर्मभूतज्ञानवैयर्थ्यापत्तेः। नापि स्वमात्रविषयकत्वं, भाष्ये निष्प्रकारकज्ञाननिराकरणेन तद्विरोधात्॥ न च—आत्मस्वरूपज्ञानस्याहमित्याकारकस्य प्रत्यक्त्वैकत्वप्रकारकत्वाङ्गीकारान्न निष्प्रकारकत्वमिति—वाच्यम्; प्रत्यक्त्वस्यात्मविशेषणत्वेनात्मस्वरूपत्वासम्भवेन आत्मस्वरूपज्ञानस्य तत्प्रकारकत्वासम्भवात्, प्रत्यक्त्वात्मनोरभेदे आधाराधेयभावासम्भवात्। अन्यथा 'भेदव्यपदेशाच्चान्यः' 'उभयेऽपि हि भेदेनैनमधीयते' इत्यादौ च 'आदित्ये तिष्ठन् य आत्मनि तिष्ठन्' इत्यादेराधाराधेयभावप्रतिपादकस्य भेदप्रतिपादकत्वेनोपन्यासासङ्गस्यापत्तेः। एकत्वस्य सङ्ख्यारूपतया आत्मस्वरूपत्वासम्भवाच्च—इति॥ मैवम्। प्रत्यक्त्वैकत्वयोरात्मस्वरूपातिरिक्तत्वेऽपि तन्मात्रप्रकारकत्वस्य स्वरूपात्मकानुभवे अभ्युपगमेन विरोधाभावात्। अनतिरिक्ततापक्षेऽपि न दोषः, अभेदेऽप्याधाराधेयभावोपगमात्॥ न चोक्तसूत्रविरोधः 'य आदित्यमन्तरो यमयति', 'य आत्मानमन्तरो यमयति' इति नियाम्यनियामकभावोक्त्या तत्सहिताधाराधेयभावस्य भेदव्याप्यत्वेऽपि शुद्धाधाराधेयभावस्य अभेदेऽपि सम्भवात्। एवमनुकूलत्वस्यापि तत्र प्रकारतया भानमनुमतम्; अहमर्थः प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो भातीति श्रुतप्रकाशिकायामभिधानात्। अत एव सुखमहमस्वाप्समिति प्रत्यभिज्ञोपपत्तिः; अन्यथा सुषुप्तिकाले आत्मगतानुकूलत्वस्य अननुभूतत्वे तत्प्रतिसन्धानासम्भवात्, तद्दशायां धर्मभूतज्ञानस्यात्यन्तसङ्कुचितत्वेन तेनानुकूलत्वस्य दुर्ग्रहत्वात्॥ न च—

स्तोकं पचतीत्यादौ पाकस्य स्तोकत्वमिव सुखमहमस्वाप्समिति प्रतीतौ स्वापस्यैव सुखरूपत्वं भासते, न त्वात्मनः; तथा च स्वगतानुकूलत्वस्य आत्मग्राह्यत्वेऽपि स्वापगतानुकूलत्वस्य तेन ग्रहणासम्भवात्प्रतिसन्धानानुपपत्ति तदवस्थैवेति—वाच्यम् । ज्ञानसामान्याभावरूपस्यात्मगतस्वापस्याधिकरणस्वरूपत्वेन तद्गतानुकूल्यस्यात्मगतानुकूल्यादनतिरिक्तत्वात् ॥

**ननु**—सुखमहमस्वाप्समिति ज्ञानस्य प्रत्यभिज्ञानरूपत्वं न सम्भवति; पूर्वाननुभूतयोरतीतकालस्वापयोरपि तत्र भानात्, प्रत्यभिज्ञायामसन्निकृष्टार्थस्य पूर्वानुभूतस्यैव भाननियमात् ॥ अथ—स्वापकालांशेऽनुमितिरूपमेकं ज्ञानं, सुखविशिष्टात्मांशे च प्रत्यभिज्ञारूपमपर ज्ञानमिति ज्ञानद्वयात्मकमेव सुखमहमस्वाप्समिति ज्ञानम्। जागराद्यः क्षण: कालपूर्वक:, कालत्वात्, द्वितीयादिक्षणवत्—इत्यनुमानेन पूर्वकालमनुमाय; तत्कालावच्छिन्नोऽहं ज्ञानाभाववान्, ज्ञानसामग्रीविरहवत्त्वात्, तुल्ययोगक्षेमे आत्मादौ स्मर्यमाणेऽपि तद्वृत्तया नियमेन अस्मर्यमाणत्वाद्वेति प्रयोगासम्भवात्। उक्तं च **न्यायसिद्धाञ्जने**—

"प्रत्यक्स्वयंप्रभसुखे नित्ये पुंसि व्यवस्थिते ।
अस्वाप्सं सुखमित्यादौ कालाद्यंशेऽनुमास्थितिः ॥"

—इति चेन्न॥ ज्ञानद्वयकल्पनापेक्षया आत्मसुखांशयोरप्यनुमितिरूपत्वकल्पने लाघवात् ॥ —**इति चेत्** ॥

**अत्र व्यासाचार्याः**—सुखमस्वाप्समिति ज्ञानस्य प्रत्यभिज्ञारूपत्वं स्वरसतः प्रतीयते, स्वापकालांशे च प्रत्यभिज्ञारूपत्वासम्भवेऽपि सुखविशिष्टात्मांशे तत्स्वरूपतासम्भवात्प्रतीतिस्वारस्यानुरोधेन ज्ञानद्वयरूपताकल्पनं युक्तम् । यथा—प्रातश्चत्वरे गजो नासीदिति ज्ञानं ज्ञानद्वयात्मकं; तत्र हि प्रातश्चत्वरमात्रमनुभूतं, न गजाभावः; प्रतियोगिभूतगजास्मरणात् । पश्चात्तु गजः किं स्थित इति पृष्टे योग्यार्था-

स्मरणलिङ्गेन गजाभावोऽनुमीयते। पूर्वोक्तरीत्या कालोऽपि तद्वत्॥
—इत्याहुः॥

न च—उक्तज्ञानस्यात्मांशेऽपि प्रत्यभिज्ञारूपत्वं न सम्भवति, संस्कारजन्यप्रत्यक्षस्यैव प्रत्यभिज्ञारूपत्वादात्मस्वरूपात्मकानुभवस्य नित्यत्वेन तस्य संस्कारजनकत्वाकल्पनात् चिरातीतस्य अनुभवस्य कालान्तरभाविस्मरणजनकतानिर्वाहार्थमेव द्वारतया संस्कारस्यानित्यानुभवस्थले कल्पनीयत्वान्नित्यानुभवस्थले च तत्कल्पनस्य विफलत्वादिति—वाच्यम्; स्वजन्यसंस्कारवत्तासम्बन्धेनानुभवस्य नित्यानित्यसाधारण्येनैकहेतुतानिर्वाहाय नित्यानुभवस्थलेऽपि संस्कारकल्पनस्यावश्यकत्वात्; अन्यथा नित्यानुभवस्य साक्षादनित्यानुभवस्य च परम्परया हेतुत्वमिति कार्यकारणभावद्वयापत्तेः॥

अयं चात्मा कर्ता; भोक्तृत्वात्, चेतनोऽहं करोमीति प्रतीत्या आत्मनि कृत्याश्रयत्वरूपकर्तृत्वस्य प्रत्यक्षसिद्धत्वाच्च। न च—जपाकुसुमस्थं लौहित्यं स्फटिक इवान्तःकरणगतं कर्तृत्वमात्मन्यध्यस्यते, न तु तात्त्विकं; निर्विकारत्वश्रुतिविरोधात्, सुषुप्तौ बुद्ध्यभावे कर्तृत्वादर्शनाच्चेति—वाच्यम्; तथा सति रक्तं कुसुममितिवत्कदाचित् मनः कर्त्रिति प्रमा, लोहितस्स्फटिक इतिवच्चैतन्यं कर्त्रिति भ्रमश्च स्यात्; सुषुप्तावन्तःकरणाभावेऽप्यात्मनि श्वासादिकर्तृत्वदर्शनात् सुषुप्तौ भूर्भुवरित्येव श्वसितीति श्रुतेश्च, आत्मनि कर्तृत्वस्याप्यौपाधिकत्वासम्भवात्। किञ्च—आत्मनोऽकर्तृत्वे बुद्धिरेव श्रवणादिकर्त्रीति तस्या एव तत्फलं मोक्षोऽपि स्यात्; शास्त्रफलं प्रयोक्तरीतिन्यायात्, अन्यथाऽतिप्रसङ्गात्। न च—जातेष्टिपितृयज्ञयोर्व्यभिचारान्न कर्तुरेव फलभाक्त्वनियम् इति—वाच्यम्, तत्रापि पूतपुत्रकत्वस्वर्गभागिपितृकत्वयोः कर्तृगतयोरेव फलत्वात्। एवं तन्मनोऽकुरुतेति श्रुतौ मनसः कृतिकर्मत्वस्य 'शृण्वन्तश्श्रोत्रेण विद्वांसो मनसा' इत्यादिश्रुतौ 'शरीरवाङ्मनोभिर्य-

त्कर्म प्रारभते नरः।' इति स्मृतौ च करणत्वस्य प्रतिपन्नत्वेन कर्तृत्वासम्भवात्; कर्तृत्वकर्मत्वयोरेकत्रासम्भवस्य 'कर्तृकर्मव्यपदेशाच्च' इति सूत्रसिद्धत्वात्। 'मन उदक्रामन् मिलित इवाश्नन्पिबन्नास्ते वा' इत्यादिश्रुतौ मनस उत्क्रमणेऽप्यात्मनः कर्तृत्वस्य, तथा—

"परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, स तत्र पर्येति
जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ॥"

इत्यादिस्वरूपाविर्भावरूपमुक्तावपि कर्तृत्वस्य प्रतिपन्नत्वेन नास्यौपाधिकतासम्भवः। तच्च कर्तृत्वं परमपुरुषहेतुकमिति—**कर्ता शास्त्रार्थवत्त्वात्, परात्तु तच्छ्रुतेः**—इत्यधिकरणयोः प्रपञ्चितम् ॥

न च—जीवकृतिसामान्यस्येश्वरकृतिजन्यत्वे कलञ्जभक्षणादिकर्तुरपि पापाद्यनुपपत्तिः, आश्रयतासम्बन्धेन पापं प्रति स्वानुकूलकृतिमत्त्वसम्बन्धेन कलञ्जभक्षणादेर्हेतुत्वे बलात्कलञ्जभक्षणं कारिते पुरुषे पापापत्तिवारणाय स्वानुकूलकृतावितरकृत्यजन्यत्वनिवेशस्यावश्यकत्वादितरकृत्यजन्यस्वानुकूलकृतिमत्त्वसम्बन्धेन कलञ्जभक्षणादेस्तादृशकर्तर्यभावादिति—वाच्यम्; जीवकृतिसामान्यस्येश्वरसङ्कल्पजन्यत्वेन तत्कृतिजन्यत्वानङ्गीकारात्, तदङ्गीकारेऽपीतरकृतिनिष्ठासाधारणकारणताकान्यत्वस्यैव निवेशादीश्वरकृतेश्च साधारणकारणत्वेनादोषात् ॥ न च—

'एष ह्येव साधु कर्म कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषति। एष एवासाधुकर्म कारयति, तं यमधो निनीषति ॥'

इति श्रुत्या,

"अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥"

इति स्मृत्या च जीवनिष्ठसाधुकर्मानुकूलकृतिं प्रति उन्निनीषाजन्यभगवद्यत्नस्य, असाधुकर्मानुकूलकृतिं प्रति चाधोनिनीषाजन्यभगवद्यत्नस्य

हेतुताबोधनात्, भगवत्कृतिनिष्ठासाधारणकारणताकत्वमेव जीवकृताऽवस्तीति–वाच्यम्; साधुकर्मकारयितृत्वश्रुतेरतिमात्रभगवदानुकूल्यप्रसक्तपुरुषविशेषविषयत्वेनासाधुकर्मकारयितृत्वश्रुतेश्चातिमात्रप्रातिकूल्यप्रसक्तपुरुषविशेषविषयत्वेन सर्वविषयत्वाभावात्तदतिरिक्तपुरुषकृतौ भगवत्सङ्कल्पादेस्साधारणकारणतयैव निर्वाहे असाधारणकारणत्वाकल्पनात्। न चैवमप्यतिमात्रप्रातिकूल्यप्रसक्तपुरुषे पापोत्पत्त्यनुपपत्तिरिति वाच्यम्, ईश्वरभिन्नेतरकृत्यजन्यत्वस्यैव स्वानुकूलकृतौ निवेशेन तादृशपुरुषेऽपि निषिद्धानुष्ठानस्य पापजनकत्वोपपत्तेः। न च–सिद्धान्ते पुण्यपापयोर्भगवदनुग्रहनिग्रहरूपतया निषिद्धानुष्ठातरि भगवन्निग्रहानुपपत्तिस्तदवस्थैव; विषयतासम्बन्धेन तत्पुरुषीयनिग्रहं प्रति तत्पुरुषानभिमतकरणस्य हेतुत्वे अयमस्मदनभिमतं कुर्यादितीच्छादशायां तस्य निग्रहजनकत्वादर्शनेन, तत्पुरुषीयेच्छाविरहविशिष्टतत्पुरुषानभिमतकरणस्य तत्पुरुषीयनिग्रहजनकत्वस्य वाच्यत्वात्, कलञ्जभक्षणादेर्भगवदनभिमतत्वेऽपि तदनुकूलकृतेर्भगवदिच्छाविरहविशिष्टत्वाभावाद्भगवतस्सङ्कल्पात्मकतादृशेच्छाविरहे तादृशकृतेरेवोत्पत्त्यनुपपत्तेरिति–वाच्यम्; अयं यत्किञ्चित्कार्यं कुर्यादित्यादीच्छासत्त्वे राजाद्यनभिमतकरणस्य राजनिग्रहजनकत्वदर्शनेन तत्तत्कार्यं कुर्यादित्यादिरूपविशेषाकारेच्छाविरहस्यैव निग्रहजनकतावच्छेदकगर्भे निवेश्यत्वात्। प्रकृते चायं कलञ्जं भक्षयेदिति विशेषाकाराया भगवदिच्छाया अभावादयं स्वेष्टं कुर्यादिति सामान्यसङ्कल्पेनैव तादृशकृत्युपपत्तेः, तदर्थं विशेषसङ्कल्पानावश्यकत्वादिति दिक्॥

**जीवो द्विविधः—संसार्यसंसारिभेदात्।** पुण्यपापान्यतरवत्त्वं **संसारिणो लक्षणम्॥**

**संसार्यपि द्विविधः**–नित्यानित्यसंसारिभेदात्। पुण्यपापान्यतरत्वावच्छिन्नाभाववदन्यत्वं–**नित्यसंसारिलक्षणम्।** स्वपूर्वकालीनत्व-

स्वसामानाधिकरण्योभयसम्बन्धेन ताद्दशान्यतरत्वावच्छिन्नाभाव-विशिष्टताद्दशान्यतरवत्त्व—**अनित्यसंसारिलक्षणम्** । नित्यसंसारि-सद्भावे प्रमाणं तु 'अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ।' इत्यादिरूपा लीलाविभूतिनित्यतोक्तिः । 'क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' 'न क्षामामि कदाचन'—इत्यादिकं च ॥

परे तु—क्षिपाम्यजस्रमित्यादेर्विलम्बातिरेकपरत्वान्नित्यसंसारिसद्भावे प्रमाणाभाव एव । विमतो जीवो मोक्षसाधनज्ञानवान्, जीवत्वात्, सम्प्रतिपन्नजीववत्—इत्यनुमानेन जीवत्वावच्छेदेन मुक्तियोग्यतासिद्धौ नित्यसंसार्यसम्भवात् । अन्यथा सर्वेषां स्वस्मिन् नित्यसंसारित्वसन्देह-सम्भवेन मोक्षसाधनानुष्ठाने कस्यापि प्रवृत्तिर्नस्यादिति श्रवणादि-विधिवैयर्थ्यापत्ति ; संसारिणामनन्तत्वाच्च सर्वेषां मुक्तियोग्यत्वेऽपि लीलाविभूतिनित्यतोपपत्तिः ॥ न च—संसारिणामनन्तत्वे 'पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि' इति संसार्यसंसारिजीवानां एकपादत्वत्रिपादत्वतारतम्यकथनं नोपपद्यत इति—वाच्यम् ; मुहूर्तयामाहोरात्रकल्पादीनामानन्त्यस्य समानत्वेऽपि—यथा कल्पा-पेक्षयाऽहोरात्रादीनामाधिक्यं तदपेक्षया च मुहूर्ताधिक्यं, यथा वा सतां द्रव्याणां च आनन्त्येऽपि द्रव्यानन्त्यापेक्षाया सदानन्त्याधिक्यं तद्वदुपपत्तेः ॥ —इत्याहुः ॥

**असंसारी द्विविधः**—नित्यमुक्तभेदात् । पुण्यपापान्यतर-वद्भिन्नत्वे सत्यणुत्वं **नित्यानां लक्षणम्** । ईश्वरवारणायाणुत्वनिवेशः, ते चानन्तगरुडविष्वक्सेनादयः । 'सदा पश्यन्ति सूरयः' इत्या-दिभिस्सदापश्यदनेकद्रष्टृविशिष्टस्थानविधानान्नित्यसूरिसद्भावसिद्धिः । न चोक्तश्रुतेर्मुक्तप्रवाहविषयत्वमीश्वरविषयत्वं वाऽस्त्विति वाच्यम्; सदापदार्थस्य कालत्वव्यापकत्वस्य मुक्तदर्शने बाधाद्भगवति बहु-वचनार्थबहुत्वानुपपत्तेः । स्वसामानाधिकरण्यस्वसमानकालीनत्वोभय-

सम्बन्धेन कर्मप्रागभावविशिष्टान्यकर्मध्वंससमानाधिकरणपरमात्मानुभवरूपो यो मोक्षस्तद्वत्त्वं—**मुक्तलक्षणम्** ॥

मोक्षहेतुश्च परविद्या; परविद्यात्वं च ब्रह्मविषयकविद्यात्वं, विद्यात्वं च वेदविहितभक्तित्वम्। वेदविहितत्वनिवेशादुदासीनस्मृतिसन्ततौ नातिव्याप्तिः। वेदविहितत्वं च वेदतात्पर्यविषयीभूतकृतिसाध्यत्वादिप्रकारकबोधविषयत्वं; 'स आत्मानमुपासीत मनोमयं प्राणशरीरम्' इत्यादौ लिङः कृतिसाध्यत्वार्थकत्वात्, **वेदार्थसङ्ग्रहे** 'लिङः कोऽर्थः परिगृहीतः' इति प्रश्नपूर्वकं 'यज देवपूजायामिति देवताराधनभूतयागादेः कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयोऽभिदधति' इत्युक्तेः; वेदतात्पर्यविषयीभूतकृतिसाध्यत्वप्रकारकबोधविषयत्वं शाण्डिल्यविद्यादावस्तीति लक्षणसङ्गतिः, मनोमयत्वादिप्रकारकात्मविशेष्यकं यत्कृतिसाध्यमुपासनं तत्करोतीति बोधस्य तद्वाक्यादुत्पत्तेः; कर्त्रधिकरणदीपादावाख्यातार्थमुख्यविशेष्यकबोधस्योक्तत्वात्, लिङो लिङ्त्वेन कृतिसाध्यत्वार्थकत्वस्य आख्यातत्वेन कर्त्रर्थकतायाश्च सम्भवात्। बोधे वेदजन्यत्वमनिवेश्य वेदतात्पर्यविषयत्वनिवेशात्सद्विद्यादौ नाव्याप्तिः; तत्र सदुपासीतेति विध्यभावेऽपि 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये' इति मोक्षसाधनत्वश्रवणेन विधिकल्पनस्यावश्यकतया सदुपासनविशेष्यककृतिसाध्यत्वप्रकारकबोधस्यापि सद्विद्यातात्पर्यविषयत्वात्। अत एवोद्गीथविद्याविचारे **भाष्ये** उक्तं—

"वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणाद्वेदनविषये विधिः कल्प्यते॥" —इति॥

वेदतात्पर्यं च वेदोच्चारणप्रयोजकेच्छा, न तु वेदकर्मकाद्योच्चारणप्रयोजकेच्छा; वेदस्यापौरुषेयत्वेन तत्कर्मकाद्योच्चारणस्यैवाप्रसिद्धेः। सा चेच्छा क्वचिदीश्वरसमवेता, क्वचिदध्यापकसमवेता च प्रसिध्यतीति

नात्रसिद्धि । भक्तित्वं च प्रीतिरूपतापन्नदर्शनसमानाकारध्रुवानुस्मृति-रूपध्यानत्वम् ; प्रीतित्वं चानुकूलत्वप्रकारकत्वं, अनुकूलत्वं च—यद्धर्मा-वच्छिन्नविषयता इतरेच्छानधीनेच्छाजनकतावच्छेदिका, तादृशधर्म-रूपं वैजात्य। इच्छायामितरेच्छानधीनत्वनिवेशादिष्टसाधनत्वव्युदास.। दर्शनसमानाकारत्वं च—साक्षात्कारत्वव्यञ्जकविषयितावत्त्वम् । अनवरतभावनावशात् स्मृतावपि तादृशविषयिता जायते, 'वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरं' इत्यादौ तथा दर्शनात् ॥ यद्यपि—इदं रजतमित्यादाविव वृक्षविशेष्यकं रामादिप्रकारकं ज्ञानं भ्रमात्मकसाक्षात्कार एव ; तथाऽपि—सिद्धान्ते असन्निकृष्टभ्रमस्थले ग्रहणस्मरणात्मकज्ञानद्वयस्य तदीयविषयतयोर्निरूप्यनिरूपकभावस्य च स्वीकारात्स्मरणस्यैव लौकिकविषयितावत्त्वमभ्युपगन्तव्यं ; अन्यथा पश्यामीत्यस्यानुपपत्ते· । स्पष्टं चेदं **ज्ञानयाथार्थ्यवादार्थे** ॥

न च—एवमपि कामातुरपरिभावितकामिनीसाक्षात्कारवत् ब्रह्म-ध्यानस्यापि भ्रमत्वापत्ति., भावनारूपदोषजन्यत्वात्, उक्तस्थले भावनाया दोषत्वेन क्लृप्तत्वादिति—वाच्यम् ; न हि भावनाजन्यत्व-मुक्तकामिनीसाक्षात्कारे अप्रामाण्यप्रयोजकं, किं तु बाधितविषयत्वं ; भावनानपेक्षेऽपि शुक्तिरजतादिभ्रमे बाधादेवाप्रामाण्यस्वीकारात्, ब्रह्मणश्च सर्वव्याप्तस्य सर्वप्रमाणाबाधितत्वात्तद्भावनाजन्यज्ञानस्यापि प्रामाण्याविघातात्, भावनायाश्च व्यवहितकामिनीसाक्षात्कारे दोषत्वे-ऽपि ब्रह्मध्याने दोषत्वासम्भवात् ; अन्यथा शङ्खपीतत्वभ्रमकारणी-भूतस्य पित्तद्रव्यस्य स्वविषयकज्ञानेऽप्यप्रामाण्यप्रयोजकत्वापत्ते·, क्वचिदेव कस्य चिद्दोषत्वमित्येवाङ्गीकार्यत्वात् ॥ ध्रुवानुस्मृतित्वं च—घटिकाद्यात्मककालनिष्ठावान्तरकालावच्छिन्नाभावाप्रतियोगित्वं, धारा-वाहिकप्रत्यक्षस्थल इव तावत्पर्यन्तमेकस्या एव स्मृतिव्यक्तेस्स्वी-कारात् ॥

उक्तं च प्रज्ञापरित्राणे वरदनारायणभट्टारकैः—

"स्तम्भस्तम्भस्तम्भ इति धीर्धारावाहिका मता ।
धारावाहिकविज्ञानमेकं ज्ञानं मतं हि नः ॥" —इति ॥

यदि च—धारावाहिकज्ञानस्थले नैका व्यक्तिः, किं तु सजातीयज्ञानधारैव । उक्तं च श्रीमति भाष्ये—"ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा ध्रुवानुस्मृतिः" इति— इत्युच्यते ; तदा—घटिकाद्यात्मककालनिष्ठावान्तरकालावच्छिन्नो यस्स्वाश्रयत्वस्वसमानविषयकस्वसमानाधिकरणस्मृत्याश्रयत्वैतदन्यतरसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावस्तादृशाभावाप्रतियोगित्वं ध्रुवानुस्मृतित्वमिति बोध्यम् । ब्रह्मविषयकत्वं च सत्यत्वज्ञानत्वानन्दत्वामलत्वनिष्ठप्रकारतानिरूपितब्रह्मनिष्ठविशेष्यताकत्वम् । तेन मनो ब्रह्मेत्युपासीतेत्यादिनाभिहितेषु प्रतीकोपासनेषु नातिव्याप्तिः । परविद्यासामान्ये सत्यत्वादिप्रकारकत्वं च—आनन्दादयः प्रधानस्य, इतरे त्वर्थसामान्यादिति सूत्रसिद्धम् ॥

सा च विद्या—सदानन्दमयान्तरादित्यशाण्डिल्यदहरमधुभूमवैश्वानरपञ्चाग्न्यादिविद्याभेदाद्बहुविधा ॥ तत्र—जगदुपादानत्व-जगन्निमित्तत्व-सत्यसङ्कल्पत्व-तेजःप्रभृतिस्रष्टृत्व-तत्तच्छरीरकत्व-तत्तदनुप्रवेष्टृत्व - नामरूपव्याकर्तृत्व—जगज्जन्मस्थितिलयहेतुत्वादिगुणप्रकारकसच्छब्दवाच्यपरब्रह्मविशेष्यकोपासनं—सद्विद्या । सा च—सदेव सोम्येदमग्र आसीदित्यादिना छान्दोग्ये प्रतिपादिता ॥ विपश्चित्त्व-जगत्कारणत्वानन्दैकतानत्वेतरानन्दयितृत्व-स्वसङ्कल्पप्रयोज्याचिदचिदात्मकप्रपञ्चस्रष्टृत्व-सृज्यवर्गानुप्रवेशकृततदात्मकत्व-भयाभयहेतुत्व-वाय्वादित्यादिप्रशासितृत्व निरतिशयानन्दाश्रयत्वादिप्रकारकानन्दमयविशेष्यकभक्तिः—आनन्दमयविद्या । सा च तैत्तिरीयकगता ॥ मनोमयत्व-प्राणशरीरकत्व-भारूपत्व-सत्यसङ्कल्पत्वाकाशशरीरकत्व—सर्वगन्धत्व-सर्वरसत्वावाप्तसमस्तकामत्वावाकित्वानादरत्व हृदयोपाधिकाणु-

त्वादिप्रकारकात्मविशेष्यकोपासनं—**शाण्डिल्यविद्या** । सा च छान्दोग्ये बृहदारण्यकेऽग्निरहस्ये चाम्नाता ॥

**अथ**—बृहदारण्यके सत्यसङ्कल्पत्वाद्यप्रतिपादनात्तत्प्रकारकत्वघटितोक्तलक्षणस्य तदुक्तशाण्डिल्यविद्यायामव्याप्तिः । न च—सत्यसङ्कल्पत्वादिप्रकारकत्वमनिवेश्य मनोमयत्वभारूपत्वहृदयोपाधिकाणुत्वैतत्त्रितयप्रकारकत्वमेव लक्षणे निवेश्यत इति नाव्याप्तिः, उक्तगुणत्रयस्य छान्दोग्येऽग्निरहस्ये बृहदारण्यके च सत्त्वादिति—वाच्यम् । शाण्डिल्यविद्यायां उक्तगुणत्रयप्रकारकत्वेनैव कारणत्वे छान्दोग्याग्निरहस्ययोः प्राणशरीरकत्वसत्यसङ्कल्पत्वादीनां प्रतिपादनस्य वैयर्थ्यप्रसङ्गेन प्राणशरीरकत्वादिप्रकारकत्वस्यापि कारणतावच्छेदकत्वावश्यकत्वात्. बृहदारण्यकोक्तशाण्डिल्यविद्यायास्तत्प्रकारकत्वाभावे मोक्षजनकत्वानुपपत्तेः । न च—**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** इत्यादिना रूपैक्यस्य विद्यैक्यप्रयोजकतया गुणोपसंहारप्रयोजकत्वाभिधानात् प्रकृते मनोमयत्वभारूपत्वविशिष्टात्मन एव बृहदारण्यकेऽप्युपास्यत्वोक्त्या रूपैक्याद्गुणोपसंहारावश्यकत्वेन तद्विद्याया अपि प्राणशरीरकत्वादिप्रकारकत्वान्मोक्षजनकतासम्भव इति—वाच्यम् । विद्यैक्यस्य तत्प्रयोजकरूपैक्यस्य च बृहदारण्यकोक्तविद्यायामसम्भवात् । तथा हि—विद्यैक्यं च न तावदभिन्नत्वं; पुरुषभेदेन कालभेदेन च भिन्नानां मनोमयत्वादिप्रकारकोपासनरूपशाण्डिल्यविद्यानामभेदायोगात्; किन्त्वभिन्नकारणताश्रयत्वं, शाण्डिल्यविद्यानां सर्वासामेकरूपेण कारणत्वात्; एकविषयतावत्त्वं वा, समानाकारज्ञानेषु विषयताया ऐक्यात् । तत्प्रयोजकं रूपैक्यमपि न तावदेकविशेष्यकत्वम्, उद्गीथविद्यानां सर्वासामप्युद्गीथात्मकैकविशेष्यकत्वेनैक्यापत्तेः । कि तु तदनिवर्त्यसंशयनिवर्तकतावच्छेदकविषयताशून्यत्वरूपं, तदनतिरिक्तविषयकत्वमेव तदैक्यप्रयोजकं रूपैक्यम् ।

तथा च—"तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्" इति तैत्तिरीयकगता दहरविद्या छान्दोग्यगतदहरविद्यानिष्ठकारणतावती तन्निष्ठविषयितावती वा, तादृशविद्यानिष्ठप्रतिबन्धकताकान्यसंशयनिवर्तकतावच्छेदकविषयिताशून्यत्वात्, छान्दोग्यगतदहरविद्यावत् इत्याद्यनुमानेन भिन्नभिन्नशाखागतविद्यानामैक्यं साधनीयमिति सर्ववेदान्तप्रत्ययन्यायाभिप्रेतम् । तथा च—बृहदारण्यकगतशाण्डिल्यविद्याया अग्निरहस्याद्युक्तशाण्डिल्यविद्यैक्यं न सम्भवति, तादृशोपासनाप्रतिबध्यवशित्वेशानत्वादिकोटिकसंशयनिवर्तकतावच्छेदकविषयितावत्त्वेन तच्छून्यत्वात्मकरूपैक्याभावात् ॥ —इति चेत् ॥

मैवम्—सर्वस्थितिप्रयोजकसङ्कल्पवत्त्वरूपवशित्वस्य सर्वोत्पत्तिप्रयोजकसङ्कल्पवत्त्वरूपसर्वेशानत्वस्य सर्वचेष्टाप्रयोजकसङ्कल्पवत्त्वरूपसर्वप्रशासितृत्वस्य च बृहदारण्यकोक्तस्य अग्निरहस्यच्छान्दोग्ययोस्सत्यसङ्कल्पपदेनोक्तत्वात् सत्यपदस्य सर्वस्थितिप्रयोजकत्व—सर्वोत्पत्तिप्रयोजकत्व-सर्वचेष्टाप्रयोजकत्वपरत्वात् । सर्वनिष्ठस्वत्वनिरूपकत्वरूपसर्वाधिपतित्वस्य च सर्वं स्वामितया प्राप्तवानित्यर्थकेन सर्वमिदमभ्यात्त इत्यनेनोक्तत्वेन बृहदारण्यकोक्तविद्यायां रूपैक्यनिर्वाहात् । स्पष्टं चेदं 'समान एवं चाभेदात्' इत्यत्र भाष्ये ॥

अथ—एवमपि छान्दोग्यादौ ज्यायान्पृथिव्या इत्यादिना ज्यायस्त्वस्योक्त्या तत्प्रकारकत्वस्यापि हेतुतावच्छेदकत्वमावश्यकं, अन्यथा तत्प्रतिपादनवैयर्थ्यात् । तच्च—न सम्भवति, हृदयावच्छिन्नपरमात्मनि पृथिव्याद्यवधिकज्यायस्त्वासम्भवात् ॥ न च—तादृशज्यायस्त्वस्यावच्छिन्ने असम्भवेऽपि स्वरूपे सम्भवान्नानुपपत्तिः; एवं चानन्दादय इत्यस्यापि न विरोधः, हृदयावच्छिन्नपरमात्मन्यपि स्वरूपे अपरिच्छिन्नत्वरूपानन्त्यस्य सम्भवेन तत्प्रकारकत्वनिर्वाहादिति—वाच्यम् । तथा सति "सम्भृतिद्युव्याप्त्यपि चातः" इत्यधिकरणविरोधापत्तेः, तत्र

हृदयादिरूपाल्पस्थानगोचरासु विद्यासु द्युव्याप्तिप्रकारकत्वासम्भवस्य प्रतिपादनात्, उक्तरीत्या द्युव्याप्तेर्हृदयावच्छिन्ने असम्भवेऽपि स्वरूपे सम्भवात् ॥ न च—द्युव्याप्तिराकाशावधिकमहत्त्वं ; तच्च स्वरूपे न सम्भवति, स्वरूपगतपरममहत्त्वस्य निरवधिकत्वेनाकाशाद्यवधिकत्वाभावात्; मध्यमपरिमाण एवान्यापेक्षयाऽल्पत्वरूपत्वस्येतरापेक्षया महत्त्वरूपत्वस्य चोपपत्त्यर्थं सावधिकत्वकल्पनादिति—वाच्यम् । तथा सति पृथिव्याद्यवधिकज्यायस्त्वस्यापि शाण्डिल्यविद्याप्रकारत्वासम्भवतादवस्थ्यात्, आनन्दादय इतिसूत्रोक्तानन्त्यस्यैव स्वरूपांशे प्रकारतया भानसम्भवात्—इति चेन्न ॥ ज्यायान्पृथिव्या इत्यादेरुपास्यमाहात्म्यप्रतिपादनपरत्वेन शाण्डिल्यविद्यावेद्यत्वानुपगमात्, सम्भृत्यधिकरणभाष्ये तथा प्रतिपादनादिति दिक् । उक्तरीत्यैव विद्यान्तराणां लक्षणान्यूह्यानि ॥

तासां च विद्यानां तृणारणिमणिन्यायेन पृथगेव हेतुत्वं, न तु दण्डचक्रादिन्यायेन मिलितानां हेतुत्वमिति विकल्पोऽविशिष्टफलत्वादिति सूत्रसिद्धम्; दहरादिविद्यागतमोक्षोत्पादप्रयोजकतावच्छेदकसमुदायत्वशून्यत्वे सति मोक्षोत्पादप्रयोजकतावच्छेदकसमुदायाश्रयत्वरूपाभिन्नसामग्रीप्रविष्टत्वस्यैव विकल्पशब्दार्थत्वात्, अव्यवहितोत्तरत्वनिवेशाच्च—न परस्परं व्यभिचार इति बोध्यम् । अत्र अविशिष्टफलत्वादिति सूत्रयता मुक्तावानन्दतारतम्यं निरस्तं; ब्रह्मविद्यासामान्यस्यैकजातीयफलजनकत्वाभिधानात्, भोगमात्रसाम्यलिङ्गाच्चेति सूत्रोक्तस्य भोगसाम्यस्य सम्भवाच्च । तथा हि—अनुकूलत्वप्रकारकसाक्षात्कारो भोगः, तत्साम्यं च समानविषयकत्वम् । तथा च प्रमेयत्वव्यापकानुकूलत्वनिष्ठप्रकारतानिरूपितविशेष्यताकसाक्षात्कारवत्त्वमेव समानभोगवत्त्वम्, 'सदा पश्यन्ति सूरयः' इत्यनेन नित्यानां, 'सर्वं ह पश्यः पश्यति' इत्यनेन मुक्तानां चेश्वरस्येव सर्वसाक्षात्कारवत्त्व-

बोधनात्तदंशे वैलक्षण्याभावात् परस्परमीश्वरेण च भोगसाम्यमुपपन्नम् ॥ उक्तं च **तत्त्वमुक्ताकलापे**—

"शेषाणां शेषिणश्च स्फुरति सुखतया सर्वदा सर्वतत्त्वे
नित्यानां मुक्तिभाजामपि भुवनकृतं भोगमात्रं समानम् ॥"
—इति ॥

न च—मुक्तानां दुःखादिसाक्षात्कर्तृत्वे दुःखित्वापत्त्या न सर्वसाक्षात्कारसम्भवः ; 'न पश्यो मृत्युं पश्यति, न रोगं नोत दुःखताम्' इति श्रुत्या दुःखादिसाक्षात्कारनिषेधाच्च, 'सर्वं ह पश्यः पश्यति' इत्यस्य सङ्कोचावश्यकत्वादिति—वाच्यम् । स्वतोऽनुकूलभूतभगवद्विभूतित्वेन सर्वस्याप्यनुकूलत्वेन दुःखादेरपि मुक्तान्प्रति प्रतिकूलत्वाभावेनानुकूलतया दुःखादिसाक्षात्कर्तृत्वसम्भवात्तस्य दुःखित्वानापादकत्वात् प्रतिकूलतया तत्साक्षात्कर्तृत्वस्यैव तथात्वात्, स्वतोऽनुकूलभूते वस्तुनि प्रातिकूल्यस्य कर्मकृतत्वेन कर्मनाशे तत्कृतप्रातिकूल्यस्यासम्भवात्, नोतदुःखतामित्यस्य प्रातिकूल्यप्रकारकसाक्षात्कारनिषेधपरत्वेन दुःखसाक्षात्कारनिषेधपरत्वाभावाच्च ॥ न च—पूर्वानुभूतनरकादौ प्रातिकूल्यस्य पूर्वं स्थितत्वादतीतादिसाक्षात्कर्तुर्मुक्तस्य तत्साक्षात्कर्तृत्वमावश्यकमिति—वाच्यम् । प्रतिकूलतया अनुभूतं नरकादिकमपि भगवद्विभूतित्वादनुकूलमेवेति साक्षात्कारस्य मुक्तिदशायां स्वीकारेऽपि तस्य दुःखित्वानापादकत्वात्, प्रत्युतानन्दावहत्वात् ॥

**अत्र माध्वाः**—देवमनुष्यादीनां मुक्तानां परस्परमानन्दे तारतम्यमावश्यकम्; साधनतारतम्यस्य साध्यतारतम्यप्रयोजकत्वात्, मनुष्योपासनापेक्षया देवोपासनस्य कालतो विषयतश्च प्रकृष्टत्वात्, अन्यथा प्रयत्नाधिक्यवैफल्यापत्तेः, प्रकृष्टाप्रकृष्टसाधनवतामेकजातीयफलप्रदत्वे भगवतो वैषम्यापत्तेश्च । श्रुतिसिद्धश्चायमर्थः—

"अक्षण्वन्त कर्णवन्तस्सखायो मनोजवेष्वसमा बभूवुः ॥"—इति ॥ अत्र हि मनोजवशब्दिते ज्ञाने साम्याभावप्रतिपादनात्तारतम्यमवगम्यते, तेन च फलतारतम्यमर्थासिद्धम्। तथा 'सैषानन्दस्य मीमांसा भवति'—इत्यारभ्य मनुष्यादिचतुर्मुखपर्यन्तानां मुक्तानामानन्दतारतम्यं प्रतिपाद्य 'श्रोत्रियस्य चाकामहतस्य' इति तत्तन्मुक्तेष्वपि तत्तदानन्दतारतम्यातिदेशात्, परमसाम्यश्रुतेश्च भवन्मतेऽपि नासङ्कुचितार्थत्वं; जगत्कारणत्वलक्ष्मीपतित्वादेर्मुक्तेष्वसम्भवाच्छेषित्वशेषत्वाणुत्वविभुत्वादिकृततारतम्यस्य दुरपह्नवत्वाच्च । अतो निर्दोषत्वमात्रेण तत्साम्यमुपपन्नमिति न तेनानन्दसाम्यासिद्धिः—**इति वदन्ति** ॥

**अत्रोच्यते**—मुक्तानामानन्दतारतम्यं सङ्ख्याकृतं परिमाणकृतं विषयकृतं स्वरूपकृतं वा न सम्भवति ॥ **सङ्ख्याकृततारतम्यं हि**—एकतरकृतमुक्तानन्दपर्याप्तसङ्ख्याव्याप्यत्वव्यापकत्वान्यतरावच्छेदकसङ्ख्याविभाजकधर्मवत्सङ्ख्यापर्याप्तचधिकरणत्वमपरमुक्तानन्देषु। यथा अष्टवस्वपेक्षया सप्तर्षिषु द्वादशादित्येषु च वसुपर्याप्ताष्टत्वसङ्ख्याव्याप्यतावच्छेदकसप्तत्वत्वरूपसङ्ख्याविभाजकधर्मवत्सङ्ख्यापर्याप्तचधिकरणत्वस्य सप्तर्षिषु तादृशसङ्ख्याव्यापकतावच्छेदकद्वादशत्वत्वरूपतादृशधर्मवत्सङ्ख्यापर्याप्तचधिकरणत्वस्य द्वादशादित्येषु च सत्त्वात्। एतादृशं च तारतम्यं मुक्तानन्देष्वसम्भवि ; आनन्दस्य भवन्मते जीवस्वरूपत्वेन प्रत्येकमेकत्वेन सङ्ख्याकृतवैषम्याभावात् ॥ **नापि परिमाणकृतं,** परिमाणकृततारतम्यं ह्यामलकापेक्षया बिल्वबदरयोस्तत्संयुक्तयावत्प्रदेशसंयोगयोग्यत्वसमानाधिकरणतदसंयुक्तप्रदेशसंयोगयोग्यत्वतत्संयुक्तयत्किञ्चित्प्रदेशसंयोगयोग्यत्वान्यतररूपं प्रसिद्धं ; तादृशस्याणुरूपजीवस्वरूपानन्देष्वसम्भवात् ॥ **नापि विषयकृतं** ; तद्धि तद्विषयत्किञ्चिदविषयकत्वतदविषयविषयकत्वान्यतररूपं ; यथा—घटपटोभयविषयकज्ञानापेक्षया एकविषयकज्ञानात्रितयविषयकज्ञानयोः ;

तादृशानन्दतारतम्यस्य, 'सर्वं ह पश्यः पश्यति' इत्यादिश्रुत्युक्तसर्वज्ञत्वेन समानेषु मुक्तेष्वसम्भवात् ॥ **नापि स्वरूपकृतं**; तद्धि–मधुरमधुरतररसयोरिव परस्परासमानाधिकरणवैजात्यवत्त्वं, तादृशवैजात्यस्य मुक्तस्वरूपानन्देष्वप्रामाणिकत्वात् ॥

**यदपि–तादृशवैजात्यसाधनायोक्तं**–प्रकृता बन्धनिवृत्तिः स्वसजातीयबन्धनिवृत्त्याश्रयप्रतियोगिकतारतम्यवन्निष्ठा, बन्धनिवृत्तित्वात्, निगलबन्धनिवृत्तिवत्—इति । **तदपि न**–तारतम्यस्य गुणगतवैजात्यरूपस्य बन्धनिवृत्त्याश्रयात्मनिष्ठत्वाभावात्, तदवृत्तिधर्मस्यैतत्प्रतियोगितारतम्यशब्देनाभिधाने मुक्तानन्दयोरेकजातीयत्वेऽपि स्वस्वमात्रविषयकधीविषयत्वमादायार्थान्तरात्। न च–गुणगुणिनोरभेदाङ्गीकाराद्गुणगतवैजात्यस्य आत्मनिष्ठत्वमिति–वाच्यम्, स्वरूपातिरिक्ततादृशवैजात्यस्यापसिद्धान्तपराहतत्वेन भवद्भिरङ्गीकर्तुमशक्यत्वात्। न च–जीवस्वरूपानन्दानामनादितारतम्यस्वभावत्वमिति–वाच्यम्; जीवस्वरूपाणां तारतम्यस्वरूपत्वे भेदमात्रे पर्यवसानेन परिभाषामात्रापत्तेः, पूर्वोक्तभोगसाम्याविघातात्। साधनतारतम्यात्साध्यतारतम्यमित्यपि न सत्; धूमालोकादिलिङ्गकपरामर्शरूपसाधनतारतम्येऽप्यनुमितौ तारतम्यादर्शनेन व्यभिचारात्, मोक्षसाधनज्ञाने तारतम्यासिद्धेश्च अक्षण्वन्तइत्यादिश्रुतेस्सर्वसाक्षात्कर्तृत्वेन समान्तरराहित्यपरत्वादक्षण्वन्तःकर्णवन्तइत्याभ्यां सर्वसाक्षात्कर्तृचक्षुष्मत्त्वस्य तादृशश्रोत्रवत्त्वस्य च बोधनात्, प्रशंसायां मतुप्प्रत्ययात्; 'कीर्तिमानसमो राजा निस्समास्तत्र पण्डिता.' इत्यादौ कीर्तिपाण्डित्याभ्यां सदृशान्तरराहित्यस्येव तादृशसाक्षात्कर्तृत्वेन सदृशान्तरनिषेधबोधनस्य युक्तत्वात्, सैषानन्दस्येत्यादिश्रुतेरपि शते पञ्चाशन्न्यायेन मुक्तानन्दे सर्वानन्दान्तर्भावपरत्वेन तारतम्यपरत्वाभावात्। तच्छ्रुतावानन्दपदं अनुकूलत्वेन ज्ञायमानविषयपरं, न तु तादृशज्ञानपरं; तथा सति

तादृशज्ञानस्य पुरुषभेदेन भिन्नतया मानुषानन्दे मनुष्यगन्धर्वसम्बन्धित्वोत्कीर्तनासङ्गतेः 'ते ये शतं मानुषा आनन्दास्स एकः' इत्यस्य मनुष्यानन्दशतसजातीय एको मनुष्यगन्धर्वानन्द इत्यर्थाङ्गीकारे त्वानन्दपदं तादृशज्ञानपरमेव । समानविषयकत्वेन साजात्यस्य विवक्षितत्वेन मानुषशतज्ञानविषयविषयकत्वस्य मनुष्यगन्धर्वगतैकज्ञाने लाभात्तादृशमनुष्यगन्धर्वगतविभिन्नविषयकशतज्ञानविषयविषयकत्वस्य च-देवगतैकज्ञाने लाभान्नानुपपत्ति; मुक्तानां सर्वविशेष्यकानुकूलत्वप्रकारकसाक्षात्कारवत्तया मानुषशतज्ञानविषयविषयकत्वस्य मनुष्यगन्धर्वादिगतशतज्ञानविषयविषयकत्वस्य च सत्त्वात्प्रतिपर्यायं श्रोत्रियस्य चाकामहतस्य इत्यस्योपपत्तिरित्यन्यत्र विस्तरः ॥

इत्यनन्तार्यकृतौ सिद्धान्तसिद्धाञ्जने

**जीवनिरूपणं नाम द्वितीयः परिच्छेदः ॥**

---

## अथेश्वरो निरूप्यते ॥

**विभुत्वे सति चेतनत्वं तल्लक्षणम्** । जीववारणाय सत्यन्तं, कालवारणाय विशेष्यम् । प्रमेयत्वव्यापकस्वत्वनिरूपकत्वरूपं सर्वस्वामित्वं, सर्वकर्मजन्यप्रीत्याश्रयत्वरूपं सर्वकर्मसमाराध्यत्वं, सर्वकर्मफलोत्पादकसङ्कल्पवत्त्वरूपं सर्वफलप्रदत्वं, सर्वद्रव्यपतनप्रतिबन्धकसङ्कल्पवत्त्वरूपसर्वाधारत्वं च-**तल्लक्षणम्** । न च-ईश्वरस्य विभुत्वे 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिश्रुत्युक्तमनुप्रवेशादिकं नोपपद्यत इति-वाच्यम्; विलक्षणसंयोगस्यैवानुप्रवेशशब्दार्थत्वात् । न च-भगवन्निरूपितस्वत्वस्य सर्वत्र सिद्धत्वे अग्नये स्वाहेत्यादावग्निपदस्याग्न्यन्तर्यामिपरत्वानुपपत्तिः, हविर्निष्ठस्वत्वरूपफलावच्छिन्नस्वस्वत्वध्वंसानुकूलव्यापारस्यैव स्वाहापदार्थत्वात्तत्र स्वत्वरूपफलेऽन्त-

र्यामिनिरूपितत्वासम्भवादिति—वाच्यम्; तन्न विशेषणीभूताग्निनिरूपितस्वस्यैव स्वत्वरूपफलेऽन्वयाङ्गीकारात् । न चैवमपि—भगवते गां ददाति, अस्मानं समर्पयतीत्यादिव्यवहारानुपपत्तिरिति—वाच्यम्; तत्र स्वत्वप्रकारतानिरूपितविशेष्यत्वरूपफलावच्छिन्नस्वस्वत्वध्वंसानुकूलव्यापारस्यैव ददात्यर्थत्वात् भगवन्निरूपितस्वत्वस्य सर्वत्र सिद्धत्वेऽपि सर्वेषां तज्ज्ञानाभावेन तत्प्रकारकज्ञानीयविशेष्यतायाः फलत्वाविरोधात्। अत एव भगवति सर्वोत्कर्षस्य सिद्धत्वेऽपि भगवान् जयत्वित्यादिप्रयोगः । उत्कर्षनिष्ठप्रकारतानिरूपितविशेष्यतायाः एव तत्र जिधात्वर्थतया तस्या असिद्धत्वेन लोडर्थेच्छाविषयत्वस्य तत्रान्वयाबाधात् । न च—सर्वकर्मसमाराध्यत्वं भगवतो न सम्भवति अन्येषामेवान्यभक्ताराध्यत्वादिति—वाच्यम्;

"येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥"

इत्यादिभिरन्यदेवताभक्ताराध्यत्वस्यापि भगवत्यभिधानात् ॥ तत्र गौरवितप्रीतिहेतुव्यापाररूपयजिधात्वर्थतावच्छेदकप्रीतिरूपफले द्वितीयान्तार्थमद्वृत्तित्वान्वयात् क्षणध्वंसिक्रियायाः कालान्तरभाविस्वर्गादिजनकत्वासम्भवेन द्वारस्य वक्तव्यत्वे अत्यन्तापरिदृष्टापूर्वस्य द्वारत्वापेक्षया 'स एवैनं भूतिं गमयति', 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इत्यादिश्रुत्युक्तदेवताप्रसादस्यैव द्वारतया युक्तत्वेन निरुक्तसर्वफलप्रदत्वं भगवत उपपन्नम् । न च—तत्रेन्द्रादिप्रीतेरेव द्वारत्वं श्रूयते न भगवत्प्रीतेरिति—वाच्यम्; आराधितेन्द्रादिनाशे कल्पान्तरे फलोत्पादानुपपत्त्या तत्रेन्द्रादिपदस्य तदन्तर्यामिपरत्वावश्यकत्वात् । उपपादितं चेदं फलमत उपपत्तेरित्यत्र भाष्ये। निरुक्तसर्वाधारत्वं च 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृतौ तिष्ठतः' इत्यादिश्रुतिसिद्धम् । 'पाथासि पीते तृष्णा

शाम्यति' इत्यादाविव सतिसप्तम्या जन्यजनकभावलाभात् जगदुपादानत्वमपि तल्लक्षणम् । भाव्यवस्थाविशेषवतः प्रागवस्थायोगित्वमुपादानत्वम् । स्वावच्छेदककालानवच्छिन्नत्व स्वपूर्वत्वस्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन तद्धर्मविशिष्टधर्मवत्त्वं तद्धर्मावच्छिन्नं प्रत्युपादानत्वमिति फलितम् । मृत्पिण्डे निरुक्तसम्बन्धत्रयेण घटत्वावस्थाविशिष्टपिण्डत्वावस्थासत्त्वाद्घटत्वावच्छिन्नं प्रति पिण्डत्वावच्छिन्नस्योपादानत्वोपपत्तिः ; घटत्वावच्छिन्नं प्रति द्रव्यत्वावच्छिन्नस्योपादानतावारणाय प्रथमसम्बन्धनिवेशः, घटत्वावस्थाध्वंसविशिष्टस्यापि तदवच्छिन्नं प्रत्युपादानत्ववारणाय स्वपूर्वत्वनिवेशः । घटाव्यवहितपूर्वतन्त्वादेस्तदुपादानतावारणाय सामानाधिकरण्यनिवेशः । अन्यथासिद्धिनिरूपकतानवच्छेदकत्वस्यापि निवेशाच्च न घटत्वावस्थापूर्वकालीनवायुसंयोगादिविशिष्टस्य तदवच्छिन्नं प्रत्युपादानत्वापत्तिः । न चैवं—द्रव्यत्वाद्यवच्छिन्नस्य घटत्वाद्यवच्छिन्नं प्रत्यन्यथासिद्धत्वादेव वारणे प्रथमसम्बन्धनिवेशवैयर्थ्यमिति —वाच्यम् । अन्यथासिद्धत्वस्यैकस्याभावेन अन्यथासिद्धिनिरूपकतावच्छेदकत्वेन 'प्रामाणिकानां व्यवहारविषया ये ये धर्मास्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्त्वस्य निवेश्यतया विशेषणान्तरावार्याणामेव भेदकूटनिवेशेन वारणाङ्गीकारात् । सामानाधिकरण्यशरीरे च स्वाश्रयापृथक्सिद्धिसम्बन्धावच्छिन्ना स्वापृथक्सिद्धिसम्बन्धावच्छिन्ना चाधिकरणता अपृथक्सिद्धिसम्बन्धावच्छिन्नाधिकरणतात्वेन प्रवेश्या । 'बालोऽपि यः प्रजानाति तं देवाः स्थविरं विदुः,' 'काठिन्यवान्यो बिभर्ति' इत्यादिभिः स्वाश्रयापृथक्सिद्धेरपि वृत्तिनियामकत्वस्य सिद्धत्वात्तदवच्छिन्नाधिकरणताप्रसिद्धेः ॥ एव च—सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः स्थूलचिदचिद्विशिष्टं स्वं प्रत्युपादानत्वमुपपन्नम् ॥ उक्तसम्बन्धत्रयेण स्थूलत्वविशिष्टसूक्ष्मत्वस्य तत्र सत्त्वात्, तादात्म्येन स्थूल-

विशिष्टं प्रति तेन सम्बन्धेन सूक्ष्मविशिष्टब्रह्मणः कारणत्वात्, तादात्म्यसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्व चोपादानलक्षण बोध्यं; उपादानोपादेययोरभेदाच्च **तदनन्यत्वमारम्भणशब्दादिभ्य** इत्यधिकरणोपपत्तिः ॥

**अथैवं—न विलक्षणत्वादस्य तथात्वं च शब्दादि**त्यादिना विलक्षणयोरुपादानोपादेयभावासम्भवमाशङ्क्य, **दृश्यते**त्वित्यादिना तत्सम्भवसिद्धान्तकरणं नोपपद्यते, अभिन्नयोरेवोपादानोपादेयभावे केनापि रूपेण वैलक्षण्याप्रसक्तेः—**इति चेन्न** । विशिष्टयोरुपादानोपादेयभावाङ्गीकारेऽपि विशेषणांशयोरिव विशेषणांशं प्रति विशेष्यांशस्याप्युपादानताया अभिमतत्वात्तन्निर्वाहायाविलक्षणयोरप्युपादानोपादेयभावस्य व्यवस्थापनीयत्वात्, अवस्थां प्रति द्रव्यस्योपादानतानिर्वाहायोपादानत्वलक्षणस्य तादात्म्यापृथक्सिद्ध्यन्यतरसम्बन्धावच्छिन्नकार्यताघटितस्य परिष्कर्तव्यतया विशेषणांशनिष्ठापृथक्सिद्धिसम्बन्धावच्छिन्नकार्यतानिरूपितकारणत्वस्य विशेष्यांशे सत्त्वेन तत्रोपादानत्वव्यवस्थापनस्यावश्यकत्वात्, अन्यथोपादानत्वलक्षणातिव्याप्तेर्दुर्वारत्वात्। अत एव विशेषणांशं प्रति विशेष्यांशस्योपादानत्वपरा यतोवेत्यादिश्रुतिरुपपन्ना; तत्र भूतानीत्यस्य तच्छरीरकपरमात्मपरत्वे बहुवचनस्य प्रत्यक्षविषयार्थकेदमर्थान्वयस्य 'यत्प्रयन्त्यभिसंविशन्ति' इत्यस्य च अस्वारस्यापत्तेः। क्वचिद्विशिष्टं प्रति विशिष्टस्योपादानत्वमुच्यते—यथा 'सदेव सोम्येदमग्र आसीत्', 'आकाशाद्वायुः'—इत्यादौ, तत्राकाशशरीरकाद्वायुशरीरक उत्पन्न इत्यर्थात्। **तदभिध्यानादेव तु तल्लिङ्गात्सः**—इत्यनेनाकाशादिशब्दस्य विशिष्टपरताप्रतिपादनात् पञ्चम्यन्ताकाशादिपदानां विशिष्टपरत्वे प्रथमान्तानामपि तेषां तत्परत्वावश्यकत्वात्। छान्दोग्यश्रुतौ 'तत्तेज ऐक्षत', 'ता आप ऐक्षन्त' इत्याद्यीक्षणरूपलिङ्गात्तेजोऽप्शब्दयोर्विशिष्टपरत्वा-

वश्यकतया तदनुरोधेन 'अग्नेराप', अद्भ्यः पृथिवी' इत्यत्र—अप्पद-पर्यन्तं विशिष्टपरतायास्स्वीकारेऽपि पृथिवीपदस्य विशेषणमात्रपरत्व-मेव। ततश्च 'पृथिव्या ओषधयः, ओषधीभ्योऽन्नं, अन्नात्पुरुषः' इति च विशेषणानामेवोपादानोपादेयभावपरम् । अत एवानन्दमयाधिकरणे 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्र पुरुषपदस्य शरीरपरतया व्याख्या-नं सङ्गच्छते; अन्यथा पुरुषपदस्यापि विशिष्टपरत्वे विकारार्थकमयट्-प्रत्ययानुपपत्तेः, उत्तरत्र 'तस्यैष एव शारीर आत्मा' इति प्रतिपादना-त्सर्वान्तरात्मत्वोपपादनायास्य प्रकरणस्य प्रवृत्तत्वेन तद्विरोधापत्तेश्च। विशेषणांश प्रति विशेष्यांशस्योपादानत्वाभिप्रायेणैव श्रुतिप्रक्रियायां 'यत्र हि द्वैतमिव भवति' इत्यादिश्रुत्यर्थविचारे भाष्यम्—

"कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं प्रतिषिध्यते ॥"

—इति ॥

अत्र जगत इति विशेषणमात्रपरं, विशिष्टपरत्वे तदन्तर्यामिकतये-त्यत्रान्वयानुपपत्तेः ॥ न च—जगत इत्यस्य विशिष्टपरत्वेऽपि तदन्त-र्यामिकतयेत्यस्य विशेषणांशेऽन्वयाद्विशेषणमात्रपरस्य जगत इति पदान्तरस्याध्याहारेण तत्रान्वयसम्भवाद्वा नानुपपत्तिरिति—वाच्यम्; अस्य वाक्यस्य विशिष्टोपादानतापरत्वे ब्रह्मकार्यतयेत्यत्र ब्रह्मपदस्य सूक्ष्मविशिष्टपरत्वावश्यकत्वेन तदन्तर्यामिकतयेति तच्छब्देन विशिष्ट-परामर्शे बाधात्, स्थितिदशायां सूक्ष्मावस्थानाशेन सूक्ष्मशरीर-कस्यान्तर्यामित्वासम्भवात्, विशिष्टस्य प्रक्रान्ततास्थले विशेष्यमात्रस्य तच्छब्देन परामर्शायोगात्; अन्यथा तत्त्वमसीत्यादौ परमते लक्षणा-भिधानासाङ्गत्यापत्तेः । न च—सन्मूला इत्यत्र सच्छब्दस्य विशिष्ट-परत्वेऽपि सदायतना इत्यत्र सच्छब्दस्य श्रुतप्रकाशिकोक्तरीत्या विशेष्यमात्रपरत्वात् विशिष्टस्य प्रक्रान्तत्वेऽप्यैतदात्म्यमित्यत्र विशेष्य-

मात्रस्यैतच्छब्देन परामर्शवत्प्रकृतेऽपि विशेष्यमात्रस्य तच्छब्देन परामर्शस्सम्भवतीति—वाच्यम् ; क्लिष्टकल्पनापत्तेः ॥

**यदि च**—सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यत्र विशिष्टोपादानत्वतात्पर्यानुरोधेन ब्रह्मपदस्य विशिष्टपरत्वे तत्पदस्यापि विशिष्टपरत्वं वाच्यम् ; तच्च न सम्भवति; विशिष्टस्य जननेऽन्वय-सम्भवेऽप्यननपदार्थस्थितावन्वयासम्भवात्, सकृदुच्चरित इति न्यायविरोधेनैकस्य तच्छब्दस्योभयबोधकत्वासम्भवात् । अतो ब्रह्म-पदस्य तत्पदस्य च विशेष्यपरत्वमेव वक्तव्यम् ; विशिष्टस्य कारणत्वे विशेष्यस्यापि तदनपायेन जननेऽपि तदन्वयाविरोधात् । तथा च प्रकृतेऽपि तादृशश्रुत्यनुसारेण ब्रह्मपदस्य तच्छब्दस्य च विशेष्य-परत्वान्नानुपपत्तिरिति **विभाव्यते ; तदाऽपि**—विशेषणांशं प्रति-विशेष्यस्योपादानत्वपरतयाऽपि तद्भाष्यस्य व्यासार्यैर्व्याख्यातत्वात्तद-पि भाष्यटीकोभयाभिमतम् ॥

तत्रेयं टीका—

"यद्वा—कृत्स्नस्य जगत इति निष्कर्षकशब्दः, ब्रह्मशब्दो विशेष्यमात्रपरः, ब्रह्मकार्यतया तदन्तर्यामिकतया च जगत्त-दात्मकं ; तदात्मकत्वं नाम जगतस्तत्प्रकारैकस्वभावतया प्रागवस्थानाभावात्तदन्तर्गतत्वं तेन प्रकारेणैक्यं, न तु स्वरू-पैक्यं ; विशिष्टान्तर्भाव ऐक्यमित्यर्थः ॥" —इति ॥

'दृश्यते तु' इति सूत्रे **भावप्रकाशिका च**—

"**अत्र केचित्**—कारणकोटौ विशेष्यभूतस्य ब्रह्मणः कार्यकोटौ विशेषणभूतेष्वचेतनेष्वप्युपादानत्वमुपपादनीयम् , अन्यथा तस्य सर्वो-पादानत्वासिद्धेः । अत एव श्रुतप्रकाशिकायां 'यद्वा जगत इति निष्कर्षकश्शब्दः, ब्रह्मशब्दो विशेष्यमात्रपरः' इत्यादिना कार्यकोटौ विशेषणभूतस्य जगतः कारणकोटौ विशेष्यभूतं ब्रह्म प्रत्युपादेयत्व-

शरीरत्वे स्व'–इत्याद्यर्थे प्रतिपादितम् । ततश्च सालक्षण्याभावादुपादानत्वं न सम्भवतीत्याक्षेपस्य अचेतनांशे चेतनत्वानुवृत्तिरस्तीति परिहारासम्भवादेतत्सूत्रोक्तन्यायेन विलक्षणयोरप्युपादानोपादेयभावोऽस्तीत्येवं परिहर्तव्यम्—इति वदन्ति ॥" —इति ॥

तथा च–न विलक्षणत्वादित्यादिकं विशेषणविशेष्ययोरुपादानोपादेयभावपरं, आरम्भणाधिकरणं च–विशिष्टयोरुपादानोपादेयभावपरम्; चमसवदविशेषादिति च–विशेषणांशयोरेवोपादानोपादेयभावपरमिति न परस्परं विरोधः; चमसवदित्यत्र "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्" इत्यादिश्रुत्यनुरोधेन ब्रह्मशरीरभूताया अजाया उपादानत्वस्योक्तत्वात् ॥

नन्वेवं–'ईक्षतेर्नाशब्दं' 'आकाशस्तल्लिङ्गात्' इत्याद्यधिकरणानुत्थितिः ; विशेषणभूतप्रकृत्याकाशादीनामेवोपादानत्वपरतया 'सदेव सोम्येदमग्र आसीत्' 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिश्रुतेरुपपत्तेस्सदाकाशादिपदानां ब्रह्मपरताव्यवस्थापनस्यानावश्यकत्वात्; सच्छब्दस्य परमात्मशरीरभूतप्रधानपरत्वाङ्गीकारेण तत्र विशेष्ये ईक्षणाद्यन्वयासम्भवेऽपि विशेषणे तदन्वयसम्भवात्; ब्रह्मपरतापक्षेऽपि विशेषणद्वारैव परिणामस्य वक्तव्यत्वात् ॥ न च–सदादिपदस्य परमात्मशरीरभूतप्रधानपरत्वे लक्षणा स्यादिति–वाच्यम्; सूक्ष्मचिदचिद्विशिष्टब्रह्मपरत्वेऽपि लक्षणाया अवर्जनीयत्वात्, शतदूषण्यां सच्छब्दस्य विशिष्टपरत्वे लक्षणा दोष इत्याशङ्क्य; सर्वशब्दलक्षणापक्षादस्यैवोपादेयतमत्वाभिधानात् । एवं चाकाशादेवेत्यत्र न रूढित्यागोऽपि, तद्वाक्ये ईक्षणादेरश्रवणेन परमात्मशरीरत्वेन बोधनावश्यकत्वात्, ब्रह्मपरतापक्षे रूढित्यागस्य दुस्त्यजत्वात्, अर्थविरोधेन अपशूद्राधिकरणसूत्रोक्तं शूद्रशब्दरूढित्यागमुपजीव्यात्रापि रूढिं विहाय आसमन्तात्काशत इत्यादियोगा-

र्थस्य भाष्येऽङ्गीकारात्। यद्यप्याकाशाधिकरणटीकायामाकाशपदस्याकाशशरीरकत्वपरत्वाङ्गीकारेण रूढ्यपरित्याग उक्तः। तथाऽपि वैश्वानराधिकरणटीकायामग्निपदस्य "शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते" "साक्षादप्यविरोधं जैमिनिः" इति सूत्रद्वयानुरोधेन अग्निशरीरकपरताया अग्रनयनरूपगुणविशिष्टपरतायाश्च स्वीकारे रूढ्यर्थयोगार्थप्रकारकवैश्वानरविद्ययोर्भेदापत्तिरित्याशङ्क्य चिदाचिदसाधारणलिङ्गवत्सु वाक्येषु चिदचिद्वाचिपदानां तच्छरीरकपरत्वं तादृशलिङ्गरहितेषु च योगार्थपरत्वमिति व्यवस्थाकरणादाकाशवाक्ये तादृशलिङ्गाभावेन योगार्थस्यैव युक्तत्वेन आकाशाधिकरणोक्तरूढ्यपरित्यागे व्यासार्याणां निर्भराभावात्। उक्तं च **न्यायसिद्धाञ्जने**—

> "परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया।
> तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी॥"

तथा च—आकाशादिपदानां योगेन ब्रह्मपरत्वव्यवस्थापनमफलम्—इति चेन्न॥ आदेशशब्दोदितप्रशासितृत्व सत्यसङ्कल्पत्व तेज.प्रभृतिस्रष्टृत्व—नामरूपव्याकर्तृत्वादीनां बहूना विशेषणेऽन्वयाङ्गीकारस्यायुक्ततेत्यभिप्रायेणेक्षत्यधिकरणस्य प्रवृत्तेः; सच्छब्दस्य प्रधानपरत्वे गतिसामान्यन्यायविरोधाच्च। एवमाकाशशब्दस्य रूढिस्वीकारे ज्यायस्त्वपरायणत्वादीनामन्वयानुपपत्तेः परमात्मापृथक्सिद्धाकाशपरतां स्वीकृत्य विशेषणे तदन्वयाङ्गीकारे च रूढित्यागस्यावर्जनीयत्वात् योगार्थपरत्वमेव युक्तं; अन्यथा सर्वकारणत्वानुपपत्तेश्च। तथा च—विशेषणांशयोः परस्परमुपादानोपादेयभावेऽपि न विरोधगन्धः॥

**ननु**—सिद्धान्तेऽतिरिक्तावयव्यनभ्युपगमेन द्रव्यस्वरूपस्य नित्यतयाऽवस्थानामेवोत्पत्तिमत्त्वेन अवस्थां प्रति तदाश्रयद्रव्यस्योपादानत्वं,

पूर्वावस्थायाश्चासमवायित्वमित्येतदुचितं ; न तु पूर्वावस्थाविशिष्टद्रव्यस्योत्तरावस्थाविशिष्टद्रव्यं प्रत्युपादानत्वं ; द्रव्यस्य नित्यतयोपादेयत्वासम्भवात् । तथा महत्त्वादिरूपावस्थाविशिष्टद्रव्यं प्रति प्रकृतित्वरूपावस्थाविशिष्टद्रव्यस्योपादानत्वासम्भवात् सुतरामुत्तरावस्थाविशिष्टद्रव्यशरीरकंब्रह्म प्रति पूर्वावस्थाविशिष्टद्रव्यशरीरकब्रह्मण उपादानत्वं न सम्भवति—इति चेत् ॥ मैवम् । सिद्धान्ते कालसंयुक्तत्वरूपकालसम्बन्धित्वस्य द्रव्यमात्रनिष्ठत्वेनावस्थासाधारण्याभावेनाद्रव्ये कालसम्बन्धित्वव्यवहारस्य गौणत्वादाद्यक्षणसम्बन्धरूपोत्पत्तेः पूर्वकालवृत्तित्वरूपकारणत्वस्य च द्रव्य एव सम्भवादुत्तरावस्थां प्रति पूर्वावस्थायाः कारणत्वमित्यस्यापि उत्तरावस्थाविशिष्टद्रव्यनिरूपितपूर्वावस्थाविशिष्टद्रव्यगतकारणतायामेव पर्यवसानात् । अद्रव्यस्यापि कालसम्बन्धित्वस्वीकारे पूर्वमसत्या एवावस्थाया उत्पत्तिस्वीकारापत्त्या असत्कार्यवादस्य दुर्वारत्वात् । स्ववृत्तिध्वंसप्रतियोगिक्षणावृत्तित्वस्ववृत्तित्वोभयसम्बन्धेन क्षणविशिष्टत्वं हि असत्कार्यवादविषयः ; अवस्थायाः कालसम्बन्धित्वे च उक्तोभयसम्बन्धेन क्षणविशिष्टत्वस्यावस्थायामक्षतत्वात्तदापत्तिर्दुर्वारा । तथा च 'कथमसतस्सज्जायेत' इति श्रुतिविरोधः । असत इति षष्ठ्यन्तं, सदिति भावप्रधानं ; पूर्वं कालासम्बन्धिनः कालसम्बन्धित्वं न सम्भवतीत्युक्तासत्कार्यवादनिरासोऽभिप्रेतः । आद्यक्षणसम्बन्धरूपोत्पत्तिशरीरे च घटत्वाद्यवच्छिन्ननिरूपिताधिकरणतैव निवेश्या ; तेन द्रव्यस्वरूपस्य नित्यतया स्वाधिकरणक्षणध्वंसानधिकरणक्षणाप्रसिद्ध्या स्वपदेन द्रव्योपादानासम्भवेऽपि न क्षतिः । स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मावच्छिन्ननिरूपिताधिकरणतावत्क्षणध्वंसानधिकरणक्षणसम्बन्धस्यैवोत्पत्तिपदार्थत्वात् ; घट उत्पद्यत इत्यादौ घटत्वावच्छिन्ननिरूपिताधिकरणतावत्क्षणध्वंसानधिकरणक्षणसम्बन्धी घट इति बोधात् ॥

**यद्यपि**—स्वसमभिव्याहृतपदार्थतावच्छेदकेत्यनेन घटत्वादेरुपादानेऽपि तदवच्छिन्ननिरूपिताधिकरणतावत्क्षणध्वंसानधिकरणक्षणाप्रसिद्धिरस्त्येव ; घटादेः प्रवाहानादितया सर्वस्यापि क्षणस्य यत्किञ्चिद्घटाधिकरणत्वेन तादृशक्षणध्वंसाधिकरणत्वात् । **तथाऽपि**—सिद्धान्ते घटत्वस्य प्रतिव्यक्तिभिन्नतया उत्पत्त्यन्वयितावच्छेदकं यद्घटत्वं तदवच्छिन्नाधिकरणक्षणस्य पूर्वमभावादेव प्रसिद्धिसम्भवः । अत्र यत्किञ्चिद्धर्ममनिवेश्य स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मस्यैव विशिष्य निवेशार्थः आत्मा जायते मृज्जायत इत्यादिर्न व्यवहारः, आत्मत्वाद्यवच्छिन्नाधिकरणक्षणध्वंसानधिकरणक्षणाप्रसिद्धेः । एवं च—स्थूलसूक्ष्मशरीरकस्य ब्रह्मणः स्थूलत्वसूक्ष्मत्वाभ्यां कार्यकारणभावोपपत्तिः ; स्थूलरूपस्य निरुक्तजनिघटकत्वसम्भवात् । तथा च तदनन्यत्वाधिकरणे **भाष्यम्**—

> "संस्थानस्यासत उत्पत्तावसत्कार्यवादप्रसङ्ग इति चेदसत्कार्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्यवादप्रसङ्गः, उत्पत्तिमत्त्वे चानवस्था ; अस्माकं त्ववस्थानां पृथक्प्रतिपत्तिकार्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यम् ॥" —इति ॥

न च—उक्तरीत्या अवस्थायाः कालसम्बन्धित्वाभावेन पूर्वोत्तरावस्थद्रव्ययोरेवोपादानोपादेयभावसिद्धावपि तच्छरीरकब्रह्मणस्तदसिद्धितादवस्थ्यमिति—वाच्यम् ; एवमप्युपादानोपादेयशरीरतया ब्रह्मण उपादानोपादेयशब्दयोर्ब्रह्मणि मुख्यत्वोपपत्तेः । अत एव **शतदूषण्याम्**—विशिष्टस्योपादानत्वे प्राप्ताप्राप्तविवेकेन विशेषणयोरेवोपादानोपादेयभावपर्यवसानमित्याशङ्क्य, विशेष्यस्याप्युपादानादिशब्दवाच्यत्वप्रतिक्षेपस्त्वशक्य इति समाहितम् ॥ न च—अवस्थायां उत्पत्तिमत्त्वानङ्गीकारे उपादानलक्षणे अपृथक्सिद्धिसम्बन्धावच्छिन्नकार्यता-

निवेशनस्य व्यर्थतया ब्रह्मणो विशेषणांशं प्रति कारणत्वाभावेन 'न विलक्षणत्वात्' इत्यधिकरणस्यानुत्थितिरिरिति—वाच्यम्; यतो वेत्यादिश्रुत्युक्ताया विशेषणांशनिरूपितकारणताया निर्वाहार्थमेवापृथक्सिद्धिसम्बन्धावच्छिन्नकार्यतानिवेशावश्यकतयोक्ताधिकरणसङ्गतेः ॥

इदं तु बोध्यम् ॥ सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः स्थूलचिदचिद्विशिष्टं प्रति कारणत्वं नास्तीत्यस्य कोऽर्थः? स्थूलचिदचिद्विशिष्टस्य कार्यत्वाभावात्तन्निरूपितोपादानत्वं सूक्ष्मचिदचिद्विशिष्टस्य न सम्भवतीति; अथवा तस्य कार्यत्वेऽपि तं प्रत्येतस्योपादानत्वमप्रामाणिकमिति?

आद्येऽपि—स्थूलचिदचिद्विशिष्टस्य निषेध्यभूतं कार्यत्वमुत्पत्तिमत्त्वरूपं वा, प्रागभावप्रतियोगित्वरूपं वा? नाद्यः। विशिष्टाधिकरणताघटितोत्पत्तिमत्त्वस्य पूर्वमेवोपपादनात्। न च—स्ववृत्तिध्वंसप्रतियोगिक्षणावृत्तित्वरूपस्वपूर्वक्षणावृत्तित्वस्ववृत्तित्वोभयसम्बन्धेन क्षणविशिष्टत्वरूपोत्पत्तिमत्त्वमेव कार्यताप्रयोजकं, तच्च न स्थूलविशिष्टब्रह्मणि विशेष्यीभूतब्रह्मणः पूर्वक्षणवृत्तित्वेन विशिष्टे तस्मिन् तदभावासम्भवादिति—वाच्यम्; शुद्धवह्नित्वावच्छिन्नाभावप्रतियोगितावच्छेदकताया महानसीयत्वविशिष्टवह्नित्वापर्याप्तत्ववच्छुद्धब्रह्मपर्याप्ताधेयतायास्स्थूलविशिष्टापर्याप्ततया पूर्वक्षणनिरूपितवृत्तितायाः पर्याप्तिसम्बन्धावच्छिन्नाभावस्य तत्र सम्भवेन निरुक्तोत्पत्तिमत्त्वसम्भवात्॥ न द्वितीयः। घटत्वावस्था भविष्यति, घटो भविष्यतीति द्विविधव्यवहारनिर्वाहाय एकस्यैव प्रागभावस्य घटत्वावस्थापर्याप्ता तद्विशिष्टपर्याप्ता च प्रतियोगिता द्विविधा स्वीक्रियते। तथा स्थूलावस्था भविष्यति, स्थूलशरीरकं ब्रह्म भविष्यतीति द्विविधव्यवहारनिर्वाहाय प्रागभावनिरूपितप्रतियोगिताद्वयस्वीकारस्यावश्यकत्वात्, इच्छाविषयत्वस्य प्रागभावप्रतियोगित्वव्याप्यतया बहुस्यामितीच्छानुरोधेन बहुशरीरकब्रह्मणस्तदावश्यकत्वाच्च ॥

**नापि द्वितीयकल्पो युक्तः।** स्थूलविशिष्टस्य कार्यत्वे तादात्म्येन तत्सम्बन्धिनि पूर्वकालावच्छेदेन तादात्म्येन सम्बन्धित्वरूपोपादानत्वस्य सूक्ष्मविशिष्टे ब्रह्मणि सर्वसिद्धत्वेन तस्य कैरप्यपलपितुमशक्यत्वात् ॥ न च—तादात्म्येन कार्याधिकरणनिरूपितपूर्वकालावच्छिन्नतादात्म्यावच्छिन्नसम्बन्धितामात्रं नोपादानतारूपं, किं त्वनन्यथासिद्धत्वघटितं; तथा च स्थूलविशिष्टं प्रति सूक्ष्मविशिष्टस्यान्यथासिद्धत्वान्नोपादानत्वं, अन्यथा स्थूलविशिष्टाकाशादिकं प्रति सूक्ष्मविशिष्टस्य तस्योपादानताप्रसङ्गादिति—वाच्यम्; अन्यथासिद्धत्वस्यानुगताननतिप्रसक्तस्यैकस्य दुर्वचत्वेन यत्र यत्र प्रामाणिकानां न कारणत्वव्यवहारस्तत्तद्भेदकूटवत्त्वस्यैवानन्यथासिद्धत्वरूपतया 'यतो वा इमानि भूतानि जायन्ते' 'यद्भूतयोनिं परिपश्यन्ति धीराः' 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतिभिस्सूक्ष्मविशिष्टब्रह्मणः स्थूलविशिष्टं प्रति कारणत्वस्यैव व्यवहृतत्वेन तद्भेदस्योपादानताशरीरे अनिवेशात्, आकाशादेश्च तादृशव्यवहाराभावेन अन्यथासिद्धताया एव युक्तत्वात्तद्भेदस्योपादानतागर्भे प्रवेश्यत्वात्। एतेनावस्थानां कालसम्बन्धित्वस्य कार्यकारणभावस्य च सत्त्वेऽपि न क्षतिः, अवस्थानां कार्यकारणभावेऽपि तद्विशिष्टयोरपि तथात्वस्य दुरपह्नवत्वात्। ब्रह्मण उपादानत्वे निर्विकारत्वश्रुतिविरोधपरिहारः प्रागेव प्रतिपादितः। निरुक्तोपादानत्वं च "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यधिकरणे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिस्सूत्रकारैरेव स्थापितम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यात्' 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' इति श्रुतिसिद्धा॥ श्रुतेश्चायमर्थः—'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातं भवति' इति मैत्रायणीयश्रुत्यनुसारादुपादानप्रकरणानुगुण्याच्च श्रुतेन मतेन विज्ञातेनेत्यध्याहारात्, येन श्रुते-

नाश्रुतं श्रुतं भवति, येन मतेनामतं मतं भवति, येन विज्ञातेनाविज्ञात विज्ञातं भवतीत्यर्थः। श्रुतेन येनेति तृतीयार्थोऽभेदः श्रुतपदार्थे शाब्दबोधविशेषविषयेऽन्वेति; उक्तश्रुत्यनुरोधादेवेदं सर्वमित्यप्यध्याहार्यम्; परिदृश्यमानस्थूलचिदचिच्छरीरकमिति तदर्थः। अश्रुतमित्यस्य स्थूलरूपावच्छिन्नशाब्दबोधीयविषयताशून्यमित्यर्थः। तस्य सर्वपदार्थेऽन्वयात् स्थूलावस्थावच्छिन्नशाब्दज्ञानीयविषयताशून्याभिन्नं प्रत्यक्षविषयस्थूलचिदचिच्छरीरकं ब्रह्म शाब्दबोधीयविषयताविशिष्टजगन्निमित्ताभिन्नसूक्ष्मचिदचिद्वैशिष्ट्यावच्छिन्नशाब्दबोधीयविषयताश्रयो भवतीति वाक्यार्थः। अश्रुतं श्रुतमित्यस्य स्थूलशरीरकत्वेनाश्रुतं सूक्ष्मशरीरकत्वेन श्रुतमित्यर्थात्। पूर्वमश्रुतमिदानीं श्रुतमिति तु नार्थः; विशिष्टवैशिष्ट्यावगाहिबोधे विधेये उद्देश्यतावच्छेदकसमानकालीनत्वभाननियमस्य तिलकी कर्म कुर्वीतेत्यादाविवौत्सर्गिकत्वेन तद्बाधापत्तेः। तादृशनियमभङ्गभयादेव हि 'वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान् भवेत्' इत्यादावपुत्रपदं पुत्रविरोधिपुत्रेच्छापरं, नञः असुर इत्यादाविव विरोध्यर्थकत्वात्, सति पुत्रे तदिच्छाया असम्भवेन तद्विरोधित्वोपपत्तेः। एवं च स्थूलसूक्ष्मचिदचिद्विशिष्टब्रह्मरूपकार्यकारणयोरभेदलाभात् 'उत तमादेशमप्राक्ष्यः' इत्यादेशपदेन कारणत्वघटितनिमित्तत्वलाभेन कार्याभिन्नत्वे सति कारणत्वरूपमुपादानत्वमुक्तं भवति। न च—उक्तप्रतिज्ञाया अभेदमात्रलाभार्थत्वे येन सर्वमिदं भवतीत्यनेनैव कार्यकारणयोरभेदलाभात् अश्रुतं श्रुतमित्यादीनां वैयर्थ्यमिति—वाच्यम्; कार्याभिन्नत्वे सति कारणत्वरूपोपादानत्वस्य तावन्मात्रेण बोधनेऽपि सूक्ष्मचिदचिद्रूपकारणतावच्छेदकावच्छिन्नविषयतानवच्छेदकत्वरूपकारणतावच्छेदकभेदस्य, कार्यतावच्छेदके बोधनायाश्रुतमित्यादीनां सार्थकत्वात्। तद्बोधश्च कार्यकारणयोरत्यन्ताभेदे कारकव्यापारवैयर्थ्यमिति नैयायिकाशङ्कापरिहाराय; कारणताव-

च्छेदककार्यतावच्छेदकयोरुक्तपारिभाषिकभेदबोधने च कार्यतावच्छेदकविशिष्टस्य पूर्वमभावे तन्निष्पत्तये कारकव्यापारसार्थक्यमिति समाधानसूचनात् । तयोर्वास्तवभेदस्तु श्रुत्या बोधयितुमशक्यः, सूक्ष्मस्थूलचिदचिद्रूपयोस्तयोरवस्थाभेदेऽपि स्वरूपैक्येन भेदाभावात्, आत्मनि खल्वर इत्यादिमैत्रायणीयश्रुतावपि सप्तम्याः दाने कर्णसम इत्यादाविवाभेदार्थकत्वात्पूर्वोक्तार्थ एव पर्यवसानम् । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमित्यादिभाष्यस्याप्येकपदस्य सूक्ष्मचिदचिच्छरीरकब्रह्मपरतया, सर्वपदस्य स्थूलसर्वशरीरकपरतया, तृतीयाया अभेदार्थकतया च सूक्ष्मचिदचिच्छरीरकब्रह्मज्ञानाभिन्नस्थूलचिदचिच्छरीरकत्वोपलक्षितब्रह्मज्ञानं प्रतिज्ञातमित्यर्थः । तथा च स्वावच्छिन्नाभिन्नवृत्तित्वस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्व स्वावच्छिन्ननिरूपितकारणतावच्छेदकत्वैतत्त्रितयसम्बन्धेन धर्मविशिष्टधर्मवत्त्वं एकविज्ञानेन सर्वविज्ञानप्रतिज्ञार्थः। येनेत्यस्यादेशपदार्थनिमित्तकारणपरत्वेन कारणत्वस्यापि तद्घटकत्वात् । मृत्पिण्डादिदृष्टान्ते उक्तत्रितयसम्बन्धेन घटत्वविशिष्टमृत्पिण्डत्वमादायोक्तप्रतिज्ञानिर्वाहः, दार्ष्टान्तिके चेयं प्रतिज्ञा स्थूलसर्वशरीरकत्वविशिष्टसूक्ष्मशरीरकत्वमादायोपपादनीया । सा च सर्वस्य कार्यत्वमन्तरा न निर्वहतीति वियदादेः कार्यत्वोपपादकतया **प्रतिज्ञाहानिरव्यतिरेकादित्यादकमुपपन्नम्** । वियदादेः कार्यत्वानङ्गीकारे प्रतिज्ञाया अनिर्वाहात् । न च—नित्यविभूत्यादीनां अकार्यत्वेऽपि प्रतिज्ञाया अहानिवदाकाशस्याप्यकार्यत्वेऽपि प्रतिज्ञाया अहानिः प्रसज्यत इति—वाच्यम्; येनाश्रुतं श्रुतमित्यादावश्रुतादिशब्दानां नित्यविभूत्यादिव्यतिरिक्तपरत्वादुत्तरत्र सदेव सोम्येदमग्र आसीदितीदंकारगोचरस्यैव जगतस्सन्मात्रतापत्तिप्रतिपादनात् ॥

एवं—स्वज्ञानातिरिक्तसकलद्रव्यशरीरकत्वमपि तल्लक्षणं, शरीरपद-प्रवृत्तिनिमित्तभूत तल्लक्षणं च, तन्निष्ठज्ञानावच्छिन्नानुयोगिताकापृथ-क्सिद्धिसम्बन्धनिरूपितद्रव्यत्वसमानाधिकरणप्रतियोगित्वं तं प्रति शरीरत्वम्। एतज्जीवस्येदं शरीरमित्यादौ ज्ञानावच्छिन्नानुयोगिताका-पृथक्सिद्धिसम्बन्धनिरूपितद्रव्यत्वसमानाधिकरणप्रतियोगित्वावच्छिन्नं शरीरपदार्थः; तदेकदेशज्ञानावच्छिन्नानुयोगितायां षष्ठ्यन्तार्थस्यैत-ज्जीववृत्तित्वस्यान्वयात् ज्ञानावच्छिन्नैतज्जीवनिष्ठानुयोगिताकापृथ-क्सिद्धि निरूपितद्रव्यत्वसमानाधिकरणप्रतियोगित्वावच्छिन्नमिदमिति बोध.॥ यस्यात्मा शरीरं. यस्य पृथिवी शरीरमित्यादावपि बोध ऊह्यः। ईश्वरस्य तज्ज्ञानं शरीरं. चैत्रस्य तज्ज्ञानं शरीरमित्यादिव्यवहारवारणा-यानुयोगितायां ज्ञानावच्छिन्नत्वस्य, परिमाणमेतस्य शरीरमित्या-दिव्यवहारवारणाय प्रतियोगित्वे द्रव्यत्वसामानाधिकरण्यस्य प्रवेशः। श्रीभाष्योक्तलक्षणत्रयफलितमिदमेव शरीरपदप्रवृत्तिनिमित्तं, यथाश्रुते लक्षणत्रयस्य प्रवृत्तिनिमित्तत्वे शरीरशब्दस्य शक्तित्रयापत्त्या नाना-र्थकत्वापत्तेः, अन्यतमस्य प्रवृत्तिनिमित्तत्वे चाधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीति भाष्याविरोधात्॥ उक्तं च न्याय-सिद्धाञ्जने—

"अत्रेदं चतुर्थमपि भाष्यकाराभिप्रेतं लक्षणमुच्यते। यस्य चेत-नस्य यदवस्थमपृथक्सिद्धविशेषणं द्रव्यं तत्तस्य शरीरमित्या-धेयत्वविधेयत्वशेषत्वान्यपृथक्सिद्धेरेव अवान्तरभेदा इह विव-क्षिताः॥" —इति॥

तथा च—स्वज्ञानातिरिक्तद्रव्यत्वव्यापकप्रतियोगिताकापृथक्सिद्धि-सम्बन्धनिरूपितज्ञानावच्छिन्नानुयोगिताश्रयत्वं लक्षणं फलितं, सर्व-शरीरकत्वादेव तत्तद्वाचिपदेन ब्रह्मणस्सामानाधिकरण्योपपत्त्या 'सर्वं खल्विदं ब्रह्म', 'सदेव सोम्येदमग्र आसीत्', 'तत्त्वमसि' इत्यादि-

सामानाधिकरण्यनिर्वाहः। शरीरवाचिशब्दानां शरीरिणि शक्तेर्भाष्यादिसिद्धत्वात् ॥

अत्र वदन्ति—

सर्वं खल्विदं ब्रह्मेत्यादौ सर्वपदस्य तच्छरीरकत्वावच्छिन्ने शक्त्यङ्गीकारापेक्षया सर्वपदार्थस्य ब्रह्मण्यपृथक्सिद्धिसम्बन्धेनान्वयाङ्गीकार एव युक्तः; अभेदापृथक्सिद्ध्यन्यतरसम्बन्धावच्छिन्नप्रकारताकबोधजनकत्वस्यैव सामानाधिकरण्यरूपतया अपृथक्सिद्धिसम्बन्धेनान्वयेऽपि सामानाधिकरण्यनिर्वाहात्। एवं च नीलादिपदानां गुणमात्रवाचकत्वेऽपि न क्षतिः, अपृथक्सिद्धिसम्बन्धमादायैव नीलो घट इत्यादिसामानाधिकरण्योपपत्तेः। एवं तत्त्वमसीत्यत्र त्वंपदस्य श्वेतकेतुमात्रपरत्वेऽपि न क्षतिः; तत्पदार्थस्य ब्रह्मणस्तत्रापृथक्सिद्धिसम्बन्धेनान्वयसम्भवात्, सर्वं खल्विदं ब्रह्मेत्यत्र सर्वपदस्य तच्छरीरकपरमात्मपरत्वे इदंपदार्थस्य प्रत्यक्षविषयस्य तदेकदेशे सर्वस्मिन्नन्वयस्य वक्तव्यत्वेन व्युत्पत्तिविरोधात्। संयोगावच्छिन्नक्रियारूपगमनपदार्थैकदेशसंयोगे गुणाभेदान्वयतात्पर्येण गमनं गुण इत्यादिव्यवहारवारणायाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति पदजन्योपस्थितेर्विशेष्यतासम्बन्धेन हेतुत्वात्। एवं तत्त्वमसीत्यादौ त्वंपदस्य श्वेतकेतुशरीरकपरमात्मपरत्वे श्वेतकेतुपदस्य श्वेतकेतुमात्रपरत्वे सम्बोधनस्थलसिद्धस्य युष्मच्छब्दसम्बोध्यवाचकपदयोस्समानार्थकत्वनियमस्य व्याघातः। न च—चैत्र त्वत्पितेत्यादौ युष्मच्छब्दस्य सम्बन्धिनि लाक्षणिकत्वेन तत्र व्यभिचारात्तादृशनियम एवासिद्ध इति—वाच्यम्; समासस्थले तादृशनियमाभावेऽपि व्यासस्थले तादृशनियमे बाधकविरहात्। तत्र सम्बोध्यवाचकश्वेतकेतुपदस्यापि तच्छरीरकपरमात्मपरत्वे प्रकृतवाक्यजन्यशाब्दबोधाश्रयत्वेनेच्छाविषयरूपविभक्त्यर्थस्य प्रकृत्यर्थे परमात्मन्यन्वयो न सम्भवति;

षक्तुरुद्दालकस्य सर्वज्ञं परमात्मानं प्रति बुबोधयिषाविरहात्, भगवांस्त्वमेव तद्ब्रवीत्विति प्रष्टारं श्वेतकेतुं प्रत्येव बुबोधयिषोत्पत्तेः। परमात्मन एव प्रष्टृत्वे प्रश्नं प्रति जिज्ञासायास्तां प्रति चाज्ञानस्य कारणतया परमात्मनोऽज्ञत्वमवर्जनीयं स्यात्। श्वेतकेतुपदस्य तच्छरीरकपरमात्मपरत्वे तदेकदेशश्वेतकेतौ विभक्त्यर्थान्वयस्तु न सम्भवति विभक्त्यर्थसम्बोध्यत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति प्रकृतिजन्योपस्थितेर्विशेष्यतासम्बन्धेन हेतुत्वात्। अन्यथा पुत्रीं प्रति त्वत्पतिस्सुन्दर इति वक्तव्ये जामातस्त्वं सुन्दरोऽसीति वाक्यप्रयोगापत्तेः; पुत्रीपतिरूपजामातृपदार्थैकदेशपुत्र्यां तदन्वयसम्भवात्। एवं प्रतर्दनविद्यायां 'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्' इत्यारभ्य, 'प्राणोऽस्मि प्रज्ञात्मा, तं मामायुरमृतमित्युपास्व' इत्यस्यास्मच्छब्दार्थेन्द्रजीवविशेष्यकापृथक्सिद्धिसम्बन्धावच्छिन्नप्राणपदार्थपरमात्मप्रकारताकोपासनस्य विधानपरत्वाङ्गीकारान्नानुपपत्तिः; अन्यथा मामित्यस्य तच्छरीरकपरमात्मपरत्वे त्वाष्ट्रमहनमित्यादावध्याहृतस्याहंपदस्य जीवपरत्वावश्यकतया वैरूप्यापत्तेः। शरीरवाचकानां शरीरिपर्यन्तत्वमित्यादिभाष्यस्य शरीरिविशेष्यकबोधजनकत्वमित्यर्थाङ्गीकारात् शरीरशरीरिभावरूपापृथक्सिद्धेस्संसर्गत्वेऽपि न विरोधः; अन्विताभिधानपक्षे भाष्यकृतां निर्भरस्य वक्ष्यमाणत्वेन संसर्गांशेऽपि शक्तिरस्तीत्यभिप्रायाद्वा ॥

—इति ॥

वस्तुतस्तु—इतरपदार्थाभेदान्वयबोधे विभक्त्यसम्बोध्यत्वादिबोधे च मुख्यविशेष्यतासम्बन्धेन पदजन्योपस्थितेर्हेतुत्वमित्यत्रापृथक्सिद्धिसम्बन्धातिरिक्तसम्बन्धावच्छिन्नप्रकारताभिन्नत्वस्य मुख्यत्वरूपत्वात्सर्वं खल्विदं ब्रह्मेत्यादौ सर्वपदस्य तच्छरीरकपरत्वेऽपि इदंपदार्थस्य तदेकदेशे तत्त्वमसि श्वेतकेताविव्यत्र त्वंपदस्य विशिष्टपरत्वेऽपि

देकदेशे सम्बोध्यत्वस्य चान्वयो न विरुद्धः । एवं—राज्ञःपुरुष त्यादौ यथा स्वत्वस्य संसर्गत्वापेक्षया षष्ठ्यास्तत्र शक्तिस्वीकारे गौरवं, यथा च जानातीत्यादावाश्रयत्वस्य संसर्गत्वापेक्षया आख्या- र्थतापक्षे लाघवं, तथाऽत्राप्यपृथक्सिद्धेस्संसर्गत्वापेक्षया प्रकारत्वे गौरवं सम्भवतीति शरीरवाचकानां शरीरिणि शक्तिरेव युक्तेति रुसामानाधिकरण्यवादे प्रपञ्चितम् ॥

इत्यनन्तार्यकृतौ सिद्धान्तसिद्धाञ्जने

ईश्वरपरिच्छेदस्तृतीयः ॥

---

अथ नित्यविभूतिर्निरूप्यते ॥

रजोरहितत्वे सति तमोरहितत्वे सति वा सत्त्ववत्त्वं, स्वयं- प्रकाशत्वे सति सत्त्ववत्त्वं वा, चेतनधर्मभूतज्ञानान्यत्वे सति स्वयं प्रकाशत्वं, धर्मभूतज्ञानान्यत्वे सति पराक्त्वं वा तल्लक्षणम् । लक्षणत्रयेऽपि प्रकृतिवारणाय सत्यन्तं, जीवादिवारणाय विशेष्यम्; चतुर्थलक्षणे जीवेश्वरधर्मभूतज्ञानवारणाय सत्यन्तं, कालवारणाय विशेष्यम्। अव्यावृत्तिः पञ्चमेऽप्यूह्या। न्यायसिद्धाञ्जने तु—निश्शेषा- विद्यानिवृत्तिदेशविजातीयान्यत्वमपि तल्लक्षणमुक्तम्। निश्शेषाविद्या- नाशोत्पत्तिं प्रत्याधेयतासम्बन्धेनावच्छेदकीभूतो यो देशस्तद्वृत्तिद्रव्य- विभाजकोपाधिमद्भिन्नत्वे सति द्रव्यत्वं नित्यविभूतिलक्षणमिति तदर्थः। न च—तादृशदेशवृत्तिद्रव्यविभाजकोपाधिमत्त्वमेव लक्षणं युक्त, द्रव्यविभाजकोपाधिनिवेशाच्च न भगवद्विग्रहादावव्याप्तिरित्यभावद्वय- निवेशो व्यर्थ इति—वाच्यम्। तदवृत्तिद्रव्यविभाजकोपाधिशून्यत्व- घटितलक्षणे तद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वस्यानिविष्टत्वेन वैयर्थ्या-

भावात्, प्रकृतित्वकालत्वाद्युपाधिपञ्चकविषयकमेकं ज्ञानं तद्व्यक्तित्वेन निवेश्य ताद्दशज्ञानव्यक्त्यवच्छिन्नावच्छेदकताकभेदनिवेशवैयर्थ्य-शङ्काया एवाप्रसक्तेश्च । न च–रजोरहितत्वं तमोरहितत्वं च नित्य-विभूतावसिद्धमिति तद्घटितलक्षणयोरव्याप्तिरिति–वाच्यम् ; 'आदित्य-वर्णं तमस परस्तात्', 'ते ह नाकं महिमानस्सचन्ते', 'क्षयन्तम-स्य रजस. पराके' इत्यादिभिस्तयोस्सिद्धेः ; तमस इत्यस्य तमो-गुणविशिष्टपरतया परस्तादित्यस्य भिन्नदेशवृत्तित्वपरतया, आदित्य-वर्णे भगवद्विग्रहे तमोगुणवद्भिन्नवृत्तित्वबोधनेन तदधिकरणीभूतनित्य-विभूतेस्तमोगुणवद्भिन्नत्वस्यावश्यकत्वात् । न च–ब्रह्मस्वरूपस्य तमो-गुणवद्भिन्नत्वपरा उक्तश्रुतिः, आदित्यवर्णमित्यस्य स्वप्रकाशमित्यर्था-दिति–वाच्यम्; तथा सत्यादित्यवर्णमित्यस्यास्वारस्यापत्तेः, अस्ताति-प्रत्ययस्य वृत्तित्वपरतया ताद्दशगुणवद्भिन्नत्वमात्रबोधासम्भवाच्च ॥

**यद्यपि**—"दिक्छब्देभ्यस्सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्व-स्तातिः" इत्यस्तातिप्रत्ययस्य प्रथमान्तादपि विधानसत्त्वान्निरर्थकत्व-मावश्यकमेव । पुरस्ताद्वसतिः पुरस्तादागतः पुरस्ताद्रमणीय इति तदुदा-हरणात्, 'स एवाधस्तात्स उपरिष्टात्स पश्चात्सपुरस्तात्स दक्षिणतस्स उत्तरतस्स एवेदं सर्वम्' इति भूमविद्यायां स एवेदं सर्वमित्युप-संहारानुरोधेन स एवाधस्तादित्यादेरधोदेशस्स एवेत्यर्थाङ्गीकारावश्य-कत्वात् । तथा च प्रकृतेऽपि तमसः परत्वं ब्रह्मण एव बुध्यते । **तथाऽपि**–अधश्शब्दस्यार्थान्तरेऽनुशासनप्रयोगयोस्सत्त्वेऽप्यर्थान्तरा-पेक्षया आनन्तर्यरूपार्थे स्वारस्यवदस्तातिप्रत्ययान्तस्य किञ्चिद्देश-वृत्तित्वपरत्व एव स्वारस्यात्, गवादिशब्दस्यानेकार्थत्वेऽपि बाधक-विरहे सास्नावद्व्यक्तेः परित्यागादर्शनात्तमसः परस्तादित्यस्य तद्देश-वृत्तित्वपरत्वमेव युक्तम् । एवं क्षयन्तमस्येत्यादेः रजोगुणवद्भिन्नदेशे वसन्तमित्यर्थः । न च–जापकोपाख्याने मुक्तप्राप्यस्थानस्य 'द्वाभ्यां

मुक्तं, त्रिभिर्मुक्तम्' इति गुणत्रयविरहबोधनात्तत्र सत्त्ववत्त्वमपि न सम्भवतीति—वाच्यम् ;

"शुद्धसत्त्वमयं दिव्यमक्षरं ब्रह्मणः पदम् ।
अथातो ब्रह्मणो लोकः शुद्धसत्त्वस्सनातनः ॥"—

इत्यादि पाद्मपुराणवचनैस्तादृशलोके सत्त्वसिद्धौ उक्तवचनस्य त्रित्वावच्छिन्नावच्छेदकताकभेदपरतया घटवति घटपटोभयत्वावच्छिन्नावच्छेदकताकभेदनदविरोधात्, 'स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणम्' इति प्रधानगतसत्त्वस्य विजातीयत्वेन तद्भेदस्याबाधाच्च ॥

यत्तु—'तदक्षरे परमे व्योमन्' इत्यक्षरशब्दप्रयोगात्, 'आदित्यवर्णं तमसः परस्तात्' इति तमःपरत्वोक्त्या चाव्यक्ततमसोरन्तरालेऽधीतः प्रकृतिपरिणामविशेष एव मुक्तानामीश्वरस्य च भोगस्थानतया आम्नायते ; शुद्धसत्त्वव्यपदेशस्य च रजस्तमसोरभिभूततयोपपत्तेरतिरिक्ताप्राकृतस्थानकल्पने गौरवात् । तत्रापि पृथिव्यादिभेदाभ्युपगमेन प्राकृतत्वज्ञानाच्च, अन्यथा तत्त्वसङ्ख्याधिक्यप्रसङ्गात् ; 'तं षड्विंशकमित्याहुस्सप्तविंशमथापरे' इति श्रुत्या कालस्यान्तर्भावानन्तर्भावाभिप्रायेण षड्विंशत्वसप्तविंशत्वयोः प्रतिपादनेन नित्यविभूतेरतिरिक्तत्वे तादृशश्रुतिविरोधात् । एवं 'सदेव सोम्येदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्', 'नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यत्' इत्यादि श्रुतिविरोधश्च ; एकपदस्य समानकालीनविभिन्नव्यवहारजनकजन्यधर्माभावरूपनामरूपविभागाभावपरत्वात्, स्वाप्रयोज्यव्यवहारप्रयोजकत्वकालिकविशेषणत्वैतदुभयसम्बन्धेन जन्यधर्मविशिष्टजन्यधर्माभावस्यैकपदनिकृष्टार्थत्वात् । महत्त्वादिविशिष्टप्रकृतिगतसततपरिणामरूपाविशदावस्थामादायासम्भववारणाय कालिकसम्बन्धनिवेशः ; चित्त्वाचित्त्वादि

वारणाय जन्यत्वनिवेशः; अभावश्च स्वाश्रयापृथक्सिद्धिसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, तेन सम्बन्धान्तरावच्छिन्नतादृशधर्माभावस्येदानीमपि सत्त्वेऽपि न क्षतिः, 'नित्यविभूतेरतिरिक्तद्रव्यात्मिकायास्तद्दशायामपि सत्त्वे च तद्गतानन्तधर्माणमुक्तसम्बन्धेन प्रलयकालेऽपि ब्रह्मणि सत्त्वेनैकत्वव्याघातात् । लीलाविभूत्यपेक्षयानित्यविभूतेस्त्रिगुणत्वेन तत्सत्तादशायां लीलाविभूत्यभावादेकत्वव्यवहारसमर्थनस्य मन्दत्वात् । वियदादेरेकैकस्याकार्यत्वे प्रतिज्ञाहानिमुद्भावयतां सूत्रकृतां तादृशानेकतत्त्वात्मिकाया अतिरिक्ताया नित्यविभूतेस्सत्त्वे तत्र प्रतिज्ञाहानेरवारणस्यानुचितत्वात् । एवं—'एतस्मादात्मनस्सर्वे लोकास्सर्वे देवास्सर्वाणि भूतानि व्युचरन्ति' इति श्रुतेस्सर्वलोकोत्पत्तिप्रतिपादिकाया विरोधश्च । तस्मात्प्रकृतेरक्षरत्वावस्थापन्नाया एव नित्यविभूतिरूपेण परिणामः; 'तदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्' इत्यादावव्यक्तशब्दोऽपि तद्धेतुभूताक्षरपर एव, तमसः परस्तादित्युक्तेरतो न विरोधः—इति यादवप्रकाशमतम् ॥
तत्र—'अपुनर्भवाय कोशं भिनत्ति', 'कोशं भित्वा शीर्षकपालं भिनत्ति' इत्युपक्रम्य, 'पृथिवी भिनत्त्यापो भिनत्त्यव्यक्तमक्षरं भिनत्ति मृत्युं भिनत्ति' इति सुबालश्रुत्या ब्रह्माण्डतदावरणाद्बहिर्भूतस्य तल्लोकस्य अक्षरभेदनानन्तरं प्राप्यत्वेनाभिहितस्याक्षरात्मकत्वासम्भवात्, शीर्षकपालं भिनत्तीत्यभिधाय पृथिव्यादिभेदनस्याभिहितत्वेन शरीरानुप्रविष्टानामेव पृथिव्यादीनामव्यक्ताक्षरतमसां च भेदनं तत्राभिधीयते; नावरणरूपाणामिति वक्तुमशक्यत्वात् । पाद्मपुराणोत्तरखण्डे—

"त्रिपाद्व्याप्तिः परं धाम पादोऽस्येहाभवत्पुनः ।
त्रिपाद्विभूतिर्नित्या स्यादनित्यं पादमैश्वरम् ॥
नित्यं तद्रूपमीशस्य परं धाम्नि स्थितं शिवम् ।
अमृतं शाश्वतं दिव्यं सदा यौवनमास्थितम् ॥"—

इत्यारभ्य, सप्तावरणावेष्टिताण्डकटाहादिवृत्तान्तं प्रकृत्यादिस्वरूपं च विस्तरशोऽभिधाय;

"प्रधानपरमव्योम्नोरन्तरे विरजा नदी ।
वेदाङ्गस्वेदजनिततोयैर्विस्राविता नदी ॥
तस्याः पारे परव्योम्नि त्रिपाद्भूतिस्सनातनी ।
अमृतं शाश्वतं नित्यमनन्तं परमं पदम् ॥
शुद्धसत्त्वमयं दिव्यमक्षरं ब्रह्मणः पदम् ।
अनेककोटिसाहस्राग्निवर्चं ध्रुवमव्ययम् ॥
सर्ववेदमयं शुभ्रं सर्गप्रलयवर्जितम् ॥"—

इत्यादिना वैकुण्ठलोकस्य नित्यत्वप्रकृत्युत्तीर्णत्वयोरभिधानेन तस्य प्रकृतिपरिणामत्वासम्भवात् । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इति श्रुत्या, 'पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतम्' इत्यादौ च प्रलये भगवद्देहस्य साक्षात् स्थित्युक्त्या नित्यविग्रहावश्यकत्वेन तद्गताकुञ्चनप्रसारणादिजन्यधर्मद्वयमादाय निरुक्तैकत्वानुपपत्तिवारणाय शुद्धसत्त्वावृत्तिविभिन्नव्यवहारजनकानेकधर्माभावस्यैवैकत्वरूपत्वावश्यकतया एकमेवेत्यादिश्रुतेरविरोधात्, बहुस्यामित्युत्तरवाक्यगतबहुत्वविरोध्येकत्वस्यैव तत्र विवक्षितत्वात्, नित्यविभूतौ बहुत्वस्य सर्वदा सिद्धत्वेन इच्छाविषयत्वासम्भवेन प्रकृतिगतबहुत्वस्यैवेच्छाविषयतायाः वक्तव्यत्वेनैकत्वस्यापि तत्प्रतिकोटिभूतस्य प्रकृतिगतधर्ममादायैव वक्तुमुचितत्वात् ॥ न च—नित्यविभूतिमादाय बहुशरीरकत्वस्य सर्वदा सत्त्वे इच्छाविषयत्वानुपपत्त्या तद्दशायां तदपि नास्तीति निश्चीयत इति—वाच्यम्; तेजोऽप्सृष्ट्यनन्तरमपि 'बह्व्यः स्याम प्रजायेमहि' इति सङ्कल्पस्य श्रुतिसिद्धत्वेन स्रक्ष्यमाणगतबहुत्वस्यैवेच्छाविषयताया आवश्यकत्वेन नित्यविभूतिसत्त्वेऽप्यविरोधात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अपि न विरोधः, यथा सोम्यैकेन मृ-

त्पिण्डेनेति दृष्टान्ते सर्वं मृण्मयमित्यनेन यथैकमृत्पिण्डकार्याणामेव ग्रहणं, तथा ब्रह्मकार्याणामेव तत्र ग्रहणेऽपि नित्यत्वेन सिद्धायाः नित्यविभूतेरग्रहणे तद्विरोधाप्रसक्त्या सूत्रकारैस्तच्छङ्कापरिहारयोरकरणोपपत्तेः ॥ महाभारते—

"अभयं चानिमित्तं च न च क्लेशभयावृतम् ।
द्वाभ्यां मुक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च ॥
अप्रधर्षं महानन्दं विशोकं विगतक्लमम् ।
ईदृशं परमं स्थानं निराशास्ते च तादृशाः ॥
कालं स पचते तत्र न कालस्तत्र वै प्रभुः ।"

आरण्यपर्वणि—

"योगसिद्धा महात्मानस्तमोमोहविवर्जिताः ।
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ॥
स्थानमेतन्महाराज ध्रुवमक्षरमव्ययम् ॥"—

इत्यादिभिर्बहुधा नित्यविभूतेस्सूत्रकारैरेव प्रपञ्चितत्वेन तत्र तेषामनभ्युपगमस्य वक्तुमशक्यत्वात् ॥

अथैवं—नैयायिकमतनिरासावसरे "रूपादिमत्त्वाच्च विपर्ययो दर्शनात्", "उभयथा च दोषात्" इत्याभ्यां सूत्राभ्यां परमाणूनां रूपादिमत्त्वे अनित्यत्वप्रसङ्गस्य तदभावे च द्व्यणुकादौ कारणगुणपूर्वकगुणानुत्पत्त्या जगतो नीरूपत्वापादनरूपदूषणस्य च अभिधानासङ्गतिः, नित्यविभूतेर्भगवद्विग्रहस्य च नित्यत्वाभ्युपगमे रूपस्यानित्यत्वव्याप्यताभङ्गात् । एवं—"प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इति सूत्रस्य चासङ्गतिः; तत्र ब्रह्मणः शिरःपक्षपुच्छाद्यवयवभेदवत्त्वे उपचयापचययोरापादनान्नित्यविग्रहसत्त्वे च तत्र शिरःपक्षादिसत्त्वेऽप्युपचयापचययोरभावेन सावयवत्वस्योपचयापचयव्याप्यत्वाभावेनोक्तापादनासम्भवात्—इति चेन्न ॥ स्वमते रूपादिमत्त्व-

स्यानित्यत्वव्याप्यताविरहेऽपि तन्मते तद्व्याप्यत्वाविघातेन तन्मतसिद्धार्थमादाय तन्मते दूषणाभिधानस्योपपत्तेः, "न च पर्यायादप्यविरोधो विकारादिभ्यः" इति सूत्रे आत्मनस्स्वमते सङ्कोचविकासरूपावस्थाविरहेऽपि जैनमतसिद्धार्थमादाय तन्मते दूषणाभिधानदर्शनात्; प्रियशिरस्त्वाद्यप्राप्तिरित्यत्र च न कालभेदेन वृद्धिह्रासपरावुपचयापचयशब्दौ, किं तु प्रकोष्ठाङ्गुल्योरिव कालभेदानपेक्षपीनत्वकृशत्वरूपोपचयापचयपराविति सावयवत्वस्य तादृशोपचयापचयव्याप्यत्वे व्यभिचारविरहाद्ब्रह्मणस्सावयवत्वे प्रदेशभेदेन स्थूलत्वकृशत्वयोरेवापादनस्याभिमतत्वात्, अस्थूलमनण्विति श्रुतिविरोधेन तत्रेष्टापत्त्यसम्भवात्। स्पष्टं चेदं टीकायां। तथा च—अप्राकृतलोकस्सूत्रकृदनुमत एव। अक्षरशब्दस्वारस्यादपि न तल्लोकस्य प्रकृतिपरिणामरूपत्वं; न क्षरतीत्यक्षरमिति योगार्थस्य नित्यविभूतौ सम्भवात्, लोकत्वरूपावस्थाविशिष्टस्यापि प्रलयादौ नाशाभावेन नाशप्रतियोगितापर्याप्त्यनधिकरणत्वस्य तादृशलोकत्वविशिष्टे सत्त्वेनाक्षरशब्दस्य तत्रैव स्वारस्यात्, "अक्षरमम्बरान्तधृतेः" इत्यत्र योगमादायैवाक्षरशब्दस्य ब्रह्मपरताव्यवस्थापनात्तद्वदिहापि सम्भवात्, परमे व्योमन्निति समभिव्याहारस्य प्रकृतिपरिणामपरत्वे बाधकस्य सत्त्वाच्च॥

न च नित्यविभूतेरतिरिक्तत्वे सप्तविंशमथापर इत्युक्ततत्त्वसङ्ख्याविरोधः, नित्यविभूतेरनङ्गीकारेऽपि गुणक्रियादिकमादाय तत्त्वसङ्ख्याविरोधस्य जागरूकत्वात्, द्रव्याणामेव परिगणनमित्यङ्गीकारेऽपि धर्मभूतज्ञानस्य द्रव्यस्याधिकस्य सत्त्वेन तद्विरोधस्य दुष्परिहरत्वात्॥

न च—जीवस्य धर्मभूतज्ञानविशिष्टत्वेन तत्त्वपङ्क्तौ निवेशाद्विशेष्याणामेव परिगणनाद्धर्मभूतज्ञानस्य विशेषणत्वान्न सङ्ख्याविरोध इति—वाच्यम्; तथा सति नित्यविभूतेरपीश्वरविशेषणतयैव प्रवेशेन तद्विरोधाभावात्॥

सा च विभूतिर्ज्ञानानन्दात्मिका, 'ज्ञानानन्दमया लोकाः' इत्यादि प्रमाणात् । **रहस्याम्नाये** 'किमात्मिका भगवतो व्यक्तिः' इति भगवद्विग्रहस्य प्रकारे पृष्टे—'यदात्मको भगवांस्तदात्मिका व्यक्तिः'; 'किमात्मको भगवान्' 'ज्ञानात्मको भगवान् शक्त्यात्मको बलात्मक ऐश्वर्यात्मक.' इत्याद्युत्तरदर्शनेन दिव्यमङ्गलविग्रहरूपस्य शुद्धसत्त्वद्रव्यस्य ज्ञानात्मकत्वसिद्धेश्च ॥

अत्र केचित्—उक्तरहस्याम्नायानुरोधाद्विग्रहस्य ज्ञानात्मकत्वस्वीकारे षाड्गुण्यरूपत्वमपि दुर्वारं; तस्मिन्नेव शास्त्रे सहपाठात्, इष्टापत्तौ च चेतनत्वप्रसङ्गात् । न च—तत्रापीष्टापत्तिरिति—वाच्यम्, जीवेश्वरविकल्पबाधात्, षाड्गुण्यात्मकत्वस्यौपचारिकत्वे च ज्ञानात्मकत्वेऽपि तथात्वस्य दुर्वारत्वात् । अतस्त्रिगुणविभूतिरिव नित्यविभूतिरपि जडैव, निश्शेषाविद्यानिवृत्तिपूर्वकनिरवधिकज्ञानविकासस्थानतया ज्ञानत्वोपचार इति युक्तम् । विफलं च नित्यविभूतेस्स्वयंप्रकाशत्वकल्पनं, नित्यमुक्तेश्वराणां सर्वविषयकसाक्षात्कारसत्त्वेन तेषां तेनैव तद्भानात्, बद्धानां च शास्त्रादिजन्यपरोक्षज्ञानेन तद्भानात् ॥ न चैवं—जीवस्वरूपस्यापि स्वप्रकाशत्वं न स्यात्, तस्यापि धर्मभूतज्ञानेनैव भानोपपत्तेरिति—वाच्यम्; सुषुप्त्यवस्थायां धर्मभूतज्ञानविरहेऽप्यात्मनो भासमानतया स्वप्रकाशताया युक्तत्वेऽपि नित्यविभूतेः क्वापि ज्ञानान्तरविगमदशायां मानाभावेन तत्कल्पनस्यायुक्तत्वात् । एवं नित्यविभूतेरनन्तानां गोपुरमण्टपप्रासादादीनां ज्ञानपरिणामत्वाभ्युपगमे अल्पीयसां लीलाविभूतिस्थानां तेषां ज्ञानपरिणामत्वस्य कैमुतिकन्यायेनाङ्गीकर्तुं शक्यतया योगाचारमतनिराकरणानुपपत्तिः; ततश्च तन्मतनिराकरणार्थं प्रवृत्तस्य यत्र ज्ञानत्वं तत्र स्वाभिन्नार्थविषयकत्वमिति व्याप्तिप्रतिपादनपरस्य "नाभाव उपलब्धेः" इति सूत्रस्य, यत्र स्वाभिन्नार्थविषयकत्वाभावः तत्र ज्ञानत्वाभाव इति व्यतिरेकव्याप्ति-

प्रतिपादनपरस्य "न भावोऽनुपलब्धेः" इति सूत्रस्य चासङ्गतिः ; नित्यविभूतौ ज्ञानत्वसत्त्वेऽपि स्वभिन्नार्थविषयकत्वाभावेन व्याप्तिद्वयेऽपि व्यभिचारात्। जागरितप्रत्ययः स्वभिन्नार्थशून्यः, ज्ञानत्वात्, स्वाप्नज्ञानवत्—इत्यनुमाने बाधितत्वादिदोषजन्यत्वरूपोपाधिप्रतिपादनपरस्य "वैधर्म्याच्च न स्वप्नादिवत्" इत्यस्य चासङ्गतिः, नित्यविभूत्यात्मकज्ञाने स्वभिन्नार्थशून्यत्वसत्त्वेऽपि बाधितत्वादेरभावेन साध्यव्यापकताभङ्गात्। एवं नित्यविभूतेरजडत्व एव प्रथमसूत्रटीकास्वारस्यम्। तथा च–**'संविन्नाम काचिन्निराश्रया निर्विषया वा अत्यन्तानुपलब्धेर्न सम्भवति'** इति भाष्यप्रतीकमुपादाय टीका—

"ननु कथं विषयाश्रयशून्यज्ञानाभावः, स्वरूपज्ञानं विषयाश्रयशून्यं त्वन्मते। उच्यते। स्थविष्ठमिदं चोद्यं, किं त्वया ज्ञातुरेव ज्ञानशब्दवाच्यस्याजडत्वनित्यत्वादिकं विषयाश्रयशून्यत्व नित्यत्वादिक च साध्यते, तत्सिद्धसाधनम्। यदि ज्ञातृव्यतिरिक्तस्य ज्ञानस्य, तर्हि ज्ञातृव्यतिरिक्तं विषयाश्रयरहितं ज्ञानं शून्यमिति ब्रूमः, ज्ञातृज्ञेयतदवच्छिन्नज्ञानस्वरूपव्यतिरिक्तं ज्ञानमनुपलम्भनिरस्तम्॥" —इति॥

तस्मान्नित्यविभूतिर्जडैव॥ —इति वदन्ति॥

**परे** तु—नित्यविभूतिरजडैव; उक्तरहस्याम्नायाद्यनुरोधात्, शक्त्याद्यात्मकत्वादिवत् ज्ञानात्मकत्वस्य मुख्यत्वे बाधकविरहात्, 'स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणम्' इत्युपबृंहणानुरोधाच्च, उक्तरीत्या प्रमाणसिद्धे स्वप्रकाशत्वे तद्वैयर्थ्यस्याकिञ्चित्करत्वात्; अन्यथा धर्मभूतज्ञानेनैव सर्वकार्योत्पत्तावात्मकल्पनस्य व्यर्थतया तस्याप्यप्रसिद्धिप्रसङ्गात्; आत्मनि व्यभिचारवारणाय प्रमाणजन्यज्ञानत्वं यत्र तत्र स्वभिन्नार्थविषयत्वमित्यादिव्याप्तिस्वीकारेण नित्य-

विभूतौ व्यभिचाराप्रसक्त्या उक्तपूर्वविरोधविरहात्, प्रमाणतदाभासान्यतरजन्यज्ञानत्वविशिष्टमाध्यव्यापकत्वस्य बाधितत्वरूपोपाधौ सत्त्वेन वैधर्म्याच्चेत्यस्यापि न विरोधः ॥ —इत्याहुः ॥

सा च पञ्चोपनिपत्प्रतिपाद्यानि पञ्च महाभूतानि एकादशेन्द्रियाणीति षोडशतत्त्वात्मिका ॥ * * * *

इति

श्रीशेषार्यवंशमुक्ताफलस्य श्रीयादवाद्रिनिवासरसिकस्य श्रीमदनन्तार्यवर्यस्य कृतिषु

**सिद्धान्तसिद्धाञ्जने**

नित्यविभूतिपरिच्छेदो यावत्सम्पादितः ॥

॥ श्रीः ॥